॥ श्रीः ॥

Apadeva's

# Mimamsa Nyaya Prakasa

WITH

# Mimamsa Sudhaswada

BY

TARKARNAVA PANDITARATNAM

T. VIRARAGHAVACHARYA SIROMANI

*Senior Professor*

SRI VENKATESWARA SANSKRIT COLLEGE

TIRUPATI.

Printed at

**The Srinivasa Press**

TIRUVADI-Tanjore Dt.



**1935**

*Price* ] [ *Rs. Four*

*For Students Rs. Three*

॥ श्रीः ॥

आपदेवप्रणीतः

# मीमांसान्यायप्रकाशः ॥

तस्य व्याख्यानं

# मीमांसासुधास्वादः ॥

पण्डितरत्नेन तर्कार्णवेन शिरोमणिना
उत्तमूर्
ति· वीरराघवाचार्येण
विरचितः ।

तञ्जापुरसन्निकृष्टे पञ्चनदे
श्रीनिवास मुद्रणालये
कृतमिदं मुद्रणम् ।



1935

मूल्यम् ] [ रू· ४—०—०

विद्यार्थिनां कृते त्रीणि रूप्यकाणि ।

॥ श्रीः ॥

# ग्रन्थकर्तुर्विज्ञप्तिः ॥



सर्वधर्ममूलभूतस्य समस्ततत्त्वबोधहेतोरनवद्यस्यानादिनिधनस्याम्नायस्यार्थविचारात्मनि महति मीमांसाशास्त्रे परमर्षिजैमिनिप्रणीतायां द्वादशलक्षण्यामक्लेशप्रवेशमधित्सुरभिज्ञाशिखामणिरापदेवः इमं न्यायप्रकाशनामधेयं अत्यन्तसरलसंदर्भं आपादचूडरमणीयं अशेषबुधमाननीयं प्रकरणग्रन्थं प्रणिनायेति नैतन्न विदितम् । तत्र तावत्पूर्वमीमांसायाम्—

मानं भेदः शेषभावः प्रयुक्तिः<br>
पौर्वापर्यं चाधिकारोऽतिदेशः ।<br>
अध्यायार्थाः स्युर्विशेषः प्रकृत्याः<br>
ऊहो बाधस्तन्त्रमन्ते प्रसङ्गः ॥

तत्रायं प्रकरणग्रन्थे—

भेदप्रयुक्त्यूहतन्त्रप्रसङ्गाननिरूपयन् ।<br>
आपदेवः प्रकाशेऽस्मिन्नन्यत् सर्वं समक्षिपत् ॥

तस्यैतस्य सर्वदेशलब्धप्रचारस्य न्यायप्रकाशस्य न तावदेकं समीचीनं व्याख्यानमवर्तिष्ट, यदाहमेनं व्याख्यातुं प्रावर्तिषि ।

मया हि नाम—आदावस्मत्पितृपादसन्निधावेवाधीतकाव्यनिकुरुम्बेण, अथ मधुरान्तके संस्कृतपाठशालायां विद्यार्थिभूतेन, तत्राध्यापकपदमलंकृतवद्भिरनितरसाधारणसम्पादितसत्तर्कपाण्डित्यप्रसिद्धिभिर्बहुसंस्थानभावितप्रतिष्ठैः सौशील्यसागरैः पञ्चनदसंस्कृतमहाकलाशालायां तर्कप्रधानाध्यापकत्वेन प्रार्थितस्थापितैः श्री. उ. वे. स्वच्छन्द-श्रीनिवासाचार्यस्वामिचरणैः आत्मजनिर्विशेषमत्यन्तवात्सल्येन आत्मना सहैव तां कलाशालां नीतेन, अधीत्य प्रक-

रणग्रन्थमनन्तरवत्सरादारभ्य चतुरः संवत्सरान् शिरोमणिपरीक्षार्थक्लृप्तानितरान्यानपि तर्कग्रन्थान् कार्त्स्न्येन तेषामेव महाशयानां सविधे यथावसरमधीतवता, तदात्व एव तत्र मीमांसाप्रधानाध्यापकपदमास्थितैर्वेदविशारदैर्मीमांसाकेसरिभिर्वेदान्तव्याकरणादिनिष्णातैः ब्रह्म श्री. चिन्नस्वामिशास्त्रिमहाशयैरप्यानन्तरप्रेमातिशयेनाध्यापितप्रौढमीमांसाग्रन्थेन, १९१९ आङ्गलवत्सरे शिरोमणिपरीक्षायामुत्तमोत्तमतयैवोत्तीर्णवता, तत एव तस्यामेव कलाशालायां विमर्शकपदमास्थितवता, यदेतैर्महाशयैर्न केवलमध्यापनेन, किं तु सम्पूर्णव्युत्पत्तिसंपिपादयिषया प्रेमविशेषेण तदानीममुद्रितकौस्तुभादिग्रन्थवितरणादिना चाभिवर्धितं मे मीमांसाशास्त्रविज्ञानम्, ततस्तदनुरूपं कृतज्ञताप्रकटनमवश्यं चिकीर्षुणा, १९२० आङ्गलवत्सरे महाकलाशालाध्यक्षमहाशयनियमितग्रन्थान्तरविमर्शेन सह स्वातन्त्र्येणास्य महतः प्रकरणग्रन्थस्य व्याख्यानं कर्तुमुपाक्रमि। अन्यच्चेदं कारणमत्र व्याख्यानारम्भे यत् तर्कशास्त्रादिषूद्ग्रन्थाध्ययनौपयिकं तत्तच्छास्त्रज्ञानपरिपाकं भावयितुं दिनकरीयादिग्रन्थवत् अस्मादापदेवीयादुपरितनो भाट्टदीपिकादिप्रौढग्रन्थप्रवेशोपायभूतो न कश्चित्प्रबन्धो दृष्टिपथं प्रापत्।

यद्यप्यस्त्येवास्यैव ग्रन्थस्य व्याख्यानरूपः भाट्टालङ्कारो नामास्यैव ग्रन्थकृतः पुत्रेणाभिज्ञेनानन्तदेवेन विरचितः, अथापि न सोऽपि कृत्स्नस्तदात्वे दृष्टिगोचरमगच्छत्। किं तु भागः कियानप्यारम्भे। कृत्स्नोपलम्भेऽपि न तेनापेक्षितं निर्वर्त्येत इति तमवलोकितवतां स्पष्टम्। यदेष महापण्डितो न यावदपेक्षं पङ्क्तिव्याख्याने यथावत्प्रववृते। न च बालानां व्युत्पत्तिसंपादनं परमं लक्ष्यं मेने। किं त्वात्मनो विचारकौशलमेव विस्तरेण विख्यापयति स्मेति।

तदेवमत्र प्रवृत्तस्य आदौ 'सोमेन यजेत' इति घट्टे कियत्यंशे व्याख्यानं वर्तयतो मे, पचेलिमेन प्राक्तनसुकृतेन, प्रकृष्टेन प्राचीनाचार्यप्रसादेन

परमकारुणिकस्य भगवतोऽनुग्रहेण श्रीमद्वैदमार्गप्रतिष्ठापनोभयवेदान्ताचार्याणां अशेषशास्त्राभिज्ञानां अद्भुतप्रवचनशक्तीनां अखिलजनाभिनन्दनीयसौशील्याचारसम्पदां कोलियालं स्वामिन इति प्रसिद्धानां आचार्यवर्याणां श्रीरङ्गयात्रया पञ्चनदं समया समागतानां सेवया तावद्भावि । तदात्व एव दुर्लभलम्भकस्य भगवतः कृपया समुज्जीवनदायिनि विशिष्टे वेदान्तशास्त्रे प्रवृत्तिरभूत् । अथ विशेषप्रार्थनामनु तत्राङ्गीकृतवसतीनां तेषामेव पदपद्मपरिचरणपरायणेन सर्वमप्यवसरं तत्रैव विनियोजयता मया प्रकृतव्याख्यानविरचनायावकाशो नालम्भि । एवं गतेषु द्वित्रेषु मासेषु वैराग्यवारांनिधय इमेऽस्मदाचार्या यत् यदृच्छया तुर्यमाश्रमं जिघृक्षवः श्रीरङ्गमलमकार्षुः, तत् 'नूनमत्र वेदान्ताध्ययनेऽन्तराय एव कार्यान्तरव्यापृतस्य महानापतित' इति मे चिन्तामग्नमभून्मनः ।

ततः परिगृहीततुर्याश्रमाणां कतिपयेष्वेवाहस्सु श्रीवेङ्कटाद्रिनाथसिसेविषया श्रीरङ्गतः प्रस्थाय तेनैव पञ्चनदनेदिष्ठाग्रहारमार्गेण प्रतिनिवृत्तानामेषामेव परमहंसपरिव्राजकानां श्रीमतां **श्रीरङ्गरामानुजमहादेशिकानां** सेवामनुभूय , यत् श्री-उ-वे प्रकृतकलाशालाप्रधानाध्यक्षभूताः परमपवित्रमानसाः सदाचारसंपन्नाः सर्वतोमुखप्रज्ञाः वेदान्तालङ्कारधर्मशास्त्रेषु विशिष्टवैदुष्याः M. A. L. T. बिरुदभाजः श्रीमन्तः (S. Vedantam Iyengar) वेदान्ताचार्यमहाशयाः , न केवलं यतिवरेषु गौरवेण अपि तु मय्यात्मविद्यार्थिन्यसाधारणेन प्रेम्णा, विघटितवेदान्तशास्त्राध्ययनसमग्रनिर्वर्तनविधित्सया, असन्निहितेऽपि अनिवेदितवत्यपि च मयि, सबहुमानमेनान् आचार्यान् चातुर्मास्यसङ्कल्पं तत्रैवानुष्ठातुमभ्यर्थयामासुः—यतः कारणात् अद्य च तदा वेदान्ताध्ययननिर्विघ्ननिर्वृत्तये कलाशालायामपेक्षितकार्यसौकर्यनियमनेनापि शास्त्रान्तराणामिव वेदान्तशास्त्रस्यापि मे संपत्तौ तेषां मुख्यहेतुभावात् आ मदात्मस्थिति अयमहं तेष्वध्यक्षमहाशयेषु

कृतज्ञो भवानि—तदिदमभ्यर्थनमनुरुध्य एष्वाचार्यवर्येषु तत्राश्रममध्युषितवत्सु आरब्धमध्ययनमप्रत्यूहं निरवर्ति । एतदर्थे च भूयः सप्ताष्टान् मासान् अहं व्याख्यानकार्यमिदमस्पृष्टवानेवासम् । एतद्वेदान्ताध्ययनात् प्राक् मे मणिदीधितिव्याख्या गादाधरी नाम्नैव प्रत्यक्षरव्याख्यानरमणीया शास्त्र इति बुद्धिस्थिताऽऽसीत् । अथ पुनः श्रीभाष्यव्याख्यां श्रुतप्रकाशिकामनुभूतवतो मे तत्रैव गौरवमाविरभूत् । आलोचयं च व्याख्यानं चेत्तेनेदृशेन भाव्यमिति ।

एवमधीततर्कवेदान्तः प्रत्यक्षरपरिशीलनेन व्याचिख्यासया प्रवृत्त्य यथाशक्ति बालबोधनप्रक्रियापथमपरित्यज्य तत्र तत्र लक्षणादि यथोचितं निष्कृष्य परिष्कृत्य १९२२ वत्सरान्तरेव व्याख्यानमिदं समग्रं व्यररचम् । अन्ते कियानप्यल्पिष्ठो भाग एवावशिष्ट आसीत् । केवलं प्राक्तनमीमांसकाभिहितार्थानुवादमात्रे अस्थित्वा अवश्यविमृष्टव्येषु यथामति विमर्शपद्धतिरपि मया व्युत्पादिताऽस्ति । यद्यप्यन्येऽपि कतिपये ग्रन्थास्तर्के वेदान्ते च मया विरचिता मुद्रिताः प्रकाशिताश्च, अथापि सर्वेषु मत्कृतेषु मुख्यशास्त्रग्रन्थेष्वयमेव **मीमांसासुधास्वादः** प्रथमः ।

यदि नाम तदैव व्याख्यानमिदमस्मन्मीमांसागुरुचरणसविधे व्यज्ञापयिष्यम्, नूनं ते तथाविधप्रेमशालिनस्तदात्व एव काश्यामिदं मुद्रयित्वा प्राकाशयिष्यन् । तत् तदातनमालस्यमेतावन्तं विलम्बं व्यधत्त । एवं पञ्चवत्सरान् पञ्चनदे स्थित्वा पश्चात् पुष्करक्षेत्रे (उत्तरदेशे) अध्यापकीभूय स्थिते मयि केचन काशीवासिनः प्राज्ञा एतद्व्याख्यानमातृकामवलोक्य मुदा स्वयमेतन्मुद्रणभरं वोढुमैच्छन् । अथापि दविष्ठे देशे विस्रम्भेण दातुमपारयन् तदाऽप्यौदासीन्यमबिभरम् ।

एतावत्यपि समये इदमित्थं मुद्रितप्रकाशितं न स्यात्, यदि तावत् उद्यानपत्रिकासम्पादकाः पञ्चनदमहाकलाशालायामध्यापकभूताः मीमांसके-

सरिणः प्राच्यविद्येश्वराः संप्रत्यत्र श्रीवेङ्कटेश्वरसंस्कृतमहाविद्याशालायां प्रधानाध्यक्षाः पण्डितराजाः श्रीमन्तः D. T. ताताचार्यशिरोमणयः, प्राक् यदा पञ्चनदे मया स्थितम्, तदैतद्व्याख्यानसरणिं दृष्टवन्तः पुष्करात्स्वदेशमागतं मां एतन्मुद्रणाय न प्रेरितवन्तः स्युः । ते ह्यस्य मूलग्रन्थस्य समुचितव्याख्यानप्रकाशनपराः 'इदमेव व्याख्यानं तथाविधम् । उद्यानपत्रिकायामनुबन्धरूपेण प्रकाशनीयतया च नाभ्यधिकोऽर्थव्ययः , किं तु न्यून एव । व्ययानुरूपाश्चादर्शा दास्यन्ते' इति विलिख्य मामेतन्मुद्रणे निरबध्नन् । तदेवंभूतेषु सुहृत्तमेष्वेषु भृशं कृतज्ञोऽहमिति अनुक्तविदितमपि सर्ववेद्यतायै समये आविष्करणमप्यर्हति । यच्चैषामनुमतिमनुरुध्य एतन्मुद्रणारम्भादनन्तरं मध्ये ईशावास्योपनिषद्भाष्यव्याख्यानस्य आचार्यभाष्यतात्पर्यस्य, तर्कसंग्रहव्याख्यायाः सुखप्रवेशिन्याश्च मदीययोर्मुद्रणेन मयि यथावदधमर्ण एव सति मदपेक्षामनुसृत्यायं श्रीमान् विजयराघव अय्यङ्गार् (Proprietor, The Srinivasa Press, Tiruvadi) सादरविस्रम्भं सत्वरमेतन्मुद्रणं निरवर्तयत् तदस्योपकारस्य कृतस्य कृते नूनमाधमर्ण्यमपरिहार्यम् ।

तदेवं संप्रति समूलं प्रकाश्यमानमिमं मीमांसासुधास्वादं आदरभरितेन हृदयेनानसूयवो बालाः प्रौढाश्च विबुधाः सप्रमोदं दधत्विति सप्रश्रयमभ्यर्थये , प्रार्थये च आदर्शानामनधिकतया, अपेक्षकाणामत्र त्वराम् ।

सत्त्वैकान्ततयेव यः स्फटिकवच्छुद्धस्फुरद्विग्रहो
विज्ञानं वचनं विलेखनमितीदृक्षं यदीक्षावशम् ।
तत्तादृक्षरमाहयाननदयालेशैकलब्धात्मनि
व्याख्यानेऽत्र विदां विधाय स रतिं देवस्स्वयं तृप्यतु ॥

Tirupati
30—10—'35

ति. वीरराघवाचार्यः ।

॥ श्रीः ॥

आन्ध्रलिपिमुद्रितं मूलपुस्तकं विलोक्य व्याख्यानस्य विरचिततया, नागरलिपिमुद्रितं मूलकोशमनुरुध्य मुद्रणस्य विहिततया च तत्र तत्र व्याख्यानाननुरोधी मूलपाठः पतित इति तथाविधां अन्यादृशीं चाशुद्धिमत्रापाचिकीर्षामि । अनवधानेनात्रापि त्यक्तमंशमादरेणावलोकयन्तः स्वयं शोधयित्वा वाचयेयुरिति विश्वसिमि ।

# शुद्धिपत्रम् ॥

| पु | पं | | पु | पं | |
|---|---|---|---|---|---|
| ६ | १३ | इतीहानृतवदन- | १५ | १२ | पश्चाध्यः इ- |
| ७ | १६ | लौकिकविधिविषय | ,, | १५ | ,, |
| ९ | १ | वाक्येन | १६ | ५ | निर्मितः |
| १० | २४ | धातुत्वं | ,, | १९ | त्वासिद्ध्या |
| ११ | १९ | स्थापकता | २० | २० | पिपादयिषुः |
| ,, | २१ | संमतं लिङोपु | २१ | १८ | मित्यादिना |
| १२ | १ | नुकूलव्यापार | २२ | ३ | लिङादि |
| ,, | २ | नुकूलो | २३ | १२ | प्रेरको हि |
| १५ | ४ | सर्वलिङ्प्रत्यय | २५ | ११ | पदैकवाक्यत्वं न संभ- |

वति । किञ्च लिङ्ज्ञानस्य करणत्वं न भवति । अध्ययनगृहीतस्वाध्यायस्य करणत्वेन निर्देशात् । न चाध्ययनगृहीतत्वविशिष्टस्वाध्यायस्य करणत्वोक्तेरध्ययनजनितस्वाध्यायग्रहणस्य लिङ्ज्ञानात्मकस्य करणत्व एव तात्पर्यमिति न दोषः । अथ वा लिङ्ज्ञानं करणम् । तदतिरिक्तकृत्स्नस्वाध्यायभागस्य सहकारितया तद्विवक्षया स्वाध्यायेनेति तृतीयानिर्देश इति वाच्यम्, तथाऽपि भावयेदित्यत्र कः कर्ता ? न तावल्लिङादिः, तद्गताया भावनायाः प्रवृत्तिरूपत्वाभावेन प्रकृतकल्पितवाक्यार्थशाब्दभावनायाः प्रवर्तनारूपत्वाभावप्रसङ्गात् । प्रवर्तनातिरिक्तशब्दभावनायां प्रमाणाभावाच्च । लिङादेरचेतनत्वेन नियोज्यत्वासंभवाच्च । न च पुरुष एव कर्ता । तथा सति तद्गतभावनाया आर्थ्या एवात्र विवक्षणीयतया तस्याः सकलशब्दभावनारूपत्वासंभवात् । स्वाध्यायविधौ वाक्या-

| पु | पं | पु | पं |
|---|---|---|---|
| २९ | १४ मन्त्रनामधेयनिषेधा | ५७ | १९ फलार्थो वि |
| ३० | ३ कर्म प्रमाणान्तरेण | ६० | १ गौरवप्रसङ्गात् |
| ,, | १५ स्वर्गकाम | ,, | ४ कर्तृव्यापारव्याप्य |
| ३१ | १८ प्रमाणान्तरेण | ६७ | ३ उत एक |
| ३३ | ५ कल्पनम् , न च | ,, | ९ षष्ठाद्यार्थस्य |
| ३४ | ३ भावनायां करण | ६८ | ६ णत्वशङ्कायां |
| ३५ | १ वाच्यफल | ६८ | २४ अतश्चेति |
| ,, | १९ स्थापितस्येत्यर्थः | ६९ | १८ वाक्यापरामर्शस्य |
| ३७ | ४ व्रीहिषु चात्र | ७३ | ४ विधित्वे स्वी |
| ,, | १५ क्येऽध्वर्य्वादेः | ७४ | ३ धाने लाघवात् |
| ३९ | २ निर्वृत्तिरेव दृष्टं | ७९ | ४ पमित्यत्राह |
| ४३ | ४ कर्तव्यतात्वं | ८१ | २ यजेतेत्यत्र च न |
| ४६ | १४ वैशिष्ट्ये प्रमा | ,, | १२ वाक्य |
| ४७ | ३ तस्माद्विशिष्ट | ८४ | ७ त्तिविधिरिति |
| ४८ | १ विधानम् | ८५ | १ मनयाविधिनिरूपणानुगतप्रसङ्गचिन्तया। |
| ४९ | २६ त्रोपाकरण | ,, | १२ नियमासिद्ध्याप |
| ५० | १७ पार्श्वस्थो धा | ८८ | १८ तस्याशाब्द |
| ,, | २३ सद्भावा | ९० | ७ अत एवाग्निहोत्रेण |
| ५१ | २५ वदपीष्टत्वं | ९१ | ६ एतस्य च |
| ५२ | २४ पत्रत्वादिति | ९२ | १५ ष्टं भवतीति |
| ,, | ;, भाव्यत्वमिति | १०३ | १५ पुनरतन्त्रि |
| ,, | २५ पक्षयित्वा | ११४ | ८ ष्विति बहुवचन |
| ५३ | २४ तत्रेतिपाठे तद | ११६ | १२ लिङ्गप्रयोज्यो |
| ५६ | २२ उभयोद्देश्य | ११९ | १३ प्रमाणमस्ति। बर्हिर्लवनस्य प्रमाणान्तरप्राप्तत्वेऽपि लवनसामान्यस्यापूर्वसाधनत्वाभावेनापूर्वसम्बन्धिलवनस्यैवात्रोपस्थितौ मन्त्रस्य प्रकरणपाठ एव हि नियामकः । अतोऽ |

| पु | पं | | पु | पं | |
|---|---|---|---|---|---|
| १२७ | १० | प्राबल्यं दौर्बल्यं | २२८ | १३ | संबद्धोपका |
| १२९ | १० | दधामीति | २३० | ७ | द्देशेन विधाना |
| ,, | १३ | इत्युक्ते; तथा | ,, | २१ | ताद्दष्टत्वनिबन्धन- |
| १३६ | १४ | चोदकं न कल्प्येत | २३२ | ८ | साध्यत्वविशि [त्वे । |
| १४३ | २३ | असन्नयत 'ऐन्द्राग्न- | २३४ | १ | मानत्वात्सन्नि |
| १४४ | १४ | काशनार्थत्वम | २४९ | १२ | सवनीयदेशे |
| १५२ | ४ | शेनार्थभा | २५० | ६ | ,, |
| १५३ | १ | एव लोके | २६७ | ११ | सुल्याधार |
| १५४ | २१ | व्यापरितव्य | ,, | १७ | कर्तव्यानाम्ना |
| १६० | ४ | विकृतौ च न प्र | २७१ | १ | मात्रसम |
| ,, | ८ | यत्र यत्र | ,, | २२ | ह इत्यलमिति |
| १६३ | २ | एकदेवत्य | २७६ | १६ | दवच्छेदेना |
| १८० | १३ | र्थत्वमप्यङ्गी | ,, | १७ | च्छेदेनामाभा |
| १८२ | २३ | गुणः आ | २७७ | १६ | घाताभावप्रस |
| १८६ | ५ | स्यापीत्यपि रा | २७८ | ६ | प्राप्तविधा |
| १८७ | १६ | मिति तत्र | २९४ | २१ | वलम्बने भव |
| १९१ | १३ | प्रायेण । विकृति | ३०२ | १९ | विधावुत्पत्ति |
| २०६ | ८ | सन्निधौ पाठात् | ३११ | ११ | वाङ्गत्वसंभवा |
| २०८ | १६ | संदंशापेक्षा | ३१२ | ५-६ | द्देशेन मन्त्रवि |
| ,, | १७ | कस्याभावाद्धि | ३३३ | २० | न्वयासम्भ |
| २१८ | ६ | आध्वर्यवादि | ३४० | ,, | रम् । अस्तु श्रौषडिति चतुरक्षरम् । य |
| २२४ | २१ | क्रियमाणत्वा | | | |
| २२७ | ४ | वाक्यमेव व्रीहि | | | |



॥ श्रीः ॥

श्रीमते हयवदनपरब्रह्मणे नमः ।

# मीमांसान्यायप्रकाशः ॥

(आपदेवीयः)



यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥ १ ॥

---

पण्डित वीरराघवाचार्य शिरोमणि कृतः

# मीमांसासुधास्वादः ॥



वन्दे विश्वान्तरं विश्वदैवतं वेदविश्रुतम् ।
श्रितशेषाचलं धाम श्रीनिधिं श्रितवत्सलम् ॥ १ ॥
प्रतिष्ठापयितुं ज्ञानं प्राप्तुं व्याख्यानकौशलम् ।
यथामति प्रकाशोऽयं यथावद्व्याचिकीर्ष्यते ॥ २ ॥
उत्प्रेक्ष्य वर्णितं यत्तददुष्टं को निषेत्स्यति ।
यद्वा वैशद्यलाभस्स्यात्परिपाटिकयाऽनया ॥ ३ ॥
परदेवकृतिपरार्थं परभागं भव्यतर्कैतः प्राप्तम् ।
सर्वे भजन्ति विबुधास्सादरमेतं सुधास्वादम् ॥ ४ ॥

तत्रभवानापदेवस्तन्त्रार्थे व्युत्पत्तिमभिलषतां तत्र समुद्रात्मनि सहसा प्रवेशमपश्यतां बालानामनुग्रहमाधातुं न्यायप्रकाशनामकं प्रकरणग्रन्थं प्रारिप्सुरविघ्नसमाप्तये प्रचयगमनाय च कृतं परमपुरुषगोचरं स्वगुरुविषयकं च मङ्गलं शिष्यशिक्षायै निबध्नाति यदित्यादिना आनन्दरूपिणमित्यन्तेन । मात्रपदमवधारणार्थम् । यस्य कृपाया लेशेनैवेत्यर्थः । न पुनःकार्त्स्न्य-

अनन्तगुणसम्पन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥ २ ॥

---

परम् । कृत्स्नेन कृपालेशेनेत्यर्थवर्णने मात्रपदलेशपदयोर्वैयर्थ्यादसारस्याश्च । मात्रेणेति कर्तरि तृतीया । चतुष्टयमिति द्वितीयान्तम् । प्राप्यत इति णिजन्तात्कर्मणि रूपम् । जन इति शेषः । यत्कृपालेश एव चतुरः पुरुषार्थान् जनं प्रापयतीति वाक्यार्थः । यद्यपि गोविन्दस्यैव प्रापणकर्तृत्वम्, अथाप्यन्वयव्यतिरेकाभ्यां तदीय गुण एव तद्विवक्षितम् । प्राप्यते इत्यस्याणिजन्तत्वे तु हेतौ तृतीया । चतुष्टयमिति प्रथमान्तम् । जनैरिति शेषः। धर्मार्थकाममोक्षाणां समुच्चित्य एककृपालेशसाध्यत्वज्ञापनाय चतुष्टयशब्दः। अहमिति फलापेक्षित्वबोधनाय । नन्वस्तु कृपालेशादभीप्सितप्राप्तिः । किमर्थं पुनर्वन्दनम् ? न च तादृशःकृपालेशस्संभाव्यते, दोषजलधिष्वस्मासु दण्डस्यैव न्याय्यत्वादित्यत्राह भक्तवत्सलमिति । अयं भावः । व्याजसापेक्षो भगवानाश्रितेष्वेव कृपां निक्षिपतीति वन्दनमावश्यकम् । दोषो यद्यपि स्यात्, अथापि वत्से धेन्वा इव विशिष्टस्नेहो विद्यमानमपि दोषमाविगणय्य पोषणे प्रवर्तयतीति ॥

अनन्तेति । इह यथा देवे तथा गुरावपि भक्तिरवश्यापेक्षितेति श्रुत्यर्थबोधनमभिप्रेतम् । अतएवेत्थं श्लोकयोः क्रमः । अत एव भक्तिसाम्यप्रयोजकस्य गुरौ देवसाम्यस्य प्रदर्शनाय विशेषणपदान्युभयानुगतार्थानि प्रयुक्तानि । अनन्तभजनेति । अनन्तस्य गोविन्दस्य भजनं प्रियं यस्य तं गुरुम् । एवं देवोऽप्यनन्तभजनप्रियः । अनन्तं भजनं येषां ते अनन्तभजनास्तेषां प्रियः ते प्रिया यस्येति वा । अनन्तरूपिणमिति । रूपयत्युपस्थापयतीति व्युत्पत्त्या रूपं नाम । अनन्तनामानमित्यर्थः । देवस्याप्यनन्तरूपित्वं अनन्तसंज्ञत्वादेव वा समस्तवस्तुरूपत्वाद्वा रामकृष्णादिबह्ववतारवत्त्वाद्वा । स्वरूपतोऽपि भजनीयत्वमाह आनन्दरूपिणमिति ।

**इह खलु परमकारुणिकेन भगवता जैमिन्यृषिणा 'अथातो धर्मजिज्ञासा' इत्यादिना द्वादशस्वध्यायेषु धर्मो विचारितः।**

२१ ४४

ग्रन्थमारभते इहेत्यादिना । यत्न ग्रन्थःकर्तुमारब्धस्सेदानीं बुद्धौ सन्निकृष्टा मीमांसा इहेतीदम्पदेनोच्यते । खल्विति प्रसिद्धौ । अनुष्ठानौपयिकार्थनिर्णयाधायिनो वेदेतिकर्तव्यताभूतस्य, यदज्ञानदुर्ज्ञानाभ्यामभ्यधिकः प्रत्यवायः तं पुनर्न्यायमार्गं सामग्र्येण समर्पयतो महतो मीमांसाशास्त्रस्य प्रणेतुरभ्यधिकेन कारुण्येन भवितव्यमिति परमेत्युक्तम् । अशक्तगतस्य कारुण्यस्याकिञ्चित्करत्वाच्छक्तिमत्त्वं बोधयितुं भगवतेति । कथं भगवत्त्वं तत्राह ऋषिणेति । जैमिनीति नामकीर्तनम् । अथातो धर्मजिज्ञासेति । इदमादिमं सूत्रम् । अस्यार्थः—अथ वेदाध्ययनानन्तरं, अतः अस्मादेव वेदाध्ययनाद्वृत्ताद्धेतोर्धर्मजिज्ञासा कर्तव्येति । एतत्सूत्रोपादानेनाधिकारिबोधनं चिकीर्षितम् । तथा धर्मवदधर्मोऽपि विचारित इति हेतोर्न युज्यते धर्ममात्रस्य विचारितत्वं वक्ष्यमाणमित्याक्षेपे सूत्रविरोधोऽपि तत्परिहाराय दिदर्शयिषितः । द्वादशस्वध्यायेष्विति । अनेनानेकाधिकरणपादसमुदायात्मकबह्वध्यायरूपतया मीमांसाशास्त्रं दुष्प्रवेशमिति तत्प्रवेशानुगुणव्युत्पत्तिसंपादनाय ग्रन्थोऽयमारम्भणीय इति सूचितम् । धर्म इति । नन्वधर्मोऽपि विचारित इति कथं धर्ममात्रग्रहणम् । उच्यते । एतदपवादतयैव तद्विचार उपपद्यत इति । न चाधर्मजिज्ञासेत्यपि सूत्रे पदच्छेदसम्भवात् सोऽपि प्रतिज्ञात इति वाच्यम् । शास्त्रार्थनानात्वप्रसङ्गात् । उक्तविधयैवोपपत्तौ क्लेशस्य सोढव्यत्वाभावाच्च । न चाधर्मत्वं यदि धर्मभिन्नत्वरूपं तदाऽनुभयस्मिन् घटादावतिप्रसङ्गादनन्तरसूत्रे अधर्मोऽपि लक्षणीय इति प्रथमसूत्रे तत्प्रतिज्ञानमप्यावश्यकमिति वाच्यम् । अत एवातिप्रसङ्गावगमात् तद्व्यावृत्तस्य लक्षणस्य धर्मविरोधिभूताधर्मस्वरूपशोधनादनन्तरं सुविज्ञानतया द्वितीयसूत्रे तल्लक्षणविवक्षाया अनावश्यकत्वादिति भावः । विचारित इति ।

**तत्र वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः ।**

स्वरूपप्रमाणसाधनफलमुखेन विचारित इत्यर्थः । अनेन विचारितपदप्रयोगेण सूत्रस्थजिज्ञासापदस्य विचारलाक्षणिकत्वमभिप्रेतम् । ननु ज्ञानविषयकेच्छारूपश्रौतार्थपरित्यागो न युक्तः । 'धर्मं जिज्ञासितुमिच्छेत्' इति भाष्यव्याख्यावसरे 'सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छाऽत्र सूत्रिता' इति वार्तिकवचनादपि श्रौतार्थ एव गृहीतो दृश्यते । न चेच्छाया इच्छान्तरविषयत्वासम्भवाद्विचारपरत्वमेवाभिमतमिति वाच्यम् । मन्दाग्नीनां क्षुद्विषयकेच्छादर्शनात्, क्षुधश्च भोजनेच्छारूपत्वात्, इच्छाया इच्छान्तरविषयत्वसंभवादिति चेत्—उच्यते । यद्यपीच्छाया इच्छान्तरविषयत्वं संभवति; अथापि जिज्ञासाशब्दो विचारपर एवेष्टः । अन्यथा कर्तव्येत्यध्याहारो न कर्तुं शक्यः स्यात् । अथशब्देन वेदाध्ययनानन्तर्योक्त्या तावतैव जिज्ञासायां तज्जन्यत्वस्य सिद्धत्वादतश्शब्दो व्यर्थ इत्याशङ्क्य 'यद्यपि जिज्ञासाहेतुत्वमध्ययनस्याथशब्देन सिद्धम् । अथापि तस्या अनुष्ठानं प्रति तस्य हेतुत्वं वक्तुं अतश्शब्दः । अधीतवेदत्वाद्धर्मजिज्ञासाऽनुष्ठेया' इति ह्युक्तम् । न हि ज्ञानविषयकेच्छायाः कृतिविधेयत्वरूपमनुष्ठेयत्वं संभवति । न चेच्छाविषयत्वे कृतिविधेयत्वमावश्यकम्; स्वर्गादाविच्छाविषये कृत्युद्देश्यत्वसत्त्वेऽपि तद्विधेयत्वाभावात् । न चाधीतवेदेन विचारात् पूर्वं धर्मजिज्ञासां साधयितुं उपायः कश्चिदनुष्ठेयोऽस्तीति वक्तुमिदं सूत्रं प्रवृत्तम्; येन कृत्युद्देश्यत्वमेव कर्तव्येत्यनेन विवक्षितं मन्येत । अतः कर्तव्यपदाध्याहारो विचारलाक्षणिकत्वाङ्गीकार एव युक्तः । वरञ्चोपरि विचारस्यैव करिष्यमाणतया तस्यैवादौ सूत्रकृताऽभिधानम् । वार्तिकवचनमपि जिज्ञासापदशक्यार्थानुवादरूपमेतत्तात्पर्येणैव योजनीयमित्याशयः ।

कोऽसौ धर्मशब्दार्थ इत्यत्राह तत्रेति । तत्र विचारे । विषयत्वं सप्तम्यर्थो धर्म इत्यत्रान्वेति । वेदेनेति तृतीयार्थः कर्तृत्वं विधीयमान

इत्यत्र धात्वर्थेऽन्वेति । भावनाया भाव्यरूपप्रयोजनाकांक्षैव प्राथमिकीति तदुद्देशस्यैव प्राथम्यात् उद्दिश्येति ल्यबन्तनिर्देशः । विधीयमानः विधानविषयः । तथा च वेदकर्तृकप्रयोजनोद्देशपूर्वकविधानविषय इत्यर्थः । अत्र विधानमिति विधिः प्रवर्तनैव तात्पर्यविषयः । एवं च प्रयोजननिष्ठोद्देश्यतानिरूपितवेदवृत्तिविधिविषयताश्रय इति फलितम् । विधेर्वैदिकलिङ्वाच्यस्य तन्निष्ठत्वमेव मीमांसकसम्मतमिति विधेर्वेदवृत्तित्वमक्षतम् । एवं वा । उद्दिश्य उद्देश्यतया ज्ञापयित्वा विधीयमानः विधिविषयत्वेन ज्ञाप्यमानः । तथा च प्रयोजनविशेष्यकोद्देश्यत्वप्रकारकज्ञानजननोत्तरकालिकवेदकर्तृकव्यापारप्रयोज्यविधिविषयत्वविषयकज्ञानविषय इत्यर्थः । वेदप्रयोज्यबोधविषयप्रयोजनोद्देश्यकविधिविषय इति फलितम् । अर्थ इति । अर्थ्यमानाभ्युदयवाची अर्थशब्दस्तत्साधने प्रयुक्तोऽवधारणगर्भः सन् अनर्थसाधनभिन्नपरः । यजेत स्वर्गकाम इत्यादिवेदवाक्यप्रयोज्यबोधविषयो यः स्वर्गादिप्रयोजनोद्देश्यको विधिः तद्विषयत्वान्नरकादिरूपानर्थासाधनत्वाच्च यागादौ लक्षणसमन्वयः । नित्येषु सन्ध्यावन्दनादिषु प्रत्यवायभिया क्रियमाणेष्वपि भावनाया भाव्यापेक्षायां पापक्षयस्य भाव्यत्वेनान्वयाभ्युपगमात्तद्रूपप्रयोजनमादाय लक्षणसङ्गमनान्नाव्याप्तिः। ये पुनर्मन्त्रार्थवादकल्प्या विधयस्तेषां वेदत्वाभावेन तज्जन्यबोधस्य वेदजन्यत्वाभावेऽपि वेदप्रयोज्यत्वाविघातात् न तद्विषयेष्वव्याप्तिः । स्मृत्याचारप्रमाणकेष्वपि धर्मेषु अप्रत्यक्षस्याप्यनुमितस्य वेदस्य भावादक्षतं लक्षणम् ।

पुष्ट्यर्थं पयः पिबेति लौकिकफलवद्विधिविषयेनर्थासाधने पयः पानेऽतिव्याप्तिवारणाय वेदपदम् । विधौ यागादेरिव स्वर्गादिरूपप्रयोजनस्यापि विषयतया तत्रातिव्याप्तिरिति विधौ प्रयोजनोद्देश्यकत्वनिवेशः । ननु विधीयमानपदस्वरसादेव उद्देश्यताविलक्षणविषयताया लाभात् 'प्रयोजनमुद्दिश्ये' ति व्यर्थम् । न व्यर्थम् । नित्ये दर्शपूर्णमासादौ निष्प्रयोजनतां केवलंविधीयमानतां

केचन मन्यन्ते। तन्निराकरणाय तदुक्तिरिति। नन्वथापि लक्षणे विधौ प्रयोजनोद्देश्यकत्वनिवेशो निष्फलः। विधिविषयत्वस्योद्देश्यताविलक्षणस्य ग्रहणेनैव फलेऽतिव्याप्तिवारणादिति चेन्न। लक्षणे सामान्यतो विधिविषयत्वस्यैव निवेशात्। उद्देश्यताविलक्षणत्वेन तदविशेषणात्। प्रयोजनान्तरसत्त्वाच्च। अस्ति ह्यभ्यनुज्ञाविधिविषयानृतवदनादावतिप्रसङ्गवारणमेव तत्प्रयोजनम्। अनृतवदनं हि रागत एव प्रसक्तम्। नानृतं वदेदिति वाक्येन प्रतिषिद्धमिह विवाहविषये पुनरभ्यनुज्ञया विधीयते। तन्निष्ठा च विधिविषयतोद्देश्यताभिन्नैवेत्यतिव्याप्तिरिति। तन्निवेशे तु नातिव्याप्तिः। स विधिः सामान्यतो निषेधवाक्यावगतस्य दोषस्य विवाहार्थानृतवदनेऽभावमनुमापयन् तावतैव प्रवर्तयति। न पुनः किञ्चित्फलसाधनत्वेनानृतवदनं विदधाति। अतोऽनृतवदनविधिर्न प्रयोजनोद्देश्यक इति। यद्यपि यादृशं रागतः प्राप्तमनृतवदनं नानृतं वदेदिति निषिध्यते, तादृशमेव विवाहार्थवाक्येन प्रतिप्रसूयत इतीहानृतवदनकरणकभावनायां लौकिकफलस्योद्देश्यत्वेनान्वयोऽस्त्येव; सुतरां च वाक्यस्यैव लौकिकोद्देश्यवाचकपदघटितत्वे। अतोऽत्र विवाहार्थमनृतं वदेदित्यादौ प्रयोजनोद्देश्यकभावनाविषयत्वमस्त्येव, तथाऽपि न तद्विधेः प्रयोजनोद्देश्यकत्वम्। यागादिविधिर्हि स्वर्गादिसिद्ध्यर्थमेव यागादि विधत्ते। अभ्यनुज्ञाविधिस्तु न विवाहादिरूपप्रयोजनसिद्ध्यर्थं विधत्ते। तस्य तदर्थत्वस्य लोकसिद्धत्वात्। अपि तु तदर्थानृतवदने दोषाजनकत्वज्ञप्त्यर्थं विधत्ते। अतो यो विधिः स्वगतप्रवर्तकत्वनिर्वाहाय विधेयस्य प्रयोजनसाधनत्वमाक्षिपति तद्विषयत्वमेव प्रयोजनोद्देश्यकविधिविषयत्वमिति नैतदनृतवदने प्रसज्यत इति।

एवं दध्ना जुहोतीत्यादौ दध्यादिवारणमपि तत्प्रयोजनमाहुः। अयमेषामाशयः—धार्मिक इति व्यवहारस्य प्रधान एव धर्मत्वगमकतया तदङ्गानामपि धर्मत्वे न प्रमाणता। न च 'धर्मः क्षरति कीर्तनाद्' त्यनेन

धर्मस्य कीर्तननाश्यत्वावगतेः क्रियादिरूपस्य च नष्टस्य धर्मस्य नाश्यत्वायोगाद्धर्मजन्यादृष्टे लक्षणाऽङ्गीकृता ; यद्यङ्गानां धर्मत्वं न स्यात्, तदा यागमध्ये कीर्तने कृतेऽपि अङ्गजन्यादृष्टस्य नाशो न स्यादिति वाच्यम् । तत्र धर्मजन्यादृष्टलक्षणामुपेक्ष्य धर्मसम्बन्ध्यदृष्टलक्षणाया एवाङ्गीकारात् । अत एव ग्रन्थेषु प्रधानक्रियासु तथा फलार्थगुणेषु चैव धर्मलक्षणसमन्वयः क्रियते । न च 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते'. इति वार्तिकविरोधः शंक्यः; गोदोहनादि द्रव्यं नीचैस्त्वादिगुणो यागादिक्रिया च फलसाधनत्वाद्धर्म इति फलार्थद्रव्यक्रियागुणपरतयैव न्यायरत्नाकरे व्याख्यातत्वात् । उपरि च श्रेयस्करभाष्यव्याख्यानावसरे वार्तिके तथैव स्थापनदर्शनात् । अतः सोमादेरलक्ष्यत्वमिति तद्वारकं तद्विशेषणम् । ननु प्रयोजनपदेन किं स्वयं फलभूतं गृह्यते, उत तत्साधनमपि । नाद्यः । 'चित्रया यजेत पशुकाम' इत्यादावुद्देश्यस्य पश्वादेः स्वयंफलभूतत्वाभावेन चित्रायागादावव्याप्तेः । नान्त्यः । होमादेरपि तादृशप्रयोजनसाधनतया दध्यादावतिव्याप्तितादवस्थ्यादिति चेन्न । प्रयोजनत्वं विध्यनधीनेच्छाविषयत्वम् । तच्च पश्वादावस्ति न होमादावित्यदोषादिति ।

अत्र वेदजन्यबोधविषयत्वं न यथाश्रुतम् । लौकिकफलविपयस्य वेदेन यथावदनुवादे तत्रातिप्रसङ्गात् । अतो वेदाभावप्रसञ्जनप्रसञ्जिताविज्ञेयताकत्वम् । यदीदं वेदवाक्यं नाभविष्यत् न तर्हीदं व्यज्ञास्यतेति यत्र भवति तादृशविधिविषयो धर्म इत्युक्तं भवति ।

श्येनादावभिचाराख्यशत्रुवधजनकेऽनर्थसाधनेऽतिव्याप्तिवारणाय अ-र्थ इति । न च यागादेरपि बह्वायाससाध्यस्यानुष्ठानकालेऽनर्थसाधनत्वान्न लक्षणसमन्वय इति वाच्यम् । अनर्थसाधनभिन्न इत्यत्रानर्थे इष्टोत्पत्तिनान्तरीयकदुःखाधिकत्वस्य विवक्षणेनादोषात् । यागादावनर्थस्य तन्नान्तरीयकत्वात् । न च 'एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो

ज्योतिष्टोम' इत्यनेन ज्योतिष्टोमस्य सर्वफलसाधनत्वावगमादभिचारार्थमपि तदनुष्ठानसम्भवेन श्येनवदनर्थसाधनत्वसत्त्वात्तद्भिन्नत्वं नास्तीत्यव्याप्तिरिति वाच्यम् । तादृशानर्थोपधायकव्यक्तिभिन्नत्वस्यैवार्थपदार्थत्वात् । अभिचारार्थप्रयोगविषयज्योतिष्टोमव्यक्तेर्धर्मत्वाभावस्येष्टत्वादिति ।

वस्तुतस्तु श्येनादेर्धर्मत्वमिष्टमेव; तस्य मरणानुकूलव्यापाररूपाभिचारजनकतया मरणानुकूलव्यापारत्वाभावेन न हिंस्यादिति निषेधाविषयत्वात्। निषेधविषयस्याभिचारस्यैवानर्थसाधनत्वात् । न च वैरिमरणार्थमेवानुष्ठीयमानेषु कर्मसु मरणानुकूलव्यापारत्वसत्त्वेन न हिंस्यादिति शास्त्रविषयत्वसंभवात्तत्रातिव्याप्तिवारणायार्थपदमिति वाच्यम् । तेषां हिंसात्वेऽपि अग्नीषोमीयादिहिंसावद्विधिगृहीतत्वेन तत्रापि धर्मत्वस्येष्टत्वात् । न च श्येनेनाभिचरन् यजेतेति अभिचारस्यापि विधिना गृहीतत्वात्तस्यापि कुतो न धर्मत्वमिति शंक्यम् । तस्य विधावुद्देश्यत्वेनैवान्वयेन विधीयमानत्वाभावेन धर्मत्वासंभवात् । न चैवं श्येनादावास्तिकानां प्रवृत्तिः स्यादिति प्रसंजनीयम् । तस्य धर्मत्वेऽपि तत्फलस्यानर्थसाधनत्वादेव ततो निवृत्तिसंभवात् । एवं वैरिमरणार्थकर्मसु धर्मभूतेष्वपि तामसधर्मत्वस्मरणादेवास्तिकानामप्रवृत्तिरिति ।

नन्वेवं 'चोदनालक्षणार्थो धर्म' इति सूत्रविरोधः । तत्रार्थपदस्यानर्थसाधनभिन्नपरत्वात् । अन्यथा तत्पदवैयर्थ्यादिति चेत्—उच्यते । न हि श्येनादिवारकत्वाभावे तत्पदवैयर्थ्यम् । चोदनाशब्दस्य प्रवर्तकनिवर्तकवाक्योभयसाधारणतया चोदनालक्षण इत्यस्य निवर्तकवाक्यप्रमाणक इत्यप्यर्थसंभवात् तथाविधे 'न कलञ्जं भक्षये' दिति वाक्यनिषिद्धे कलञ्जभक्षणादावतिव्याप्तिप्रसङ्गेन तद्वारणाय तादृशार्थकार्थपदस्यावश्यकत्वात् ।

वस्तुतोऽर्थपदं प्रयोजनसाधनपरमेव । तस्य च प्रयोजनं—चोदनाप्रमाणके प्रयोजनेऽतिव्याप्तिवारणं, प्रत्यक्षतोऽपि यागादेरवगमाच्चोदनैक-

यथा यागादिः । स हि 'यजेत स्वर्गकाम' इत्यादिवाक्येन स्वर्ग-

---

प्रमाणकत्वासम्भववारणञ्च । अर्थस्सन् चोदनालक्षणः, तथा च प्रयोजन-साधनत्वेन चोदनैकगम्य इति सूत्रतात्पर्येणासम्भवपरिहारः । एतेन—अ-र्थपदस्यानर्थसाधनभिन्नपरत्वे वैरिमरणार्थमेव विहिते कर्मण्यव्याप्तिः । तस्य तामसधर्मत्वेन स्मृततया तदन्यथानुपपत्त्याऽनर्थसाधनत्वकल्पनादनर्थसाध-नभिन्नत्वाभावादिति निरस्तम् । एवं च चोदनाशब्दस्य प्रवर्तकवाक्य-मात्रपरत्वेऽपि न क्षतिः ।

यद्यप्येवं श्येनादीनां धर्मत्वे सूत्रस्थार्थपदसार्थक्येऽपीह तत्पदं व्यर्थ-मिव । अर्थपदकृत्यस्य 'प्रयोजनमुद्दिश्ये'त्यनेनैव कृतत्वात्—अथापि सू-त्रानारूढं प्रयोजनमुद्दिश्येति दलमिति शङ्कावारणाय सौत्रार्थपदस्य तदर्थ-कत्वस्फोरणाय तदुक्तिः । अथ वा धर्मपदस्य धर्मपदवाच्यार्थकतया वि-धीयमानपदस्य च विशेषणवाचकस्य विशेष्यसाकांक्षतयाऽर्थपदस्य वस्तुपर-स्योक्तिरिति ।

धर्म इति । धर्मो धृतिसाधनम्, धृतिश्च प्रीतिः । एवं सा-मान्यतः प्रीतिसाधनमात्रवाचित्वे भोजनादावतिप्रसङ्गापात इति निरुक्तवि-शेषे योगरूढमिदं पदमिति भावः । ननु धर्मपदस्य प्रयोजनसाधनपरत्वे तदनुरोधेन वेदैकगम्यप्रयोजनसाधनताश्रयत्वं धर्मत्वमित्येव कस्मान्नोक्तमिति चेत् सत्यं सुवचम् ; तथाऽपि प्रयोजनसाधनत्वं विधिबलादवगम्यत इति स्फोरणाय, विधिवाक्येन प्रयोजनसाधनत्वज्ञानपूर्वभावितयैतादृशशाब्दबोधस्यै-वोत्पादनेन, प्रवर्तकवाक्यार्थकसौत्रचोदनाशब्दावगतविध्यंशापरित्यागेन चैवं लक्षणमुक्तम् । अत्र च न कस्यचिद्वैयर्थ्यमिति ।

लक्ष्यमुदाहरति यथेति । यागादिरित्यादिना होमादिपरिग्रहः । लक्ष्ये लक्षणसमन्वयायाह स हीति । सः यागादिः । हीति हेतौ । यजेत स्वर्गकाम इति । 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' 'ज्योतिष्टो-

मुद्दिश्य विधीयते । तथा हि—यजेतेत्यत्रास्त्यंशद्वयम् , यजिधातुः

---

मेन यजेत स्वर्गकामः' इत्यादिवाक्यैकदेशोऽयम् । तत्रत्येतरांशस्य प्रकृतेऽनुपयोगादनुक्तिः । इत्यादीत्यादिना जुहुयात्स्वर्गकाम इत्यादिपरिग्रहः । फलान्तरात् स्वर्गस्यैव स्वतः पुरुषार्थत्वादतिशयितत्वाच्चोद्देशवाक्यग्रहणम् । विधीयत इति । तथा च यतः स्वर्गोद्देश्यविधिविषयो भवति अतः प्रकृतसामान्यलक्षणाक्रान्तोऽपि भवति ; प्रकृतवाक्यस्य वेदवाक्यत्वात् , स्वर्गस्य च प्रयोजनत्वादित्युक्तं भवति ।

नन्विदं लक्षणं न सम्भवति । अनेन वाक्येन स्वर्गस्योद्देश्यत्वाबोधनात् । तद्वाचकपदाभावात् । न च यागस्य विधिविषयत्वान्यथानुपपत्त्या तत् कल्प्यत इति वाच्यम् । इष्टोद्देशमन्तराऽपि लोकेऽनाप्तानां विधिनिर्देशदर्शनेन कल्पनाया असम्भवात् । न चाप्तो वेदो न निरर्थे प्रवर्तयतीति तत् कल्पयितुं शक्यत इति वाच्यम् । अथापि यागे विधिविषयत्वाबोधनादेव कल्पयितुमशक्यत्वात् । ननु विधिविषयत्वं विधिविषयप्रवृत्तिविषयत्वम् , तच्च यागे बोधितमेवेति चेन्नैतत् । विधिप्रवृत्तिवाचकपदाश्रवणात् । वाक्यघटकं हि क्रियापदं यागादिक्रियामाह उपपदानि च द्रव्यगुणादीनि । किञ्च विधिप्रवृत्तिवाचकपदसद्भावेऽपि तयोर्यागप्रवृत्त्योश्च विषयविषयिभाव एव कुतः ? इत्याक्षेपे स्वर्गोद्देश्यताकल्पकस्य विधिविषयत्वस्य यागे समन्वयप्रकारं, तदर्थं विधिप्रवृत्तिवाचकपदसद्भावं, यागस्य प्रवृत्त्या प्रवृत्तेश्च विधिनाऽऽकांक्षितत्वं चोपपादयितुमाह तथा हीति । हि—यतः । यतस्तथोपपत्त्या गम्यते , अतस्तथैवाभ्युपेतव्यमित्यर्थः । उपपादयति यजेतेत्यादिना कृत्स्नेन ग्रन्थसन्दर्भेण । तत्र विधिवाचित्वं वाक्ये व्युत्पादयितुं यजेतेत्यत्र क्रियापदातिरिक्तांशसत्तामाह यजेतेति । अंशद्वयम् शक्तपदरूपावयवद्वयम् । विशिष्टस्यैव धातुत्वं क्रियापदत्वमिति भ्रमव्युदासाय यजीरिति धातुविशेषणम् ।

प्रत्ययश्च । तत्र प्रत्ययेऽप्यस्त्यंशद्वयम्, आख्यातत्वं लिङ्त्वं च । आख्यातत्वं च दशसु लकारेषु विद्यते । लिङ्त्वं पुनः केवलं लिङ्ग्येव । तत्राख्यातत्वालिङ्त्वाभ्यां भावनैवोच्यते । भावना नाम भवि-

---

अवशिष्टस्यैव प्रत्ययत्वमर्थसिद्धमिति तन्नोपात्तम् । एवं क्रियापदातिरिक्तांशसत्तामवगमय्य विधिप्रवृत्त्यंशौ दर्शयति तत्रेति । तत्र धातुप्रत्यययोः । प्रत्ययान्वयि घटकत्वं सप्तम्यर्थः । प्रत्ययेऽपीति । अपिर्यजेतेति विशिष्टपदसमुच्चये । अंशद्वयं शक्ततावच्छेदकधर्मद्वयम् । नन्वेकप्रत्ययगतयोरनयोर्घटत्वकलशत्वयोरिवैक्यमेवास्तु । तत् कथमंशद्वयमिति । तत्राह आख्यातत्वं चेति । लकारेषु लडादिषु । पुनरिति तुपर्यायं लिङ्त्वस्याख्यातत्ववैलक्षण्यद्योतकम् । केवलमिति लिङितरलकारवृत्तित्वव्यवच्छेदार्थम् । एवकारस्तस्यैव स्पष्टप्रतिपत्त्यर्थः । विधिवाचकेषु लोडादिष्वपि तद्व्यावृत्तिविज्ञानार्थो वा । तथा चाख्यातत्वस्य व्यापकधर्मत्वालिङ्त्वस्य व्याप्यत्वाच्च न समनियतघटत्वकलशत्वतुल्यत्वमित्यंशद्वयमेवेति भावः । एवं वाचकसत्त्वमुक्तम् । अथ वाच्यमाह तत्रेति । तत्र--धातुप्रत्ययाख्यातलिङ्त्वानां मध्ये आख्यातत्वलिङ्त्वाभ्यामिति । यद्यपि प्रत्ययस्यैव वचनकर्तृत्वम्; अथाप्यनयोरेव कर्तृत्वविवक्षया प्रयोगः । अवच्छिन्नत्वं वा तृतीयार्थः । प्रत्ययेनेति चाध्याह्रियते । उच्यते--शक्त्योपस्थाप्यते । अवच्छिन्नत्वस्यात्र धात्वर्थ उपस्थापने उपस्थापकत्वेऽन्वयः । आख्यातत्वं लिङ्त्वं च प्रत्ययनिष्ठार्थोपस्थापकतावच्छेदकम्, अत उपस्थापकता तदवच्छिन्नेति । एवकारेण वैयाकरणसम्मतमाख्यातस्य कर्त्रर्थकत्वं प्राभाकरनैयायिकादिसंम्मतमपूर्वेष्टसाधनत्वादिविशेषार्थकत्वं च व्यवच्छिद्यते । ननु केयं भावना ? न तावत्कर्तृव्यापारः, तस्य यागादिरूपस्य धातुनैवोपात्तत्वादाख्यातवाच्यत्वासम्भवात् । नापि यत्नः, तस्यापि लिङ्वाच्यत्वाभावादित्यत्राह भावनेति । भवितुरिति । भवितृसम्बन्धि यद्भवनं तदनुकूलो व्यापारविशेष इत्यर्थः । भवतेर्ण्यन्तादुत्पादयतिसमानार्थ-

**तुर्भवनानुकूलो भावकव्यापारविशेषः । सा च द्विविधा— शाब्दी भावना आर्थी भावना चेति । तत्र पुरुषप्रवृत्त्यनुकूलभावक-**

---

कान्निष्पन्नोऽयं भावनाशब्द उत्पत्त्यनुकूलव्यापारमाह । तत्र भवनस्योत्पत्तेरुत्पत्तृगततया **भवितुरित्युक्तम्** । यागादेरपि व्यापारस्य स्वर्गाद्यनुकूलत्वात्तत्र भावनाव्यवहाराभावात् **विशेष** इत्युक्तम् । भवितृपदेन तत्तद्भावनाभाव्यग्रहणेन लक्षणसमन्वयः । नन्वेकस्या एव भावनाया वाच्यत्वेशद्वयकीर्तनं व्यर्थमिति शङ्कापरिहाराय विधिप्रवृत्त्योर्विवेचनावश्यकतया च विभजते **सा चेति** । **शाब्दी** शब्दसंबन्धिनी । इदं च प्रकृताभिप्रायेण । अर्थभावनानुकूलव्यापारविशेषत्वेनैव विभागे तात्पर्यम् । अन्यथा लौकिक्याः प्रवर्तनायाश्शब्दनिष्ठत्वाभावेन पृथग्वक्तव्यतया द्वैविध्यभंगप्रसंगात् । आर्थी—अर्थसंबन्धिनी । परस्परं भावनयोर्भेदग्रहणायैकतरस्याश्शब्दवृत्तित्वमन्यस्याः शब्दभिन्नार्थवृत्तित्वं चालोच्यैवं व्यवहारः । अर्थः पुरुषार्थस्तद्भाव्यका भावनाऽऽर्थी भावनेत्यप्याहुः । एवं च भावनाद्वयशक्ततावच्छेदकं तद्धर्मद्वयमिति न दोष इति भावः ।

यद्यपि आख्यातत्वं लिङ्त्वं चेति शक्ततावच्छेदकविभागानुसारात्, अंशत्रयविशिष्टार्थभावनानिरूपणानन्तरमेव तद्घटितांशत्रयविशिष्टशब्दभावनानिरूपणौचित्याच्चेह व्युत्क्रमेण विभजनमेव युक्तम्; अथापि प्रकृतधर्मलक्षणे विधिविषयत्वस्यैव निवेशितत्वेन तत्रादावपेक्षितस्य विधेर्निरूपणम् । अनन्तरं विषयत्वनिरूपणाय द्वारीभूतार्थभावनानिरूपणमित्येष क्रम आदृतः । तथा प्रवर्तनाविषयत्वज्ञानाधीनमेवार्थभावनायाः समानपदोक्तधात्वर्थत्यागेन पुरुषार्थभाव्यकल्पनमित्यतोऽप्येष क्रमः । सामान्यस्य प्रथमं विशेषस्य पश्चाच्चोक्तिर्युक्तेति धर्मविषयेऽन्यथाक्रमादर इति ।

केयं शाब्दी भावनेत्यत्राह **तत्रेति** । तत्र शब्दभावनार्थभावनयोर्मध्ये । पुरुषप्रवृत्तीत्यनेन भावनालक्षणगतभवितृपदग्राह्यमुक्तम् । अनुकूलो

**व्यापारविशेषः शाब्दी भावना। सा च लिङ्त्वांशेनोच्यते, लिङ्श्रवणे 'अयं मां प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानयम्' इति नियमेन प्रतीयमानत्वात्। यच्च यस्मात्प्रतीयते तत्तस्य वाच्यम्, यथा गो-**

---

**व्यापारविशेष** इत्यनेन तत्र विग्रहः प्रदर्शितः। **विशेष**पदेन प्रवर्तकवाक्योच्चारणादिव्यावृत्तिः। अयमेव व्यापारविशेषः प्रवर्तना प्रेरणा विधिरित्येवमुच्यते। अस्या भावनाया उक्तयोरेकतरेण लिङ्त्वांशेन वाच्यत्वं सोपपत्तिकमाह **सा चेति**। **सा** शाब्दी भावना। **लिङ्त्वांशेन** लिङ्त्वरूपधर्मेण। तथा च प्रवर्तनारूपभावना लिङ्त्वावच्छिन्नशक्ततानिरूपिकेति प्रतिज्ञार्थः। हेतुमाह **लिङिति**। लिङो लिङादेशभूतस्य धातूत्तरभागस्य **श्रवणे** जाते सतीति शेषः। अस्य प्रतीयमानत्वादित्यत्रान्वयः। **नियमेने**ति तृतीयार्थो वैशिष्ट्यं प्रतीत्यन्वयि। तथा च लिङ्श्रवणानन्तरनियतप्रतीतिविषयत्वादिति हेत्वर्थः। अत्र लिङो लक्षणया क्वचिदर्थान्तरपरत्वे तत्रापि लिङ्श्रवणानन्तरप्रतीतिविषयत्वस्य सत्त्वात्साध्यस्य चाभावाद्व्यभिचारः। तथा गामानयेरित्येवं लिङ्श्रवणे प्रवर्तनाया इव गवादेरपि प्रतीयमानत्वात्तत्र व्यभिचार इति नियतत्वनिवेशः। प्रतीत्याकारमाह **अयमिति**। अयमित्यनेन वेदे लिङादेर्लोके आचार्यादेश्च परिग्रहः। प्रवर्तयतीत्यस्य प्रवृत्त्यनुकूलव्यापारानुकूलकृतिरर्थ इति तावत्पर्यन्तस्यैव लिङ्वाच्यत्वम्, न तु प्रवृत्त्यनुकूलव्यापारमात्रस्येति शङ्का मा भूदित्याकारान्तरमाह **मदिति**। ननु दृष्टान्तासिद्धिः। न हि प्रकृतभावनाभिन्नं यत्किञ्चित् लिङ्श्रवणोत्तरप्रतीतिविषयो लिङ्वाच्यं च दृष्टमित्यत सामान्यतो दृष्टान्तं वक्तुं सामान्यमुखीं व्याप्तिं दर्शयति **यच्चेति**। **यत्** वस्तु। **यस्मात्** शब्दात्। **प्रतीयत** इति। यद्वस्तु यच्छब्दश्रवणानन्तरनियतप्रतीतिविषय इत्यत्र तात्पर्यम्। **तत्** वस्तु **तस्य** शब्दस्य। दृष्टान्तं दर्शयति **यथेति**। गोत्वं दृष्टान्तः। **गोशब्दस्ये**ति तु तत्र हेतुसाध्यसङ्गमनायो-

पादेयशब्द उक्तः । गोशब्दस्य गोत्वावच्छिन्नव्यक्तिवाचित्वाभावस्य विशेषणभूतगोत्ववाचित्वस्य चाकृत्यधिकरणसिद्धत्वात् गोत्वमित्युक्तम् , न तु गौरिति ।

इदमत्र बोध्यम्—परप्रेरितप्रवृत्तिसामान्ये प्रवर्तनाज्ञानं हि कारणम् । एवञ्च गामानयेः अश्वं नयेरित्येवं तेन तेन प्रयोजकवृद्धेन प्रेरितः स स प्रयोज्यवृद्धो यत् कर्मसु प्रवर्तत इति , तत्र नूनं तस्य तस्य प्रयोज्यवृद्धस्यायं मां प्रवर्तयतीति ज्ञानमावश्यकमिति निश्चीयते । अथ च तत्र ज्ञाने विषयीभवत अयमिति नियोजकस्य मामिति नियोज्यस्य अत्रेति विषयस्य च भिन्नभिन्नत्वेन न तेषु लिङ्श्रवणनियतप्रतीतिविषयत्वमस्ति । या तु तत्र सर्वत्र ज्ञाने विषयभूता प्रवर्तना तत्रैव तदस्तीति निर्धार्यते । एवं लिङ्श्रवणानन्तरनियतप्रतीतिविषयत्वस्य पक्षे निश्चयात्साध्यमिदमनुमीयत इति ।

ननु यो यच्छब्दश्रवणानन्तरनियतप्रतीतिविषयः स तच्छब्दगतानुपूर्व्यवच्छिन्नशक्ततानिरूपक एव दृष्टः । एवञ्च प्रकृते यजेतेत्यादौ तेत्यंशस्यैव श्रवणात् तद्गतानुपूर्व्यवच्छिन्नशक्ततानिरूपकत्वमेवानुमातुं शक्यते । न तु लिङ्त्वावच्छिन्ननिरूपकत्वम् । उच्यते । शब्दश्रवणानन्तरं तावत् अर्थे प्रतीते तस्य शब्दस्य तदर्थवाचकत्वमित्येतावदेव प्रथममध्यवसीयते । अथ वाचकतावच्छेदकजिज्ञासायां श्रूयमाणाया एवानुपूर्व्या अन्यूनानतिप्रसक्तत्वे तस्या एव तथात्वं कल्प्यते । यदि तु तस्या न्यूनत्वं तदा तां विहायान्यस्या एव तथात्वं कल्पनीयम् । प्रकृते च यजेतेत्यत्रेव यजेयातां यजेरन्नित्यादावपि श्रुते प्रवर्तनाप्रतीतिरस्ति । अत एषु सर्वेष्वपि विद्यमानस्य धर्मस्यैव तथात्वं कल्पनीयम् । एवं सत्यपि यदि प्रतीतिकारणेषु सर्वेष्वनुगतानतिप्रसक्तस्य कस्यचिद्धर्मस्यानुपलम्भः स्यात् ; तदा प्रत्येकमेवानुपूर्व्यास्तथात्वं सोढव्यं स्यात् । यथा घटकलशादिपदेषु लिङ्लेडादिषु च । अत इहैकवचनद्विवचनादिषु सर्वत्र लिङिति व्यवहार-

**स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाभावाल्लिङादिशब्द निष्ठ एव।**

---

दर्शनात् प्रवर्तनाबोधकत्वराहित्येषु तद्व्यवहारादर्शनाल्लिङ्त्वस्य तथात्वमङ्गीकर्तुं युक्तम् । अत एवमेकवचनद्विवचनादिसर्वलिङ्गप्रत्ययश्रवणानन्तरनियतप्रतीतिविषयत्वमिहावगच्छता लडादिश्रवणे चाप्रतीयमानत्वं निश्चिन्वता पुरुषेण सर्वप्रत्ययानुगतानतिप्रसक्तलिङ्त्वावच्छिन्नशक्ततानिरूपकत्वमनुमातुं शक्यमिति ग्रन्थकारहृदयमिति ।

नन्वस्या भावनायाः शाब्दीति कुतो व्यपदेशः ? न तावच्छब्दजन्यत्वात् ; एतद्ज्ञानस्य शब्दजन्यत्वेऽप्येतस्या अतथात्वात् । नापि शब्दप्रतिपाद्यत्वात् ; तथात्वस्यार्थभावनायामपि तुल्यत्वात् । अथशब्दनिष्ठत्वादयं व्यपदेश इति , तदपि न ; लोके अयं मां प्रवर्तयतीत्याचार्यादिपुरुषनिष्ठत्वेनैवानुभवेन तदसम्भवादित्यत्राह **स** चेति । लोक इति । लौकिकवाक्यघटकलिङादिप्रत्ययोपस्थाप्य इत्यर्थः । **अभिप्रायविशेष** इति । अयमत्र प्रवर्ततामित्याकारकोऽभिप्राय इत्यर्थः । वेद इति । वेदघटकलिङादिप्रत्ययोपस्थाप्य इत्यर्थः । **लिङादिशब्दनिष्ठ** एवेति । लिङ इव लोडादेरपि प्रवर्तनावाचित्वसिद्धिं मनसि कृत्वाऽऽदिपदम् । एवकारः पुरुषनिष्ठत्वव्यवच्छेदार्थः । यो लिङादिर्वाचकस्तन्निष्ठ एवेत्यभिप्रायको वा। अत्र हेतुः पुरुषाभावादिति । अयं भावः--वैदिकलिङुपस्थाप्यस्यापि व्यापारस्य व्यापारत्वादेव किञ्चिदाश्रितत्वं तावदावश्यकम् । तत्र लोक इव पुरुषाश्रितत्वं तावन्न सम्भवति । लौकिकलिङादेर्निर्मातृसत्वात् वैदिकलिङादेस्तदभावात् । न च निर्मात्रभावेऽप्यध्येतृध्यापकपुरुषसत्त्वात्तन्निष्ठत्वमेवास्त्विति शंक्यम् । लिङुपस्थाप्यस्य व्यापारस्य स्वतन्त्रोच्चारयितृपुरुषगतत्वस्यैव लोके दर्शनेन तदतिरिक्तपुरुषगतत्वकल्पनायोगात् । अतः पुरुषाश्रितत्वाभावे सिद्धे लिङादिव्यतिरिक्तनिष्ठत्वायोगे च सति लिङादिनिष्ठ-

**न हि वेदः पुरुषनिर्मितः ।**

**'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा ॥'**

---

त्वमेव सिद्ध्यतीति । नन्वसिद्धः पुरुषनिर्मितत्वाभावः, येन पुरुषाश्रितत्वाभावो लिङ्गादिनिष्ठत्वं च कल्प्येत । वेदः पुरुषनिर्मिताः वाक्यत्वादित्यनुमानेन पुरुषनिर्मितत्वसिद्धेरित्याक्षेपं क्षिपति **न हीति** । **हि** यतः । **पुरुषनिर्मित** इति । इति वक्तुं शक्यत इति शेषः । तेन साधितत्वादिति वक्ष्यमाणो हेतुः सम्यक् सम्बध्यते । अथ वा पुरुषनिर्मितत्वाभाव एव साध्यते । हेतुश्च येन पौरुषेयत्वं ग्रन्थान्तरे साधितं स एव विवक्षितः । तत्र प्रामाणिकत्वसूचनाय पुनस्साधितत्वादित्येवमुक्तिः । हेतुमाह **वेदस्येति** । अत्र न सामानाधिकरण्येन गुर्वध्ययनपूर्वकत्वं साध्यते । दृष्टान्तमादाय सिद्धसाधनप्रसङ्गात् । अपित्वध्ययनत्वावच्छेदेनैव । अत उक्तं **सर्वमिति** । एवञ्च भारतप्राथमिकाध्ययने बाधप्रसङ्गाद्वेदस्येत्युक्तम् । नन्वद्यतनवेदाध्ययने गुर्वध्ययनपूर्वकत्वस्य सिद्धत्वेनांशतास्सिद्धसाधनमिति चेत्—अस्तु । तावता सामान्यतः साध्यसाधने किं बाधकम् ? अथ वा यावति वेदाध्ययने साध्यमसिद्धं तावत एव पक्षत्वमित्यदोषः । नन्वेवं सर्वमिति विरोत्स्यते । न । सन्दिग्धसाध्यकस्य सर्वस्य ग्रहणार्थत्वात् । तदेकदेशस्यैव पक्षत्वमस्तु को दोष इति चेत्—तथा सति पक्षभिन्ने हेतुमति साध्याभावसंशयाद्व्यभिचारसंशयः, वेदाध्ययनसामान्ये गुर्वध्यनपूर्वकत्वासिद्ध्या पुरुषनिर्मितत्वाभावासिद्धिश्चेति । **गुर्वध्ययनपूर्वकमिति** । गुरुनिष्ठं यत् गुरुमुखोच्चारणानूच्चारणं तत्पूर्वकमित्यर्थः । अत्र हेतु**र्वेदाध्ययनसामान्या**दिति । वेदकर्मकाध्ययनत्वादित्यर्थः । वेदाध्ययनवाच्यत्वादित्यद्यतनवार्तिकपाठः । इह वेदपदं भारताध्ययने व्यभिचारवारणाय । दृष्टान्तमाहाधुनेति । साधितत्वादिति वार्तिक इति शेषः । अयं भावः—यो य

इदानीं वेदमध्यापयति, स स स्वयमन्यस्मादधीत्यैवाध्यापयतीति लोके दृष्टम्। एवमुपलभ्यमानेष्वध्ययनेषु गुर्वध्ययनपूर्वकत्वदर्शनात् तन्न्यायेन सर्वत्राप्यध्ययने तदनुमीयते। अतश्च गुर्वध्ययनपूर्वकत्वस्य वेदाध्ययनसामान्यवृत्तित्वसिद्धौ स्वाध्ययनसामान्यवृत्तिगुर्वध्ययनपूर्वत्वकत्वेन हेतुना वेदस्यापौरुषेयत्वं कल्पनीयम्। अतो वाक्यत्वहेतोस्सत्प्रतिपक्षितत्वेन न साधकत्वम्। एवं च बाधकप्रमाणाभावादुक्तरीत्या चापौरुषेयत्वमेवेति। न चैवं तुल्यन्यायात्—

भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
भारताध्ययनत्वात्स्यादधुनाऽध्ययनं यथा॥

इति वक्तुं शक्यमिति भारतादेरप्यपौरुषेयत्वं प्रसजेदिति वाच्यम्। तस्य सकर्तृकत्वेनैव स्मर्यमाणतया तस्य चाबाधितत्वेन गुर्वध्ययनपूर्वकत्वस्य तदध्ययनसामान्यवृत्तित्वासम्भवात्। न चैवं प्रकृतेऽस्ति। न हि पारम्पर्येण कर्तारमध्येतारः स्मरन्ति।

नन्वस्तु वेदाध्ययनत्वम्। मास्तु च गुर्वध्ययनपूर्वकत्वम्। अतोऽप्रयोजकत्वादयं हेतुरप्रतिपक्षः। न च 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनस्यैव प्राप्त्युपायतया नियमितत्वेन श्रुत्यनुगृहीतस्य हेतोर्नाप्रयोजकत्वमिति वाच्यम्—इयं हि श्रुतिः विद्यमानस्य स्वाध्यायस्याध्ययनं प्राप्त्युपायमाह। तस्य विद्यमानतैव कथमिति जिज्ञासायां यदि तावदपौरुषेयतया विद्यमानत्वं प्रागेव निश्चितम्, तर्हि तस्याध्ययनमन्तरा प्राप्तिर्न भवतीति हेतुरयं नाप्रयोजकः स्यात्। अतो भारतादिकमधीत्यैव ग्रहीतव्यमिति वचनस्येव नास्याप्रयोजकत्वापाकरणसामर्थ्यमिति। अपि च बहवो महर्षयस्तपःप्रभावत एव दृष्टश्रुतयः शिष्यानध्यापयांबभूवुरिति प्रमाणसिद्धम्। तथा च तदीयशिष्याध्ययने गुर्वध्ययनपूर्वकत्वरूपसाध्याभाववत्तया निश्चिते वेदाध्ययनत्वरूपहेतुसद्भावाद्व्यभिचारः। न च तादृशप्रमाणसमर्पितयथा-

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात् । 'यः कल्पः स कल्पपूर्वकः' इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशती-

---

श्रुतार्थानामबाधितानामसत्वं सुवचम् । न वा तपःप्रभावतः श्रुतिदर्शनस्याध्यापनपूर्वकत्वकल्पनं युक्तम् । अपि च सर्गाद्यकालिके ब्रह्मकर्तृके वेदाध्ययने भगवत एव गुरुत्वेन गुर्वध्ययनपूर्वकत्वासम्भवाद्व्यभिचारः—इति शङ्कायां वाक्यत्वहेतोरप्रयोजकत्वं दोषान्तरमाह य इति । एवं सर्गप्रलयेश्वराद्यङ्गीकारेणाभिधानं परमतं मीमांसकैकदेशिमतं चादृत्य । कल्पपूर्वक इति । अनादीनां स्वरूपतो विशुद्धानां जीवानामस्मिन् जन्मन्युपलभ्यमानायाः सुखदुःखादिव्यवस्थायाः पूर्वजन्मकृतकर्मवैचित्र्यनिबन्धनत्वावश्यंभावात्, तथा तज्जन्मस्थितव्यवस्थायास्तत्पूर्वकृतकर्मवैचित्र्याधीनत्वादेवं जन्मपरम्पराया आवश्यकत्वे यत्सर्गादौ जन्म, तस्यापि जन्मान्तरपूर्वकत्वसिद्धये कल्पान्तरपूर्वकत्वमभ्युपेत्यम् । एवं सर्वोऽपि कल्पः कल्पपूर्वक इत्यर्थः । इति न्यायेनेति । एतदर्थोपपादककर्माधीनत्वरूपहेतुनेत्यर्थः । अनादित्वात् स्ववृत्तिसंसारत्वव्यापकसंसारपूर्वकत्वविशिष्टत्वात् । विवक्षिते गतकल्पीयवेदस्मरणपूर्वकोपदेशे गतकल्पसद्भावप्रदर्शनायैतावदुपात्तम् । अथ स्मरणोपपत्तये ईश्वरस्य च सर्वज्ञत्वादिति । नन्वीश्वरः सर्वज्ञ इति सत्यम् । स कथमेतत्कल्पीयो गतकल्पीयं स्मरिष्यतीति शङ्कापनुत्तये पुनरीश्वरपदेनैव तदुपादानम् । स हि सर्वदा जगत्स्रष्टा नियन्ता च नित्य इति भावः । गतकल्पीयमिति । गतकल्पस्थितमित्यर्थः । यस्य कर्मवैचित्र्यस्योपपत्तये गतकल्पाङ्गीकारः तस्य वेदार्थानुष्ठानाधीनतया तत्रापि वेदोऽङ्गीकरणीय इति भावः । स्मृत्वेति । यद्यपि नित्यप्रत्यक्षात्मकज्ञानवतीश्वरे संस्कारजन्यस्मरणस्य न प्रसक्तिः— अथापि तत्कालानभिव्यक्ततत्पूर्वकालानुभूतवेदविषयकत्वमात्रेण तथोक्तिः । उपदिशतीति । सर्वस्मिन्नपि भूते भवति भविष्य-

**त्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च । ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा ।**

---

ति च कल्पे उपदेशस्य कल्पनीयतया नित्यत्वेन लट्प्रयोगः । **एतावतैव** अरचितस्थितवेदस्मरणोपदेशकल्पनमात्रेण । एवकारेण रचितत्वककल्पनाऽव्यवच्छेदः । **उपपत्तौ** अद्याध्ययनाध्यापनौपयिकसद्भावसिद्धौ । **प्रमाणान्तरेण** उपनिषदादिप्रमाणेन । **अर्थं** सर्गप्रलयेश्वरतदध्यापनरूपम् । अथ वा **प्रमाणान्तरेण** प्रत्यक्षादिप्रमाणेन । **अर्थं** लौकिकवाक्येषु पौरुषेयत्वम् । **उपलभ्येति** अस्य कल्पनेऽन्वयः । "**प्रमाणान्तरेण** इन्द्रियादिना **अर्थं** अलौकिकं स्वर्गतत्साधनादिरूपं **उपलभ्य** ज्ञात्वा यद्वचनं तदनुमानानुपपत्ते"रिति तु नार्थः । ईश्वरज्ञानस्य प्रमाणान्तरनिरपेक्षत्वेन **प्रमाणांतरेणे**त्यस्यासङ्गतेः । योगिन एव वेदविधातार इति शङ्कापरिहारपरतया प्रघट्टकार्थवर्णने पुनस्तथा शक्यते वक्तुम् । तदा ईश्वरो गतकल्पीयमित्यत्रेश्वरपदं सर्गारम्भे योगिनामुपदेशकत्वव्यवच्छेदगर्भमिति ध्येयम् । '**प्रमाणान्तरेण** प्रत्यक्षरूपमित्या । **उपलभ्य** विषयीकृत्ये'त्यर्थकल्पनायां त्वीश्वरपक्षेऽप्यस्य रचितत्वपदेनान्वयः सम्भवति । स तु क्लिष्टः । **रचितत्वकल्पनानुपपत्ते**रिति स्वतन्त्रप्रणीतत्वानुमानस्यायुक्तत्वादित्यर्थः ।

यदि परिच्छिन्नः कल्प एक एव स्यात् तदा तत्पूर्वापरकालयोर्वेदास्तित्वावश्यकताया अभावेन वेदस्य पौरुषेयत्वमङ्गीक्रियेतापि । अनन्तत्वात्तु कल्पानां, तेषु सर्वेषु वेदस्यावश्यकत्वाच्च नैतत्सम्भवति । अथ प्रतिकल्पं वेदो रच्यत इत्यभ्युपगमेन सर्वत्र वेदसद्भाव उपपाद्यते— तन्न । कदाचित्कृतस्यैवानन्तरकल्पेषु सर्वेषु स्मरणपूर्वकोपदेशसम्भवेन पौनःपुन्येन वेदरचकल्पनस्यायुक्तत्वात् । न च तथैवाभ्युपगन्तुं शक्यम् । यदा कृतस्तत्पूर्वकल्पे तदभावप्रसङ्गात् । अत एव प्रतिकल्पं रचनं सोढव्यमिति चेत्;

**अत एव शाब्दी भावनेति व्यपदिशन्ति ।**

**सा च शाब्दी भावनांऽशत्रयमपेक्षते, साध्यं साधनमितिकर्तव्यतां चेति । तत्र साध्याकाङ्क्षायां**

---

न हि सर्वज्ञः पूर्वकल्पीयं वेदमद्य प्रत्यक्षयन्नपि तं परित्यज्यान्यमेव रचयित्वोपदिशतीति सांप्रतम् । एवमनन्तरचनाकल्पनमपेक्ष्य वेदस्य पुरुषबुद्धिनिरपेक्षत्वाङ्गीकरणमेव श्रेयः । तथा च वाक्यत्वरूपहेतुरप्रयोजक इति भावः ।

ननु 'छन्दांसि जज्ञिरे तस्मा'दित्यादिश्रुत्युपजीवनान्नाप्रयोजकत्वमिति । नैतत् । तस्याः पूर्वस्थितप्रादुर्भावमात्रपरत्वात् । तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त । अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेद इति श्रुत्यन्तरविरोधप्रसङ्गेनैकान्तेनेश्वरकृतत्वनिर्धारणासम्भवाच्च । न च द्रष्टृत्वप्रवक्तृत्वाभ्यां तन्निर्वाह इति वाच्यम् । तस्येहापि तुल्यत्वात् । अत-एव 'वाचा विरूप नित्यया' 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥' इत्येवं श्रुतिस्मृतयो भवन्ति ।

एवं पुरुषनिर्मितत्वाभावमुपपाद्य शब्दनिष्ठत्वं निगमयति तत्रश्चेति । एवकारेण पुरुषनिष्ठत्वव्यवच्छेदः । एवं सिद्धं शब्दनिष्ठत्वमेव शाब्दीति व्यपदेशनियामकमित्याह अत एवेति । व्यपदिशन्तीति । मीमांसका इति शेषः । पुरुषप्रवृत्त्यनुकूलव्यापार एवायं किंरूप इत्युपरिष्टाद्विवेचयिष्यते । इह तु वाचकवाच्यसद्भावमात्रमुक्तम् ।

एवं विधिनाम्नीं शब्दभावनामुपपाद्य तद्विषयत्वं यागस्योपपिपादयिषुस्तत्र पदार्थान्तरान्वयप्रदर्शनाय तस्याः साकांक्षत्वमाह सा चेति । अंशत्रयमाह साध्यमिति । साध्यं साधनमितिकर्तव्यतां चापेक्षते । इत्यंशत्रयमपेक्षत इत्यन्वयः । भावयेदित्युक्ते किं केन कथमित्येवाकांक्षाक्रमो लोकेऽपीति एवमाकांक्ष्यक्रमादरः । साध्यादिकं क्रमेणाह तत्रेत्यादिना । तत्र तिसृष्वाकांक्षासु । न न्वर्थभावनाया इहान्वयेऽपि कथं यागादेर्वि-

**वक्ष्यमाणांशत्रयोपेताऽऽर्थी भावना साध्यत्वेन संबध्यते, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः । यद्यपि संख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाऽप्ययोग्यत्वान्न तेषां भाव्यत्वेनान्वयः ।**

**करणाकाङ्क्षायां**

---

धिविषयत्वं ? कथञ्च स्वर्गस्योद्देश्यत्वमित्यत्राह **अंशत्रयोपेतेति** । नन्वंशान्तरासंस्पृष्टायामेव भावनायां समानाभिधानश्रुत्या विधिस्पर्शात् कथं विशिष्टभावनायाः साध्यत्वमिति ; उच्यते । यद्यपि विधिः केवलामेव भावनां प्रत्यासन्नां विधातुं प्रक्रान्तः ; अथाप्यंशत्रयापूर्णां तां विधातुमशक्नुवन् तावत् प्रतीक्षेत यावदियमंशत्रयपूर्णा न किञ्चिदन्यदपेक्षमाणाऽन्वययोग्यतामापत्स्यते । यदाहुः 'तस्मात्प्रक्रान्तरूपोऽपि विधिस्तावत् प्रतीक्षेत । यावद्योग्यत्वमापन्ना भावनाऽन्यानपेक्षिणी' इति । इदमप्यत्र**ांशत्रयोपेते**त्यत्राभिसंहितम् । कथमार्थी भावना किमिदमंशत्रयम् । तत्रोक्तं **वक्ष्यमाणेति** । **सम्बध्यते** अन्वेति । कथमस्या एव साध्यत्वेनान्वयस्तत्राह **समानाभिधानश्रुतेरिति** । कथमियमित्यत्रोक्तं **एकप्रत्ययगम्यत्वेनेति** । **समानपदमेकार्थकम्** । **अभिधानपदमभिधायकपरम्** । तच्च प्रकृते प्रत्ययरूपमिति भावः । ननु समानाभिधानश्रुतिरेव यदि नियामिका तर्हि तिङुपात्तसंख्यादिविषयेऽपि तत्सत्त्वेन तान्यादाय विनिगमनाविरह इत्याशङ्कां परिहर्तुमुद्भावयति **यद्यपीति** । **सख्यादीना**मित्यादीना लक्षणावृत्त्युपस्थाप्यकर्तृकर्मादिपरिग्रहः । **एकप्रत्ययगम्यत्वमिति** । अतः समानाभिधानश्रुतिरस्तीति भावः । **समानमिति** । अर्थभावनयेति शेषः । **अयोग्यत्वात्** प्रवर्तनोद्देश्यत्वायोगात् । **भाव्यत्वेन** साध्यत्वेन ।

अथ करणमाह **करणेति** । यद्यपि साध्याकांक्षायामर्थभावनाया अन्वये तस्या अंशत्रयवैशिष्ट्ये च ज्ञाते तावतैव यागादौ विधिविषयत्वस्य निरूपितत्वात् करणादिनिरूपणं व्यर्थमिव ; अथापि करणेतिकर्तव्यतयोरलाभे साध्यसाधनासम्भवेन प्रवृत्तेरात्मलाभाभावे तद्विषयत्वं यागादौ दुर्वचमेवेति तन्निरूप-

**लिङादिज्ञानं करणत्वेन संबध्यते । तस्य च करणत्वं न भावनोत्पादकत्वेन, सन्निकर्षस्येव रूपादिज्ञाने; सन्निकर्षा**

---

णम् । **लिङादिज्ञानम्** आदिना लोट् तव्यादिपरिग्रहः । यद्यपि प्रवर्तनाज्ञानस्यैवेष्टसाधनतानुमितिद्वारा क्रियाविषयकप्रवृत्तिहेतुत्वमिति तस्यैव करणत्वमुच्यते। न तु तस्यापि प्रयोजकत्वेन व्यवहितस्य लिङ्ज्ञानस्य; अथापि केवलप्रवर्तनाज्ञानस्य करणत्वे लिङाद्यजन्यस्य प्रवर्तनादिपदजन्यस्य तस्य प्रवर्तकत्वापत्तेर्लिङादिज्ञानजन्यप्रवर्तनाज्ञानत्वेन करणत्वं वक्तव्यम् । तदपेक्ष्य तद्घटकलिङादिज्ञानस्यैव तत्त्वमङ्गीकर्तुं युक्तम् । न हि व्यवहितस्य करणत्वं न भवति । व्रीहिभिर्यजेतेत्यादौ तद्दर्शनात् । इष्टसाधनताज्ञानस्यापीच्छाद्वारैव प्रवृत्तिहेतुत्वेन प्रवर्तनाज्ञानस्याप्यव्यवहितत्वाभावाच्चेत्याशयः । अत एव लिङ्पदशक्तिज्ञानकरणतापक्षोऽपि नाङ्गीकृतः । **सम्बध्यत** इति । यद्यप्यशाब्दस्य शाब्देनान्वयासम्भवात् लिङ्ज्ञानस्य च शब्दगम्यत्वाभावान्नान्वयो वक्तुं शक्यते ; अथापि तद्वाचकं पदमध्याहर्तव्यमिति हृदयम् । ननु किमिदं लिङादिज्ञानस्य प्रवर्तनाकरणत्वम् ? न तावत्तन्निष्पादकत्वम्; असम्भवात् । न च प्रवर्तनाज्ञानकरणत्वमेव तत् । ईदृशस्य करणत्वस्य सर्वशब्दज्ञानसाधारण्येन विशेषाभावादनाकांक्षितत्वाच्चेत्यत्राह **तस्य चेति** । तस्येति लिङादिज्ञाननिष्ठमित्यर्थः । **करणत्वं** भावनाकरणत्वम् । **भावनोत्पादकत्वेनेति** । भावनोत्पादकत्वरूपमित्यर्थः । एवमुत्तरत्रापि । **करणत्वमित्यस्य** वा करणशब्दवाच्यत्वमित्यर्थः । **सन्निकर्षस्येवेति** । यथा चक्षुःसंयुक्तसमवायचक्षुःसंयोगादिरूपस्य सन्निकर्षस्य रूपघटादिविषयकप्रत्यक्षे करणत्वं तदुत्पादकत्वरूपम्, तथा न प्रकृत इति वैधर्म्यदृष्टान्तः । सन्निकर्षस्येवाव्यवधानेनोत्पादकत्वं मा भूत् । चक्षुष इव व्यवधानेन करणत्वं स्यादिति मा शङ्कितव्यमिति आशयमाविष्करोति **सन्निकर्षादिति** । तथा च साक्षाद्वा परम्परया वोत्पादकत्वरूपं

त्प्राक् रूपज्ञानस्येव लिङादिज्ञानात्प्राक् शब्दधर्मभावनाया अभावप्रसङ्गात्, किन्तु भावनाभाव्यनिर्वर्तकत्वेनैव । लिङादिज्ञानं हि शब्दभावनाभाव्यार्थभावनां निर्वर्तयति, कुठार इव च्छेदनम् । अतो लिङादिज्ञानस्य करणत्वेनान्वयः ।

---

करणत्वं न सम्भवतीति भावः । अभावप्रसंगादिति । भावनाश्रयभूतस्य वेदशब्दस्य नित्यत्वेन तद्धर्मभूतायास्तस्या उत्पाद्यत्वे प्रमाणाभावेन नित्यत्वादभावसद्भावस्यानिष्टत्वादिति भावः । एतत्सूचनाय भावनायां शब्दधर्मेति विशेषणम् । अथ वा शब्दधर्मेति अर्थभावनाव्यावृत्त्यर्थमेव । प्रसञ्जनीयस्यानिष्टत्वं पुनरित्थम् । प्रवृत्तिरूपाया अर्थभावनाया लिङ्ज्ञानात् प्रागसत्त्वं शक्यमभ्युपेतुम् । अभ्युपेत्यं च । न हि तदन्तरा प्रवृत्तिर्भवति । प्रवर्तनारूपाया भावनाया अपि तथात्वं तु न युक्तम् । तथा सति लोके लिङ्ज्ञानस्यैवाभावप्रसङ्गात् । प्रेरकोऽपि पुरुषः प्रथमं अयमत्र प्रवर्ततामिति स्वयमभिप्रेत्यानन्तरं लिङं प्रयुंक्ते । अनन्तरमेव च प्रेर्यस्य तद्ज्ञानमुदेति । एवञ्च प्रवर्तनैव लिङ्ज्ञानस्य प्रयोजिका दृश्यत इति प्रवर्तनायाः प्राग्भाव एवेष्टः । अतो वेदेऽपि न लिङ्ज्ञानजन्यत्वं प्रवर्तनायामिति । किं तर्हि तत् करणत्वं तदाह किन्त्विति । उपपादयति लिङादीति । ननु जाते लिङादिज्ञाने समनन्तरमेवार्थभावनाया निर्वृत्तिर्न ज्ञायते । अतः कथं निर्वर्तकत्वं तत्राह कुठार इति । यथा कुठार उद्यमननिपातनादिकर्मीभूय वृक्षेऽभिघातमुत्पाद्य द्वैधीभावस्य निर्वर्तकः, तथा लिङादिज्ञानमपि प्रवर्तनाज्ञानकारणीभूयेष्टसाधनत्वानुमितिमुत्पाद्य प्रवृत्तेर्निर्वर्तकमित्यर्थः । भावना हि प्रथममुद्देश्यमाकांक्ष्य पश्चादात्मन्युद्देश्यत्वेनान्वितस्यैव करणं, किमस्य करणमित्याकांक्षति । न पुनरात्मनः किं करणमिति । अतः करणाकांक्षेत्युक्ते स्वभाव्यकरणाकांक्षेत्येवार्थ इति युक्तं लिङ्ज्ञानस्य करणत्वमित्यभिप्रेत्योपसंहरति अत इति ।

इतिकर्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्तव्यतात्वेन संबध्यते।

इतिकर्तव्यतामाह इतीति । प्राशस्त्यज्ञानमिति । यद्यपि वक्ष्यमाणविधयाऽर्थवादानां प्राशस्त्यमेवार्थ इत्यशाब्दस्य तद्ज्ञानस्यान्वयो न घटते । अथापि तस्यैवेतिकर्तव्यतात्वमभिप्रेतम् । स्वरूपतस्तस्या-तथात्वात् ज्ञानद्वारैव तथात्वाद् ज्ञानपर्यन्तमुक्तम् । सम्बध्यत इति । वि-धिर्हि विधीयमानस्येष्टसाधनत्वानुमापनेन प्रवर्तयन् तस्य तात्कालिकदुःख-जनकत्वेन द्वेषसम्भवात् प्रवृत्त्यभावः प्रसजतीति तादृशद्वेषनिवर्तनेन प्रवृ-त्तिनिर्वर्तनाय प्राशस्त्यज्ञानमपेक्षत इति तस्यैव तथाऽन्वय इति भावः ।

नव्यास्तु—यद्यपि शब्दभावनाभाव्यभूतायाः प्रवृत्तेः प्रयोजकत्वेन लि-ङ्ज्ञानस्य करणत्वं प्राशस्त्यज्ञानस्य च सहकारित्वेनेतिकर्तव्यतात्वम् ; तथा-पि न तयोस्तत्तद्रूपेण भावनायामन्वयः, अशाब्दत्वादिति प्राहुः ।

एषामयमभिप्रायः—न हि शाब्दमशाब्देनान्वेतीति न्यायादशाब्द-योस्तयोरन्वयो न संभवति । न चाकांक्षानुरोधादध्याहारः । आकां-क्षाया एवावश्योत्पत्त्यभावात् । अध्याहारोऽपि न संभवति । न हि दर्श-पूर्णमासाभ्यां यजेत लिङ्ज्ञानेन स्वर्गकाम इतीदृशं वाक्यं क्वापि प्रयुज्यते। कारकाणामर्थभावनारूपक्रियान्वयस्यैव व्युत्पत्तिसिद्धतया लिङ्ज्ञानस्य शब्द-भावनायामन्वयासम्भवादेव तादृशप्रयोगो न भवति । अत एवार्थवादो-पात्तं प्राशस्त्यमप्यर्थभावनायामेवान्वेति, न शब्दभावनायामिति ।

अथायं प्राचामाशयः—न प्रतिविधिवाक्यं शब्दभावनायां लिङ्ज्ञान-स्य करणत्वेन प्राशस्त्यस्येतिकर्तव्यतात्वेन चान्वय इष्यते । किं तर्हि? यत्र सकलविधिवाक्योपात्ताश्शब्दभावना एवार्थभावनात्वं लभन्ते तत्र स्वा-ध्यायोऽध्येतव्य इति वाक्ये । कथं? उच्यते । तत्र हि अध्ययनेन स्वाध्यायं संस्कुर्यादिति वाक्यार्थेऽवगते संस्कृतस्य स्वाध्यायस्य विनियोगा-पेक्षायां, अध्ययनगृहीतार्थज्ञानसाधनीभूतस्वाध्यायेन तत्तद्यागहोमादिगोचर

तच्च प्राशस्त्यज्ञानं 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादै-

पुरुषप्रवृत्तिं भावयेदिति वाक्यं कल्प्यम् । तत्राख्यातोपात्तार्थभावना सर्वविधिवाक्यगतशब्दभावनैव । तस्या एव यागादिप्रवृत्तिरूपार्थभावनाभाव्यकत्वसंभवात् । सा च शब्दभावना तत्र वाक्ये लिङुपात्तेन शब्दभावनान्तरेण विधीयते । विधीयमानायाश्चार्थभावनात्वानापन्नायास्तस्या अंशत्रयापेक्षायां योग्यतावशात् पुरुषप्रवृत्तिमिति प्रवृत्तेर्भाव्यत्वेन लिङादिज्ञानेनेत्यस्य करणत्वेन सकलार्थवादोपात्तप्राशस्त्यस्य चेतिकर्तव्येतात्वेनान्वय इति न कश्चिद्दोष इति ।

अत्र वदन्ति—एवमर्थवादोपात्तस्य प्राशस्त्यस्य स्वाध्यायविधिकल्पितवाक्यार्थान्वये तत्तद्विधिसन्निहितार्थवादस्य तत्तद्विध्येकवाक्यत्वमङ्गीकृतं भज्येत । अर्थवादलक्षितस्य प्राशस्त्यस्य च दूरस्थस्वाध्यायविधिकल्पितवाक्येन सह पदैकवाक्यत्वं न संभवति । स्वाध्यायविधौ वाक्यान्तरकल्पनं च व्यर्थम्; अर्थज्ञानानुष्ठानयोः कार्यकारणभावस्य लोकसिद्धत्वेन अर्थज्ञानेन तत्साधनीभूतस्वाध्यायेन वा पुरुषप्रवृत्तिरूपमनुष्ठानं भावयेदित्यस्य श्रुत्या बोधनीयत्वाभावात् । केवलं अध्ययनेनार्थज्ञानं भावयेदित्येतावदेव वक्तव्यम् । जाते चार्थज्ञाने स्वयमेवानुष्ठास्यति । एतस्मिंश्च वाक्ये अर्थज्ञानमेवोद्देश्यं न पुरुषप्रवृत्तिरूपार्थभावनेति कुत इह शब्दभावनानामर्थभावनात्वं, कुतस्तरां च लिङ्ज्ञानादिकरणाद्याकांक्षा शब्दभावनायाः, कुतस्तमां च शब्दभावनायां लिङ्ज्ञानप्राशस्त्ययोरन्वय इति ।

ननु वायव्यं श्वेतमालभेतेत्यादिषु विधिषु प्राशस्त्यज्ञापकस्य कस्याऽप्यभावात् कथं प्राशस्त्यज्ञानमितिकर्तव्यतात्वेन संभत्स्यत इति तत्राह तच्चेति । वायुरिति । 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येवे'ति वायव्यविधिवाक्यार्थवादः । आदिना औदुम्बरो यूपो भवतीति विध्यार्थवादः "ऊर्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोवरुद्ध्या" इत्यादिर्गृह्यते ।

जन्यते। ते ह्यर्थवादाः स्वार्थप्रतिपादने प्रयोजनमनुपलभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति । स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् । न चेष्टापत्तिः ।

---

जन्येत उत्पाद्येते । ननु तेषां वाक्यानां प्राशस्त्यप्रतिपादकत्वादर्शनात् अन्यविधार्थप्रतिपादकत्वस्यैव दर्शनात् कथमिदं तत्राह त इति । विना हेतुं लक्षणाङ्गीकारो न युक्त इत्यतः स्वार्थेति । स्वार्थप्रतिपादने स्वघटकपदोपस्थाप्यार्थविषयकशाब्दबोधजनने । प्रयोजनं यथाकथञ्चित् प्रवृत्तिनिवृत्त्यन्वयम् । अनुपलभमाना इति । तथा च स्वार्थद्वारा प्रयोजनशून्यत्वादिति हेतौ तात्पर्यम् । नन्वशक्ताः कथं प्रतिपादयेयुरत आह लक्षणयेति । आश्रयादर्शनात् कस्य प्राशस्त्यं लक्ष्यते तत्राह क्रतोरिति । सन्निहितविधिविधेयस्येत्यर्थः । निषेधस्याप्रसक्त्या तदर्थवादग्रहणासम्भवेऽपि विधिसामान्यप्रसक्त्या सकलविध्यर्थवादग्रहणात् । प्रतिपादयन्ति उपस्थापयन्ति । नन्वर्थवादाः स्वार्थं बोधयन्ति न वा ; न चेत् बोध्यसम्बन्धरूपलक्षणाया अभावेन न प्राशस्त्योपपादकत्वम् । अथ बोधयन्ति । तर्हि स्वार्थबोधनस्य लक्षणारूपप्रयोजनसद्भावेन स्वार्थप्रतिपादने प्रयोजनमनुपलभमाना इत्यसङ्गतम् । तत्राह स्वार्थेति । स्वार्थमात्रपरत्वे लक्षणया प्राशस्त्यरूपार्थपरत्वाभावे । आनर्थक्यप्रसङ्गात् । अर्थद्वारा प्रयोजनवत्त्वाभावप्रसङ्गात् । नन्वस्तु तावदानर्थक्यम् । न तत्परिहाराय लक्षणाऽऽश्रयितव्या । न हि प्रयोजनवदर्थगमकत्वाभावे प्रमाणत्वमपि न भविष्यति । प्रमेयविषयकप्रमितिजनकत्वस्यैव प्रमाणत्वरूपत्वात् । प्रमितौ प्रयोजनवत्त्वादेर्लोके व्यभिचारदर्शनेन निवेशासंभवात् । न च शब्दरूपप्रमाणस्य तथाविधप्रमितिजनकत्वमेवेति । उपेक्षणीयार्थबोधकानां शब्दानां प्रामाण्याभावप्रसङ्गात् । अतः स्वरसतोऽलब्धप्रयोजनकानामानर्थक्यमिष्टमेवेत्याशङ्क्य परिहरति न चेष्टापत्तिरिति ।

अध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तेः । तथाहि—

'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्तव्यतां बोधयन्

---

इष्टस्यैवानर्थक्यस्यानिष्टत्वभ्रान्त्याऽऽपत्तिः क्रियत इति नेत्यर्थः ।

हेतुमाह अध्ययनेति । नन्वर्थवादानधीयीतेति विध्यभावात्कथमध्ययनविध्युपात्तत्वम् । न च सामान्यविधिरेव कश्चिदस्ति । सत्यपि वा तस्मिन् कथं तेनार्थवादग्रहणम् ? प्रयोजनवदर्थबोधकभागान्तरविषयतयाऽप्युपपत्तेरित्यत्रोपपादयितुमाह तथा हीति । स्वाध्यायोऽध्येतव्य इत्यनेन विशेषविध्यभावेऽपि सामान्यविधिसद्भाव उक्तः । ननु प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति स्मृत्या तव्यप्रत्ययस्य प्रवृत्तप्रवर्तनारूपप्रैषवाचित्वात् यथासम्भवं विध्यध्ययनमात्रप्रवृत्तपुरुषविषयत्वस्यैव सम्भवान्नार्थवादा ग्रहीतव्याः ; येन प्रयोजनवदर्थपर्यवसायित्वं भविष्यति तत्राह अध्ययनविधिरिति । तव्यप्रत्ययस्य प्रैषवाचित्वेऽपि वेदे तदसंभवादप्रवृत्तप्रवर्तनारूपविधिलक्षकत्वमभ्युपेत्यमिति भावः । सकलस्येति । विधिमन्त्रनामधेयनिषेधार्थवादात्मनः सकलस्येत्यर्थः । नार्थवादभिन्नभागमात्रग्रहणं युक्तम् । स्वाध्यायत्वेनोद्देश्यत्वावगत्त्या सङ्कोचे प्रमाणाभावादिति भावः । नन्वध्यायोऽध्येतव्य उच्यते , न वेदः । अतः कथं वेदैकदेशानामर्थवादानां तेन ग्रहणम् ; तत्राह वेदस्येति । स्वीयपितृपितामहादिभिः पारम्पर्येणाधीयमानशाखाया इत्यर्थः । वेद एवाध्याय इति भावः । अध्ययनकर्तव्यतां अध्ययनसंस्कार्यतां अध्ययनजन्याप्तिरूपसंस्कारविशिष्टताम् । अनेन स्वाध्यायस्यापुरुषार्थस्य भाव्यत्वासम्भवात् अदृष्टोद्देशेन स्वाध्यायाविशिष्टाध्ययनविधानेनार्थकर्म-

**सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचयति, निरर्थकस्याध्ययनानुपपत्तेः ।**

---

त्वमिति निरस्तम् । गुणकर्मत्वस्य संभवतः परित्यागायोगात् तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानाच्चेति भावः । ननु यावत्यर्थज्ञानं प्रयोजनं भवति तावत्यस्तु । अन्यत्रादृष्टमेव फलमिति शङ्कापरिहाराय **सर्व** इति । न ह्येकदेशस्यादृष्टार्थत्वं वक्तुं शक्यम् ; विध्याद्यंशविषयकाध्ययनस्यार्थज्ञानसाधनस्वाध्यायसंस्कारकत्वं , अर्थवादाध्ययनस्य तदर्थत्वं विहायादृष्टार्थत्वमिति वैरूप्यप्रसङ्गादिति भावः । **प्रयोजनवदर्थपर्यवसायीति** । शक्त्या लक्षणया वा प्रयोजनवदर्थबोधक इत्यर्थः । अयं भावः—स्वरूपतः स्वाध्यायस्येष्टत्वाभावेन तदुद्देशेनाध्ययनविधानं वस्तुतो न संभवत्येव । न खलु तावता तस्योद्देश्यत्वं श्रुतं परित्यज्य तद्विशिष्टाध्ययनस्यादृष्टार्थत्वं युक्तम् । अतः किञ्चिद्विशिष्टत्वेन रूपेण तस्यैवोद्देश्यत्वं वक्तव्यम् । यथा व्रीहीन् प्रोक्षतीत्यादौ । तत्र दृष्टलाभे सत्यदृष्टकल्पनाऽसंभवात् दृष्टं पर्यालोचनीयम् । तत्र च शब्दानां शक्त्या लक्षणया वा किञ्चिदर्थप्रतिपादनरूपं प्रयोजनं लोके दृश्यत इत्यतो विधिरयमक्षरपदवाक्यग्रहणपूर्वकार्थज्ञानपर्यन्ते व्याप्रियत इति । ननु विधिरयमर्थपर्यवसायित्वं सूचयतु, अर्थे प्रयोजनवत्त्वमपि किमर्थं सूचयिष्यतीत्यत्रोपपादयति **निरर्थकस्येति** । तथा च यथा स्वाध्यायस्य स्वरूपत उद्देश्यत्वासंभवादर्थज्ञानपर्यन्तग्रहणम्, तथा तस्यापि स्वरूपतोऽनुद्देश्यत्वात् प्रयोजनवत्त्वपर्यन्तग्रहणमिति भावः । अतोऽर्थवादानामानर्थक्यपरिहारायापेक्षिते सप्रयोजने प्राशस्त्ये लक्षणेत्युक्तं भवति ।

**स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः । तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान् । स चाप्राप्तमर्थं विधत्ते ।** ४-१-५३- २१-४-५५

ननु सिद्धे सर्वेषामंशानामर्थवत्त्वेऽर्थवादेऽपि तदेष्टव्यम् । तदेव तु कथमिति शङ्कायां सर्वेष्वर्थवत्त्वं निरूपयिष्यन् तत्रानन्तवाक्यसमुदायात्मनि वेदे प्रतिवाक्यं विशिष्यार्थवत्त्वप्रदर्शनस्याशक्यतया तदन्तर्गतानंशानेकरूपेण विभज्य दर्शयति स चेति । विधीति । विधिमन्त्रनामधेयनिषेधार्थवादरूपपञ्चैकदेशघटित इत्यर्थः । मन्त्रब्राह्मणसमुदायात्मनो वेदस्य ब्राह्मणे विध्यादीनां चतुर्णामवयवानां कल्पनेनैवंरूपत्वम् । पुरुषार्थबोधकस्य विधेः प्रधानत्वात् प्रथमं कीर्तनम्, ततस्तद्विनियोज्यस्य तद्वद्वाक्यरूपस्य मन्त्रस्य, अथ विध्येकदेशस्य नामधेयस्य, एवं विधौ तदनुबन्धिनि च गते शिष्टस्य तत्प्रत्यनीकस्य निषेधस्य, इतरेषां सर्वेषामर्थवत्त्वेनार्थवादार्थवत्त्वस्य स्थापनीयतया चान्तेऽर्थवादस्येति क्रमः ।

यथोद्देशमादौ विधेरर्थवत्त्वमुपपादयति तत्रेत्यादिना । तत्र विधिमन्त्रनिषेधार्थवादेषु । विधिरिति । विधिः प्रवर्तना । तद्बोधको लिङादिरपि विधिः । अथ तद्घटितं वाक्यमपि तथा । यद्वा विधीयते-कर्तव्यतया बोध्यते यागादिरनेनेति विधिः । अथेदमुदाहरणेषु दर्शयिष्यन् विधेर्विधित्वमेव यतस्तदाह स चेति । अज्ञातार्थविधायकत्वं विधित्वम् । तच्च 'यजेत स्वर्गकामः' इत्यादौ स्वर्गादिसाधनत्वेनाज्ञातस्य यागादेर्विधायकेऽस्तीति समन्वयः । अभ्यनुज्ञाविधिश्रवणात् प्राक् अनृतवदनादेस्तत्त्वेन ज्ञातत्वेऽपि 'नानृतं वदेदि'ति निषेधवाक्योन्नीतप्रत्यवायानावहत्वेन रूपेणाज्ञातत्वात् तत्रापि विधौ लक्षणमक्षतम् । अज्ञातार्थज्ञापकत्वं विधित्वमित्युक्तौ "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यज्ञातस्वर्गस्वरूपज्ञापकवाक्येऽतिव्याप्तिरिति विधत्त इत्युक्तम् । 'न च वसन्ताय कपिञ्जलानालभेते'ति

**यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते, 'अग्निहोत्रहोमेन स्वर्गं भावयेदिति'।**

**यत्र तु कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रविधानम्।**

---

मन्त्रेऽतिव्याप्तिः, विधिवाक्यान्तराभावेन मन्त्रस्यैव विधायकत्वादिति शंक्यम्। तस्यापि लक्ष्यत्वात्। विधित्वेन मन्त्रत्वेन च तत्सार्थक्यासिद्धेरिष्टत्वात्। विधित्वमन्त्रत्वादिधर्मस्वरूपभेदस्यैव प्रकृते विवक्षितत्वात्।

त्रिविधस्तावद्विधिः, धात्वर्थमात्रविधायकः, उपपदार्थमात्रविधायकः, विशिष्टविधायकश्चेति। तत्र प्रथमस्य लक्ष्यनिदर्शनेन प्रयोजनवदर्थविधानं दर्शयति **अग्नीति**। केवलहोमस्याग्निहोत्रं जुहोतीति वाक्यान्तरविहितत्वात् प्रयोजनस्य च विधातुमशक्यत्वात्प्रयोजनवद्धोममित्युक्तम्। साध्यसाधनभावसंबन्धेन स्वर्गरूपप्रयोजनविशिष्टहोमरूपार्थमिति तदर्थः। स्वर्गस्य प्रयोजनत्वज्ञापनाय प्रयोजनशब्देन तदुक्तिः। ननु प्रयोजनवद्धोमवाचकपदाभावात्कथं तद्विधिरित्यतश्शाब्दबोधाकारं दर्शयति **अग्निहोत्रेति**। अग्निहोत्रपदस्य नामधेयत्वं वक्तुं द्वितीयान्तत्वेन फलवाचकत्वभ्रमं वारयितुं च अग्निहोत्रहोमेनेति समस्य निर्देशः। स्वर्गकाम इति श्रुतस्वर्गविषयककामनावत्पुरुषाधिकारिकत्वान्यथानुपपत्त्या स्वर्गस्योद्देश्यत्वं लभ्यत इति वा स्वर्गकामपदस्यैव लक्षणयेष्टशार्थकत्वमिति वाऽभिसन्धाय स्वर्गमित्युक्तम्। उद्देश्यत्वं द्वितीयार्थः, करणत्वं तृतीयार्थः उभयोर्भावनायां निरूपकतासंबन्धेनान्वयः। स्वर्गोद्देश्यिका अग्निहोत्रहोमकरणिका भावनेति बोधः। एवं च यद्यपि न स्वर्गवद्धोमत्वेन शाब्दबोधविषयता; तथापि होमगतस्वर्गसाधनत्वस्यैतद्विधिलभ्यत्वात्तथोच्यत इति न दोष इति भावः। द्वितीयं विधिं व्युत्पादयति **यत्र त्विति**। **यत्र** यस्मिन् वाक्ये। **तदुद्देशेन** कर्मोद्देशेन। **गुणमात्रेति मात्रपदेन** कर्मविधानव्यवच्छेदः। अनेन पूर्वं प्रयोजनवद्धोमविधिवदत्र गुणवद्धोमविधिरिति न मन्तव्यमिति सूचितम्।

यथा 'दध्ना जुहुयात्' इत्यत्र होमस्य 'अग्निहोत्रं जुहुयात्' इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम् 'दध्ना होमं भावये'दिति ।

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तम्—'न चेदन्येन शिष्टाः' इति । शिष्टा उपदिष्टा इत्यर्थः । यथा 'सोमेन यजेत' इत्यत्र सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम्, 'सोमवता यागेनेष्टं

---

तत्र प्रयोजनस्य विधातुमनर्हत्वादिह गुणस्य विधेयत्वसंभवान्मानान्तरत इष्टसाधनतया ज्ञातस्य होमस्योद्देश्यत्वसंभवाच्चैवमिति भावः । धातुत्वादुद्देश्यतावाचकद्वितीयाऽभावेपि विवरणे तत्सद्भाव इति दर्शयति दध्ना होममिति । एवं किञ्चिदुद्देशेन किञ्चिद्विधानमित्युक्ते तयोः परस्परान्वयो विवक्षित इति न भ्रमितव्यम् । भावनाविशेष्यक एव बोध इति ज्ञापनमपि सर्वत्र बोधाकारलेखनप्रयोजनमिति ॥ ननु यत्र गुणः कर्म चाप्राप्तं तत्र किं कर्तव्यम्? न चोभयमेव विधीयत इति युक्तम् । एकस्य वाक्यस्यैकविधान एव व्यापरितुं युक्तत्वेन वाक्यभेदप्रसंगादिति शङ्कां परिहरन् तृतीयं व्युत्पादयति यत्रत्विति । उभयं गुणकर्मोभयम् । विशिष्टं एकविशिष्टमपरम् । उक्तार्थस्य लक्षणाकार्यत्वात्तत्र सप्रमाणकत्वं दर्शयति तदुक्तमिति । प्रथमचतुर्थसप्तमे सूत्रकारेणेति शेषः । ('शिष्टा इति सौत्रपदस्यार्थमाह शिष्टा इति । "तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः" इति विशिष्टं सूत्रम् । अस्यार्थः—यदि प्रमाणन्तरेण नोपदिष्टास्तर्हि विधेयार्थे विशेषणविशेष्यभावे सति विभागाभावाद्वाक्यभेदाप्रसक्तेस्तत् कर्म गुणाश्च विधीयेरन् यथाग्नेयोऽष्टाकपाल इत्यादाविति) लक्ष्ये सङ्गमनमुखेन किंविशिष्टं किं विधीयत इति दर्शयति यथेति । सोमविशिष्टयागविधानमिति । तथा च गुणविशिष्टकर्मविधानमुभयाप्राप्ताविति भावः । ननूद्देश्याकांक्षापूरकस्याभावेन करणाकांक्षानुत्थितेः कथमस्य विधेयत्वमित्यत्र बोधं दर्शयति सोमवतेति । इष्टमिति । तथा चेष्टवाचकपदाश्रवणेऽपि

**भावयेत्' इति । न चोभयविधाने वाक्यभेदः, विशिष्टस्यैकत्वात् ।**

---

विधेः प्रवर्तकत्वनिर्वाहाय सामान्यत इष्टमाक्षिप्यते । अतो यत्किञ्चिदुद्देश्यकेति बोधान्तर्गतमिति भावः । ननु सोमविशिष्टयागविधानेऽपि सोमे विधितात्पर्यमस्ति न वा ? न चेत् सोमेनेति पदवैयर्थ्यं यागे सोमद्रव्यालाभश्च । अस्ति चेत् यागेऽपि विधितात्पर्यसत्त्वेनोभयविधानमेवायातम् । अतो यावदुक्तं भवति उभयं **विधत्त** इति, तावदेवोक्तं भवति **विशिष्टं विधत्त** इति । तस्माद्वाक्यभेद एवेति शङ्कामनूद्य परिहरति **न** चेति । अथ वा तृतीयं व्युत्पादयति **यत्र** त्विति । ननूभयाप्राप्तावुभयं विधीयत इत्यनुक्त्वा किमिति विशिष्टं विधीयत इत्युक्तम् । ननूभयविधाने वाक्यभेद इति तथोक्तमिति चेन्न । विशिष्टविध्युक्तावपि तत्तादवस्थ्यादिति शङ्कामनूद्य परिहरति **न** चेति । **उभयविधाने** विशिष्टरूपेणोभयविधाने । अथ वा **न चोभयविधाने वाक्यभेदः** उभयविधानपक्षे यो वाक्यभेदः प्रसक्तः स विशिष्टविधानपक्षे नेत्यर्थः । हेतुमाह **विशिष्टस्येति** । अयं भावः—यद्यपि सोमविशिष्टयागस्सोमाद्यागाच्चार्थान्तरमिति न । अथापि यथा सोमयागावित्युक्ते उभयोः प्राधान्यं प्रतीयते नैवं सोमविशिष्टो याग इत्यत्र । अत्र हि सोमो विशेषणं यागः प्रधानम् । एवञ्च सोमविशिष्टयागस्य विधिसम्बन्ध इत्युक्तौ विशेष्य एव विधिसंबन्धः प्रतीयते । यथा घटो नील इत्युक्ते घटे नैल्यं न तु घटत्वेऽपि । अतो याग एव विधेस्तात्पर्यम् । एवं सति यदुक्तं सोमेनेति पदं व्यर्थमिति तत्रोच्यते । यावद्धि विधिना यागस्य सोमस्य चाङ्गाङ्गिभावो नावगम्यते, तावद्यागे सोमो नोपादीयेत । अतोऽत्राविहितमेव यागे सोमवैशिष्ट्यं प्रतीतं तयोरुपकार्योपकारकभावाभावे नावकल्पत इति तद्बोधाय विधिराक्षिप्यते । तत्राक्षिप्ते विधौ श्रुतविधौ करणत्वेनावधारितो याग उद्देश्यो भवति । सोमेन यागं भावयेदिति । तेनार्थिकेन विधिना सोमस्य लाभः । यदि सोमेनेति न स्यात् न स्या-

विशिष्टविधौ च मत्वर्थलक्षणा । यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति । न हि मत्वर्थलक्षणां विना सोमस्यान्वयः संभवति । न तावत् सामानाधिकरण्येनान्वयः । तथा सति प्रत्यक्षविरोधापत्तेः । न हि सोमो यागो भवितुमर्हति ।

---

देवार्थिकविधिकल्पनम् । न च यागे सोमद्रव्यमिति न तत्पदवैयर्थ्यम् । नापि प्रकृते वाक्यभेदः । श्रूयमाणस्य विधेर्विध्यन्तरकल्पकत्वेऽपि विधानव्यापारद्वयाभावात् । ननु विशिष्टवाचकपदाभावात् कथं विशिष्टं विधीयत इति तत्राह विशिष्टेति । कुत्र लक्षणा तदाह यथेति । ननु मत्वर्थस्य सम्बन्धिनः सोमपदेन लक्षणे तीरे घोष इतिवत् सम्बन्धी यागो विधिविषयो गम्येत, न सोमवान् याग इति तत्राह सोमवतेति । तथा च सोमपदान्मतुपि विद्यमाने योऽर्थः प्रतीयते स लक्ष्य इति भावः । ननु सोमस्य यागकरणत्वात् सोमकरणक इत्येव लक्षणोचिता न तु सामान्यतः सोमसंबन्धीति मत्वर्थलक्षणा । उच्यते । यागस्य हीदानीं फलभावनायां करणत्वमेवावसीयते न भाव्यत्वम् । अत इदानीमेतद्भाव्यत्वोपस्थित्यभावेन सोमस्य करणत्वबोधासंभवात्सामान्यतः सोमवैशिष्ट्यमेव प्रत्येतुं शक्यमिति । लक्षणाबीजं दर्शयति न हीति । अथ कुतो न संभवतीत्याशङ्कायां किं सामानाधिकरण्येनान्वय इष्यते किं वा वैयधिकरण्येनेति विकल्पमभिसन्धायाद्यं पक्षं दूषयति न तावदिति । सामानाधिकरण्यं ह्येकार्थवाचित्वं समानमेकमधिकरणमर्थो ययोस्तत्त्वमिति विग्रहात् । प्रकृते च सोमपदयजिपदयोर्नेदं सामानाधिकरण्यं विवक्षितुं शक्यम् ; पदद्वयवाच्ययोरर्थयोरादित्ययूपयोरिव भेदस्य प्रत्यक्षसिद्धत्वेन तद्विरोधापत्तेरित्याह तथा सतीति । सामानाधिकरण्येनान्वये सतीत्यर्थः । प्रत्यक्षेति । भेदग्राहिप्रत्यक्षेत्यर्थः । ननु सोमशब्दो यागनामैवेति कथमर्थभेद इत्यत्राह न हीति । सोमशब्दो हि लताविशेषे रूढः, यजिश्च त्यागरूपव्यापारविशेष इति भावः ।

**यदि सोमयागयोरैकरूप्येण भावनायां करणत्वेनान्वयः 'सोमेन यागेनेष्टं भावयेत्' इति, तत उभयविधाने वाक्यभेदः । सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापातश्च ।**

---

ननु सोमयागयोरेकत्वाभावेऽप्यैकरूप्यमस्ति । यागस्य भावनायां करणत्वेनान्वयात्सोमस्यापि तथैवान्वयस्वीकारादुभयोः करणतया सारूप्यात् । तथा च प्रकृते सामानाधिकरण्यं नैकार्थवाचित्वरूपमपि त्वेकरूपार्थवाचित्वमन्यद्वा [वक्ष्यमाणं] । अतो न दोष इत्याशङ्कते **यदीति** । उभयोरपि करणयोरेकपदोपात्तत्वे वक्ष्यमाणवाक्यभेदाप्रसक्त्या भिन्नपदोपात्तत्वं स्फोरयितुं **सोमेन यागेनेति** । **उभयविधान** इति । उभयविधानप्रयुक्त इत्यर्थः । तथा चैकतिङन्तत्वेनैकवाक्यतायां तात्पर्यावधारणाद्भिन्नवाक्यत्वे तदनुपपत्त्या तन्मूलिकाऽन्वयानुपपत्तिरिति भावः । एवं शब्ददोषमुक्त्वार्थदोषमाह **सोमस्येति** । अथ वा यथा सोमविशिष्टे यागे विध्यन्वये विशेषणे विध्यन्वयास्वीकारेण वाक्यभेदः परिह्रियते तथा सोमयागोभयविशिष्टार्थभावनायामेव वस्तुतो विध्यन्वयाद्विशेषणे तदन्वयास्वीकाराद्वाक्यभेदस्सुपरिहर इत्यतो दोषान्तरमाह **सोमस्येति** । यागवत् यागस्येव । **फलभावनायां** फलभाव्यकभावनायां । केवलभावनान्वयो न प्राधान्यापादकः, दध्ना जुहोतीत्यत्र होमभाव्यकभावनान्वयित्वेऽपि दध्नः प्राधान्याभावात् । अतः **फलेति** । यद्यपि फलभाव्यकत्वापर्यालोचनेऽपि करणत्वेन यागान्वयिभावनान्वयेन यागतुल्यप्राधान्यमापादयितुं शक्यम्; अथापि दृष्टविधया करणत्वमनयोर्न संभवतीत्यनेकादृष्टकल्पनं दोष इति सूचयितुं **फलेति** । न हि क्वचित् विहितजन्यं फलमदृष्टाद्वारकमस्तीति । नन्वस्तूभयोः प्राधान्यम्, न च तावता करणभेदाददृष्टभेदः; यत्र हि निरपेक्षं करणत्वं संभवति तत्र प्रत्येकमदृष्टसाधनता; यथा दर्शपूर्णमासाद्यावाग्नेयाग्नीषोमीयादौ । अत्र तु द्रव्यं नैव क्रियानाविष्टं करणं भवितु-

**यागार्थत्वानुपपत्तिश्च । यागे द्रव्यानुपपत्तिश्च । प्रत्ययवाच्य-भावनायाः समानपदोपात्तेन यागेन करणाकांक्षाया निवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात् ।**

**यदि च वैयधिकरण्येनान्वयः, तत्र न तावत् 'यागेन सोमम्'**

---

महंति । तथा सति सोमाद्भिन्नस्यमात्रादहष्टोत्पत्तिप्रसंगात् । एवं क्रियापि द्रव्यापेक्षात्मलाभेति समुच्चितयोरुभयोरेकादृष्टसाधनत्वमेव लाघवात् स्वीक्रियते तत्राह **यागेति** । तथा च सोमस्य क्रियापेक्षत्वेपि यागापेक्षानियमाभावाद्यागातिरिक्तक्रियाविष्टोऽपि सोमः करणं स्यात् । तथा यागस्य द्रव्यापेक्षत्वेऽपि सोमापेक्षानियमाभावात्सोमातिरिक्तेनापि यागः क्रियेतेति भावः । ननु सोमस्य याग एव क्रिया ; यागस्य सोम एव द्रव्यमिति परस्परनियम एकवाक्योपादानबलात्स्वीक्रियते तत्राह **याग** इति । देवतोद्देश्यकद्रव्यत्यागो हि यागः । अतो देवता द्रव्यं च यागस्य रूपे अङ्गभूते । सोमस्य प्राधान्ये चाङ्गभूतद्रव्याभावाद्यागत्वमेव हीयत इति भावः । ननु द्रव्यदेवतयोर्यागरूपत्वेऽपि न तदङ्गत्वनियमः, पशुपुरोडाशे देवताया अनङ्गत्वात् । अतो न रूपहानिरित्यत्राह **प्रत्ययेति** । यागे समानपदोपात्तत्वज्ञापनाय भावनायां प्रत्ययवाच्यत्वविशेषणम् । अपुरुषार्थत्वाद्यागस्य न भाव्यत्वमिति करणत्वदार्ढ्यसंपादनाय **फलेति** । **समानेति** । यागस्य पूर्वोक्तप्रत्ययप्रकृतिभूतधात्वर्थतयैकपदोपात्तत्वम् । **भिन्नपदोपात्तस्येति** । स्ववाचकप्रत्ययघटितपदभिन्नपदोपस्थापितेत्यर्थः । ननु सोमो भावनायां प्रथमं करणत्वेनान्वियात् , न यागः ; युगपद्वेति शङ्कापरिहाराय **समानपदोपात्तेन भिन्नपदोपात्तस्येति** पदद्वयम् । **स्यादिति** । तथा च करणाकांक्षाया निवृत्तत्वेन तदभाव एव करणत्वेनान्वयानुपपत्तौ हेतुः । अयोग्यस्येवानाकांक्षितस्याप्यनन्वयात् । एवञ्च प्राधान्यादिकथैव नास्तीति भावः ।

अथ द्वितीयं दूषयितुमुद्भावयति **यदि चेति** । **वैयधिकरण्येनेति** ।

ननु किमिदं वैयधिकरण्यम् ? न तावद्विभिन्नार्थकत्वं ; प्रथमपक्षेऽपि यजि-सोमपदयोस्तथात्वेन पक्षभेदासंभवात् । न च प्रागैकरूप्येणेत्युक्त्या सामानाधिकरण्यमेकरूपार्थवाचित्वमित्यवसीयते ; तथा च विरूपार्थवाचित्वं वैयधिकरण्यम् । एकस्योद्देश्यत्वादपरस्य च विधेयत्वाद्विरूपत्वमिति वाच्यम् । वक्ष्यमाणेतिकर्तव्यतात्वपक्षेऽपि वैयधिकरण्यस्यास्य संभवेन तस्येतः पृथक्कारायोगात् । एतेन न पदनिष्ठे सामानाधिकरण्यवैयधिकरण्ये, अपि त्वर्थनिष्ठे । अधिकरणं स्वान्वयिविशेष्यमित्यर्थः । प्रथमपक्षे सोमयागयोः करणत्वेऽन्वयः । अत्र चैकस्योद्देश्यत्वेऽपरस्य करणत्वे चान्वय इति तत्र तयोरैकाधिकरण्यं अत्र च विभिन्नाधिकरणकत्वमित्यपि निरस्तम् । इतिकर्तव्यतात्वपक्षेऽप्येतत्संभवात् । क्लिष्टत्वात् । सोमनिष्ठकरणत्वस्य यागनिष्ठकरणत्वस्य च भिन्नत्वेन विभिन्नाधिकरणकत्वस्य प्रथमपक्षेऽप्यापाताच्च । न च समानविभक्तिकत्वं सामानाधिकरण्यम्, विभिन्नविभक्तिकत्वं वैयधिकरण्यमिति वाच्यम् । द्वितीयपक्षेऽपि सोमेनेति तृतीयाया एवोद्देश्यत्वलाक्षणिकतया विभिन्नविभक्तिकत्वाभावात् यजिधातूत्तरं विवक्षितविभक्त्यभावेन लक्षणाऽनिर्वाहाच्चेति चेन्न । त्रेधाऽप्यदोषात् । विरूपार्थकत्वरूपवैयधिकरण्यस्येतिकर्तव्यतात्वपक्षे संभवेऽपि वस्तुतो द्रव्यस्येतिकर्तव्यतात्वाभावात् स्वयमेतत्पक्षे तदनन्तर्भावनम् , पश्चादविदुष आक्षेपे च परिहारारम्भ इति सुवचत्वात् । समानान्वयिकत्वादि सामानाधिकरण्यादीति पक्षेऽप्येवम् । करणत्वयोर्भिन्नत्वेऽपि करणतात्वेनैककारकत्वेन सामानाधिकरण्यं न भज्यते । समानविभक्तिकत्वादिपक्षेऽपि शक्त्या समानविभक्त्युपस्थापनीयार्थान्वितार्थत्वं सामानाधिकरण्यं तथा विभिन्नविभक्त्युपस्थापनीयार्थान्वितार्थत्वं च वैयधिकरण्यमिति निष्कर्ष इति ।

द्विविधस्तावद्वैयधिकरण्येनान्वयः, यागस्य करणत्वं सोमस्योद्देश्यत्वं चाङ्गीकृत्यैकः, वैपरीत्येनापरः । तत्र प्रथमं दूषयति तत्रेत्यादिना । समा-

इत्यन्वयः, समानपदोपात्तत्वात्प्रत्ययवाच्यफलभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः, यागस्य सोमार्थत्वापत्तेश्च । न चेष्टापत्तिः, अदृष्टद्वयापत्तेः । न हि यागस्य सोमार्थत्वं दृष्टद्वारेण संभवति, व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद् दृष्टस्याजननात् । अतस्तेन तावत्सोमे किञ्चिददृष्टं जननीयं, प्रोक्षणेनेव व्रीहिषु ।

---

नेत्यादि । सोमेन यजेतेति श्रुते हि प्रथमतो भावनायामुपस्थितायां तस्या भाव्याकांक्षायां यत्किञ्चिदिष्टं भाव्यत्वेनान्वेति ; न यागो नापि सोमः , अपुरुषार्थत्वात् । पश्चाच्च करणाकांक्षायां यागः करणत्वेन तत्रैवान्वेति । एवञ्च प्रकृतभावनायाः सोमभाव्यकत्वाभावादत्रैव यागस्यान्वितत्वात् सोमोद्देश्यकत्वेन विवक्षिते भावनान्तरे न यागान्वयसंभव इति भावः । ननु सोमस्यापुरुषार्थत्वेनाभाव्यत्वनिश्चये सोमभाव्यकभावनैव काचिन्न भविष्यति । अतो व्रीहीनवहन्तीत्यत्र व्रीहीणामिव पूर्वमेव वा, अध्वर्युं वृणीत इति वरणसंस्कार्यत्वान्यथानुपपत्त्याध्वर्योरिव पश्चादेव वा सोमस्य पुरुषार्थे विनियोगनिश्चय इति श्रूयमाणवाक्येऽध्वर्य्वादेरिव सोमस्यैवोद्देश्यत्वमिति तत्रैव यागान्वय इति न कश्चिद्दोष इत्यतो दोषान्तरमाह यागस्येति । अदृष्टद्वयापत्तेरिति, द्वितीयादृष्टाभ्युपगमप्रसंगादित्यर्थः । उपपादयति नहीति । सोमार्थत्वं सोमसंस्कारकत्वं । व्रीहिषु चेति । चो दृष्टान्तत्वोपयोगिनीं प्रसिद्धिं दर्शयति । अवघातेनेति । अयं विधर्मदृष्टान्तः । अजननात् अनुत्पादनात् । दृष्टानुपलम्भ एव यागस्य तदजनकत्वसाधक इति भावः । अत इति । दृष्टसंभवे ह्यदृष्टकल्पनमन्याय्यमिति भावः । जनयितव्यमिति । अन्यथा संस्कार्यत्वमेव न स्यादिति भावः । प्रोक्षणेनेति । एवं दृष्टान्तोपादानेन अतिशयरूपादृष्टस्य संस्कार्यद्रव्ये जननं समानाधिकरणसिद्धमिति सूचनात् 'आत्मनिष्ठमदृष्टं कथं सोमे जनयितव्यमिति शङ्का परिहृता । एवमधिकमदृष्टमुक्त्वाऽस्य द्वितीयतासंपा-

तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनान्वयो वक्तव्यः। भावनाकरणत्वं च भावनाभाव्यनिर्वर्तकत्वेनेत्युक्तम्। न च सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः, 'ग्रहैर्जुहोति' इति वाक्यविहितहोमेन तस्य भस्मीभावात्। अतोऽदृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न 'यागेन सोमं भावयेत्' इत्यन्वयः संभवति, करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च।

---

दृकं सिद्धान्ते यागस्य फलार्थत्वेंगीकृतेन तुल्यमदृष्टमपि व्युत्पादयति तथेति। यदि फलभावनाकरणत्वं तदुत्पादकत्वरूपं, तदा भावनारूपप्रवृत्त्युत्पत्तिकाले सोमस्यैव सत्वेन मध्येऽदृष्टरूपव्यापाराङ्गीकारः किमर्थ इति शंका स्यात्। अतश्शब्दभावनावसरे निरुक्तं भावनाकरणत्वमर्थभावनाविषयेपि तुल्यमिति बोधयति भावनेति। इतिवाक्यविहितेति। इत्याकारकवाक्यबोधितेत्यर्थः। अल्पं जुहोतीति वाक्येनैव चतुरवत्तं जुहोतीति वाक्येनेवाल्पसोमरसोद्देशेन होमस्य विहितत्वात्तादृशहोमोद्देशेन जुह्वा जुहोतीत्यनेनेव 'चमसैर्जुहोति' 'ग्रहैर्जुहोती'ति ग्रहचमसरूपपात्रमात्रविधानेन होमस्यैतद्वाक्यविहितत्वाभावात्। तथापि तद्विहायैतद्वाक्योपादनं सोमस्य होम्यत्वस्पष्टत्वाय। भस्मीभावादिति। यदाहवनीये जुहोतीत्यनारभ्याधीतवाक्येन होमसामान्यस्याहवयनीयरूपाग्न्यधिकरणकत्वविधानादिति भावः। अतस्सोमेन फलं जनयितुमन्यददृष्टं जनयितव्यमिति वाक्यशेषः। अत इति। अदृष्टयोर्जनयितव्यत्वादित्यर्थः। विनैव वाक्यशेषमत इत्यस्यैव वा तदर्थकत्वम्। सोमार्थत्वमितीति। इत्यत इत्यर्थः। ननु सोमं क्रीणाति सोममभिषुणोति सोमं पावयतीत्यादिना सोमस्य संस्कार्यत्वावगमात्तदन्यथानुपपत्त्या सोमस्य फलकरणत्वे सिद्धे व्यापारानाविष्टस्य करणत्वायोगाद्व्यापारापेक्षायां यागक्रिया फलकरणताविशिष्टतया सोमं साधयितुं विधीयत इति दृष्टविधयैव क्रियोपयोगान्न प्रथमादृष्टमिति नादृष्टद्वयापत्तिः एकमदृष्टं तु सर्वसंमतमित्यतो दोषान्तरमाह करणत्वेनेति। अन्वयानुपपत्तेश्चेति

अथ 'सोमेन यागं भावयेत्' इत्यन्वयः, तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद्यागनिर्वृत्तिदृष्टमेव प्रयोजनं लभ्यत इति नादृष्टद्वयापत्तिः, नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः । करणत्वेनैवान्वयात् । तथाऽप्यप्राप्तत्वाद्भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तद्वस्थैव । ३१ ६

---

न संभवतीत्यनेन संबन्धः । यदि द्वितीया श्रूयेत तदा यथाश्रुताङ्गीकारेण सोमस्य फलार्थत्वं यागस्य तदर्थत्वञ्चाङ्गीक्रियेतापि । तृतीयाश्रवणान्नैवमिति भावः । अथ द्वितीयं वैयधिकरण्येनान्वयं निरसितुमाह अथेति । पूर्वोक्तदोषयोरिहापि संभवे पृथङ्निषेधोनावश्यकस्स्यादिति तद्भावमुपपादयति तत्रेति । तादृशान्वयाङ्गीकार इति तदर्थः । यागनिर्वृत्तिरेवेति । द्रव्यत्यागरूपस्य तस्य द्रव्यमन्तरेणोत्पत्तुमनर्हत्वादिति भावः। यागस्य सोमार्थत्वपक्षे दृष्टफलान्वेषणे साक्षात्सोमनिर्वृत्तिरूपं न लब्धम् । तद्विशेषणीभूतफलकरणतानिर्वृत्तिरूपमेव संभावितमासीत् । इह तु साक्षाच्छ्रूयमाणस्यैव यागस्य निर्वृत्तिरित्येवकाराभिप्रायः । नादृष्टद्वयापत्तिरिति । यागस्य फलकरणतानिर्वाहायैकमेवादृष्टं कल्पयितव्यमिति भावः । नेत्यादि । करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तिर्या पूर्वमुक्ता सापि नेत्यर्थः । अत्र परं किं साध्यत्वेनान्वयोपपत्तिरस्ति, येनानुपपत्तिर्नास्तीत्युच्यते, तृतीयाया अगतत्वात्तत्राह करणत्वेनेति । साध्यत्वेनान्वयस्यास्मिन्पक्षे नुक्तत्वात् साध्यत्वेनान्वयो नोपपद्यत इत्यप्रसक्तप्रतिषेधो न संभवतीति भावः । तदवस्थैवेति । या करणत्वेनोपस्थितस्य साध्यत्वेनान्वयानुपपत्तिस्सोमविषय उक्ता सा तथैव यागविषये ह्यवतिष्ठते । इयांस्तु विशेषः— तत्र करणत्ववाचिनी तृतीया श्रूयते, इह त्वप्राप्तत्वेन साध्यत्वेनान्वयासंभवपर्यालोचनया करणत्वं कल्पनीयमिति । ननु तृतीयाश्रवणात्सोमस्यैव करणत्वेनान्वयः । अप्राप्तत्वाद्यागस्य साध्यत्वं न संभवतीति चेन्मामूत् । इष्टसामान्यमेव भाव्यत्वेनान्वेष्यति । यागस्य तु संबन्धसामान्येनान्वयः ।

**ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः। तद्वाचकतृतीयाद्यभावात्, किं तु भावनायां यागसंबन्धमात्रं प्रतीयते। यागस्य च भावनासंबन्धः करणत्वेन साध्यत्वेन च संभवति। तत्र करणत्वांशमादाय फलसंबन्धः। साध्यत्वांशमादाय गुणसंबन्धश्च स्यात्, इति चेत्—मैवम्। यद्यपि भावनया यागस्य संबन्ध-**

---

तथा च यत्किञ्चिदुद्देश्यका सोमकरणिका यागसंबन्धिनी भावनेति बोध इति न मत्वर्थलक्षणाप्रसंग इति वाजपेयाधिकरणपूर्वपक्षमुत्थापयति. नन्विति। अन्ततस्संबन्धसामान्यस्यापि विभिन्ननिरूपितकर्मत्वकरणत्वरूपसंबन्ध एव पर्यवसानादस्य पूर्वपक्षस्य वैयधिकरण्यपक्षे निवेशनम्। वक्ष्यमाणतृतीयाद्यभावप्रदर्शनाय यजेतेत्यत्रेति। करणत्वेनेति। उपस्थितिरित्यस्यापकर्षः। तद्वाचकतृतीयाद्यभावादिति। करणत्वसाध्यत्ववाचकतृतीयाद्वितीयाऽभावादित्यर्थः। संबन्धसामान्यवाचकपदाभावात्तदपि न प्रतीयत इत्यत्रोक्तं भावनायामिति। भावनाया यागस्य चैकपदबोधितत्वात् प्रकृतिप्रत्ययार्थयोः परस्परान्वयस्यावश्यकत्वाच्च संबन्धसामान्यं प्रत्येतव्यमिति भावः। एवं तर्हि यागस्य न करणत्वं नापि साध्यत्वमिति कस्य फलं साध्यं भवेद्गुणश्च करणं भवेदित्यत्राह यागस्य चेति। एवं सामान्यतो बोधे जाते पश्चात्संबन्धसामान्यस्य विशेषे पर्यवसानावश्यंभावेन कीदृशस्संबन्ध इति पर्यालोचनायां दध्ना जुहोतीत्यादौ धात्वर्थकर्मत्वस्य, अग्निहोत्रं जुहुयादित्यत्र धात्वर्थकरणत्वस्य च दर्शनेन धात्वर्थस्य कर्मत्वकरणत्वरूपसंबन्धद्वयसंभवे निश्चिते प्रकृते फलस्य साध्यत्वदर्शनेन करणत्वस्य सोमस्य करणत्वदर्शनेन साध्यत्वस्य च ग्रहणं भवतीति। एवञ्च न मत्वर्थलक्षणा नापि वाक्यभेद इति भावः। पूर्वपक्षं निषेधति मैवमिति। हेतुमाह यद्यपीत्यादिना। संबन्धसामान्यवाचिन्याष्षष्ठ्या अप्यभावेन न तस्यापि झटिति प्रतीतिः; अपि तु प्रकृतिप्रत्ययसमभिव्याहारमात्रेण कथमपि प्रत्येतव्येति यद्यपीत्यनेन सूचितम्। एवं संबन्धसामान्यविषयकबोधाभ्युपगमे तस्या-

मात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः संभवति । विरोधात् । तदवश्यं 'यागेन स्वर्गं भावयेत्' इति करणत्वेनान्वये सति पश्चात् 'सोमेन यागं भावयेत्' इति साध्यत्वेनान्वयो वक्तव्यः । ततश्च वाक्यभेदः ।

---

मेव भावनायां फलस्य सोमस्य चान्वयो न वक्तुं शक्येत । करणत्वसाध्यत्वरूपविशेषानवबोधेन संबन्धसामान्येन यागं विषयीकुर्वती भावना कस्य फलमाकांक्षेत् येन फलमत्रान्वियात्, कस्य करणमाकांक्षेत् येन सोमोऽन्वियात् । अतः फलसोमयोरन्वयात्प्रागेव करणत्वं साध्यत्वं च विशिष्यावगन्तव्यम् । अथ वा फलान्वयात् पश्चात् सोमान्वयात्पूर्वं यागस्य करणत्वसाध्यत्वे ज्ञातव्ये । तत्र किं करणत्वसाध्यत्वयोर्युगपदुपस्थित्या यागस्य फले यागे सोमस्य च विनियोग इत्युच्यते उत क्रमेणोपस्थित्या । आद्यो नेत्याह करणत्वेनेति । विरोधादिति । न खलु साध्यावस्थायां किंचित् करणं भवति अपि तु सिद्धमेव । अत एकरूपेण प्रतीयमानं तदैवान्यरूपेण न प्रतीयेत । तथा पुरुषार्थत्वप्रतीतौ साध्यत्वप्रतीतिः अपुरुषार्थत्वप्रतीतौ च करणत्वस्येति न यौगपद्यसंभवः । एवं मानान्तराप्राप्तनिष्ठं करणत्वं, प्राप्तनिष्ठं च साध्यत्वम् । प्राप्तत्वाप्राप्तत्वे च न युगपदेकस्मिन्निति भावः । अतोऽन्त्य एव पक्षो ग्राह्य इत्याह तदिति । सतीति जाते सतीत्यर्थः । इष्टसाधनत्वज्ञानाधीनत्वात्साध्यत्वज्ञानस्यायमन्वयः पूर्वभावी । अस्तु तथैवेत्यत्र दण्डमाह ततश्चेति । वाक्यभेद इति । अर्थद्वयोपस्थापनाय यजेतेत्यध्याहारस्याऽऽवृत्तेर्वा कल्पनीयत्वादिति भावः । ननु यजिधातोर्याग एवार्थः । प्रत्ययस्य च भावना । कर्मत्वं करणत्वं च न कस्यचिदर्थः । समभिव्याहारलभ्यस्तु संबन्धः । संबन्धस्य च शाब्दबोधे विशेषरूपेण भानं नाङ्गीक्रियते । न चैवं सति फलसोमानन्वयः । भाव्याकांक्षायां प्रथमत एव फलान्वयात्, तृतीयाश्रवणबलादेव सोमस्यापि

न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम्, कारकाणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न यागे सामानाधिकरण्येन वैयधिकरण्येन वाऽन्वयः संभवतीति।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकांक्षायां यथा

---

करणत्वेनान्वयसंभवात् । तत्तन्निरूपकविज्ञानन्तु पार्ष्ठिकमेव । अतो याग-संबन्धिनी भावनेत्येव बोध इत्याशंक्याह न चेति । मात्रपदेन कर-णत्वादिव्यवच्छेदः । कारकाणामित्यादि । अतः कर्मत्वकरण-त्वादिकारकमद्वारीकृत्यान्वयादर्शनेन यजेर्विशिष्य तावत्परत्वमावश्यकमिति भावः । ननु कारकाणामेव क्रियान्वय इति न नियमः ; मातुः स्मरति, तस्माज्जानातीत्यादौ कारकभिन्नस्यापि क्रियान्वयदर्शनात् । अपि तु कारकाणां क्रियायामेवान्वय इत्येव नियम इति चेत् सत्यम् । प्रत्ययार्थमद्वारीकृत्य न कस्यचित्क्रियान्वय इत्येवमेव नियमः । कारकपदं तु प्रकृताभिप्रायेण । तच्च संबन्धसामान्यस्यापि षष्ठीप्रत्ययार्थतया तथैव अन्वयः स्यादिति शङ्कापरिहाराय । पचतीत्युक्ते पाकं करोति पाकेनौदनं करोतीत्येव विवरणदर्शनेन कारकद्वारैव क्रियान्वयो धात्वर्थस्य दृश्यत इति ।

उपसंहरति तत्सिद्धमिति । तत्— एवं पक्षद्वयेप्यनुपपत्तिसद्भा-वात् । याग इति । यद्यपि शङ्कितपक्षद्वयेऽपि सोमस्य भावनायामेवान्वयः ; अथापि यागस्यैव सामानाधिकरण्याद्याश्रयत्वात्तेन रूपेण तत्रान्वयोक्तिः ।

माभूत्कर्मत्वेन करणत्वेन वान्वयः ; इतिकर्तव्यतात्वेन तु स्यात् । अतोऽपि नान्वयानुपपत्तिर्येन मत्वर्थलक्षणा स्यादित्याशङ्कते नन्विति । ननु याग एवेतिकर्तव्यता सोमस्तु करणमिति विपरीतं किन्न स्यादित्यत्र करणाकां-क्षायाः प्राथम्येन समानपदोपात्तत्वाद्याग एव तथान्वियादिति सूचयितुं यजेतेत्यत्र प्रत्ययाभिहितभावनाया इति । आकांक्षाया भिन्नविषयत्वेन

यागः करणत्वेनान्वेति तथेतिकर्तव्यताकांक्षायां सोमस्येतिकर्तव्यतात्वेन भावनायामेवान्वयोऽस्तु, कृतं मत्वर्थलक्षणया इति चेत्— न। सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्तव्यतात्वानभिधानात्। तत्र यदीतिकर्तव्यतात्वं लक्षणयोच्यते ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा। गुणे त्वन्याय्यकल्पनेति न्यायात्।

---

यागान्वयेन न शान्तिरिति बोधयितुं तथेत्यन्तम्। भावनायामेवेत्येवकारस्येतिकर्तव्यतात्वेनेत्यनेन संबन्धो युक्तः। कृतं मत्वर्थलक्षणयेति। मत्वर्थलक्षणासाध्यं न किञ्चिदस्ति। तत्साध्यस्यान्वयानुपपत्तिपरिहारस्योक्तप्रकारेणैव साधितत्वादिति भावः। नेति। सोमस्येतिकर्तव्यतात्वेन भावनायामन्वय इत्यनुपपद्यते। इतिकर्तव्यतात्वानभिधानात् इतिकर्तव्यतात्वस्य शक्त्यानुपस्थापनात्। ततः इतिकर्तव्यतात्वलक्षणातः। प्रकृतिभूत इति। अनेन प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन प्रत्ययार्थापेक्षया प्रकृत्यर्थस्य विशेषणत्वेन गुणत्वाद्विशेषणोपस्थापकस्यापि विशेष्योपस्थापकाद्गुणत्वमस्तीति विवक्षितम्। गुण एव लक्षणा युक्तेत्यत्र प्रमाणं दर्शयति गुणेत्विति। 'विप्रतिपत्तौ विकल्पस्स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वा'दिति नवमतृतीये सूत्रम्। अस्त्यग्नीषोमीयः पशुयागः। तत्र द्वौ मन्त्रौ। एकः पाशैकत्वाभिधायी अदितिः पाशं प्रमुमोक्त्वेनमिति। अन्यस्तद्बहुत्वाभिधायी अदितिः पाशान् प्रमुमोक्त्वेतानिति। तत्र किं पाशबहुत्वाभिधायी मन्त्र एकपशावस्मिन्ननिविशमानो बहुपाशिकायां विकृतावुत्कष्टव्यः उतेहैव कथमपि निवेशनीय इति विप्रतिपत्तौ उत्कर्षस्यायुक्तत्वेन प्रकरण एव निवेशात्पाशैकत्वाभिधायिना मन्त्रेण विकल्पस्स्यात्। उभयोरपि पाशोन्मोचनार्थत्वेन तुल्यत्वात्। नन्वनिवेशाद्बहुवचनमुत्कृष्यमाणमेकदेशत्वात्प्रातिपदिकमुत्कक्ष्यति। न। पाशकर्मकारकादेः प्रकृतेऽपि संभवेन प्रातिपदिकादिकमिहैव निविशमानमेकदेशत्वाद्बहुवचनमप्याकक्ष्यति। बहुवचनं कथमन्वेष्यतीति चेत् स्वशक्यबहुत्वाश्रयावयवारब्धवृत्तित्वसंबन्धेनैकत्व-

अथ 'वेदो वा प्रायदर्शनात्' इत्यधिकरणोक्तासञ्जातविरोधित्वन्याये-नान्त्ये प्रत्यय एव लक्षणेति चेत्,

---

मुपस्थाप्यान्वेष्यति । शक्यार्थपरिग्रहंसभव इदमन्याय्यमिति चेत् भवतापि प्रातिपदिकाद्यर्थस्य प्रकरणबाधरूपमन्याय्यं कल्पनीयम् । ततो वरं गुण-भूते वचन एव लक्षणारूपान्याय्यकल्पनेति । एवञ्च तत्र प्रकृत्यर्थापेक्षया संख्याया गुणत्वेन तत्प्रतिपादकस्य वचनस्य प्रकृतितो गुणत्वात्तत्रैव लक्षणा-ङ्गीकृता । तथा प्रकृते प्रकृत्यर्थापेक्षया कारकस्य प्राधान्याद्विभक्तौ लक्षणामुपे-क्ष्य प्रकृतावेव मत्वर्थलक्षणाऽऽश्रयितव्येति । गुणत्वेप्युपक्रमस्थस्य प्राबल्यं जघन्यस्य च प्रधानभूतस्यापि दौर्बल्यमधिकरणान्तरसिद्धमिति प्रत्यय एव लक्षणेत्याशङ्कते अथेति । "वेदो वा प्रायदर्शना"दिति तृतीयतृतीयगं सूत्रम् । तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त । अग्नेः ऋग्वेदः । वायोर्यजु-र्वेदः । आदित्यात्सामवेद इत्युपक्रमस्थोऽर्थवादः । उच्चैः ऋचा क्रियते । उपांशु यजुषा । उच्चैस्साम्नेति पाश्चात्या विधयः । अत्रर्गादिशब्दा मन्त्रविशे-षार्थका अपि उपक्रमस्थार्थवादश्रवणमात्रेण वेदानां स्तूयमानानां विधेयत्व-स्योद्देश्यत्वस्य वाऽवगतत्वेन विरोधिनस्सञ्जाततया मन्त्ररूपं स्वार्थं प्रतिपाद-यितुमशक्नुवन्तः उपक्रमानुसारेण लक्षणया ऋग्वेदादिरूपेऽर्थ एव वर्तन्ते । एवञ्च ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रोद्देशेनोच्चैस्त्वादिकं विधीयते । तथा चायं सूत्रार्थः प्राये उपक्रमे दर्शनाच्छ्रवणाद्वेद एव लक्षणया ऋगादिपदार्थ इति । अधिकरणोक्तेति । संजातं विरोधि यस्य तत्संजातविरोधि । उपक्रमस्थं हि वेदपदं स्वार्थमुपस्थापयत् अन्त्यस्य ऋगा-दिपदस्य तच्छक्यार्थोपस्थापकत्वं विरुणद्धि । अतः ऋगादिपदं स्वार्थोप-स्थापने संजातविरोधिकम् । असंजातविरोधि च वेदपदम् । तत्त्वमसञ्जात-विरोधित्वम् । अधिकरणोक्तेनासञ्जातविरोधित्वरूपेण न्यायेनेत्यर्थः । ऋगादि-पदस्य वेदलक्षकत्वाभावे वेदगतमसञ्जातविरोधित्वं हि भज्येत । प्रत्यय एवेति ।

तथापि सोमस्येतिकर्तव्यतात्वेनान्वयानुपपत्तिः । सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावात्। क्रियाया एवेतिकर्तव्यतान्वात् । द्रव्यस्य केवलमङ्गत्वात् । अतएवेतिकर्तव्यतात्वाभावात् द्रव्यस्य प्रकरणादग्रहणम् ।

---

एवकारेणोपक्रमश्रुते प्रकृतिभूते सोमपदे लक्षणा व्यवच्छिद्यते। परिहरति तथापीति । इतिकर्तव्यतात्वाभावादिति । तथा च प्रकृत्यर्थप्रत्ययार्थयोः परस्परमन्वयासंभवेनेतिकर्तव्यतात्वेनान्वयस्सोमस्य नोपपद्यत इति भावः । नन्वितिकर्तव्यतात्वं करणानुग्राहकत्वम् । तद्वस्तुनोऽसिद्धत्वे कथं भवेत् । अतस्सिद्धवस्तुनिष्ठमेवेत्याशङ्कायामभिप्रायमाह क्रियाया एवेति। यद्यप्यसिद्धस्य सतो न कस्यापीतिकर्तव्यतात्वम्; अथापि क्रियाया एव साधितायास्तथात्वम् । न तु द्रव्यादेः । तथा च सिद्धस्य वस्तुन इति क्रियाभिन्नाभिप्रायमिति भावः । नन्वङ्गत्वमितिकर्तव्यतात्वम् । तत्कथं द्रव्ये नास्तीति मा शङ्कितव्यमित्यभिसन्धायाह द्रव्यस्येति । इदं प्रकृताभिप्रायेण । अतो गुणाद्यपि ग्राह्यम् । केवलमितीतिकर्तव्यतात्वव्यवच्छेदः । किञ्चिदितिकर्तव्यतापि भवति अङ्गमपि । किञ्चित्तु केवलमङ्गम् । तथा चेतिकर्तव्यतात्वमङ्गत्वव्याप्यो धर्म इति भावः । अङ्गत्वेतिकर्तव्यतात्वयोरवश्यं भेद एष्टव्य इति दर्शयति अत एवेति । अस्यैव विवरणमितिकर्तव्यतात्वाभावादिति । प्रकरणादग्रहणमिति । प्रकरणप्रयोज्यं प्रकृतक्रियाकर्तृकमङ्गत्वेन स्वीकरणं नास्तीत्यर्थः । (यदीकर्तव्यतात्वमङ्गत्वमेव स्यात् तर्हि द्रव्यादावङ्गत्वाविघातादितिकर्तव्यताकांक्षारूपात्प्रकरणाद्ग्रहणं स्यादिति भावः ।) नन्वङ्गत्वेतिकर्तव्यतात्वयोर्भेदे इतिकर्तव्यतात्वग्राहकस्याङ्गताग्राहकत्वाभावेन प्रकरणस्याङ्गताग्राहकेषु प्रमाणेष्वन्यतमत्वं न स्यदिति चेन्न; अङ्गत्वं कृतिकारकत्वं तदेव तु क्रियानिष्ठं करणानुग्रहकारकत्वरूपमितिकर्तव्यतात्वमिति न वस्तुभेदः । सर्वप्रमाणसाधारण्याय तु विशेषमनादृत्याङ्गताग्राहकप्रमाणमित्युच्यत इति । ननु 'बर्हिर्देवसदनं

यदाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥ इति ।

तदेतदग्रे वक्ष्यामः । किं च सोमेन यजेतेति हि यागस्योत्पत्तिवाक्यं नाधिकारवाक्यम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्याधिकारवाक्यत्वात् । उत्पत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा,

---

दामी'त्यादीनां सिद्धरूपाणां प्रकरणाद्दर्शपूर्णमासाङ्गत्वं प्रमाणसिद्धमिति उक्तार्थेऽप्रामाण्यशङ्कायां वार्तिकधृतं वृद्धवचनं प्रमाणयति यदाहुरिति । यत् अग्रहणम् । प्रकृताः प्रधानभूता अङ्गभूताश्च प्रकरणिन्य इतिकर्तव्यताकांक्षिण्यः क्रिया दर्शपूर्णमासप्रायाजादयः । गुणद्रव्ये गुणं द्रव्यञ्च । जात्यैकवचनम् । इदं जात्यरप्युपलक्षणम् । कथम्भावैः कथम्भावयेदित्याकाङ्क्षाभिः । नञः क्रियापदेन संबन्धः । तर्हि मन्त्रादेः कथं ग्रहणं तत्राह अवान्तरेत्यादि । स योगः कथमित्यत्राह वाक्योपकल्पितादिति । एवञ्च मन्त्रादिवैशिष्ट्ये च प्रमाणान्तरेणावान्तरक्रियाया अवगते तां क्रियां गृह्णत् प्रकरणं तद्द्वारा गुणद्रव्ये अपि गृह्णाति । साक्षात्तु क्रियामेव गृह्णातीति । ननु कथमित्याकाङ्क्षाया द्रव्यविषयकत्वं यदि न स्यात् स्यादस्य प्रकरणादग्रहणम् । तदेव कथमित्यत्राह तदिति । अग्रे विनियोगविधौ प्रकरणनिरूपणावसरे । एवं सोमस्येतिकर्तव्यतात्वाभावात्तेनान्वयो न संभवतीत्युक्तम् । अथ तस्य तथात्वेप्यन्वयासम्भवमाह किञ्चेत्यादिना । उत्पत्तिवाक्यं स्वरूपविषयकप्रमाणान्तरानधीनज्ञानोत्पत्तिप्रयोजकं वाक्यम् । अधिकारवाक्यं फलसंबन्धबोधकवाक्यं । ननु विश्वजिता यजेतेत्यत्रेवेहापि स्वर्गवाचकपदाध्याहारेणास्यैवाधिकारवाक्यत्वम् । तत्कथं नाधिकारवाक्यमिति तत्राह ज्योतिष्टोमेनेति । प्रमाणान्तरेण फलेऽनवगते हीहाध्याहारापेक्षा । अस्ति त्विह प्रमाणमिति भावः । किमतः प्रकृतस्येत्यत्राह उत्पत्तीति ।

इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात् । तत्सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावनायामन्वयः । तस्माद्विविशिष्टविधावन्वयानुपपत्त्याऽवश्यं मत्वर्थलक्षणा वाच्येति ।

---

ननु भावनासामान्यस्यांशत्रयाकांक्षित्वस्वाभाव्यात्कथमुत्पत्तिवाक्यश्रुतायां परमितिकर्तव्यताकांक्षा नास्ति । प्रत्युतेतिकर्तव्यतारूपाणां प्रयाजादीनामुत्पत्त्यन्वियत्वमेव सर्वसंमतमित्यत्राह इष्टेति । विध्यन्यथानुपपत्त्यैव सामान्यत इष्टस्याक्षिप्तत्वेन सामान्याकांक्षायाश्शान्तत्वाद्विशेषेति । सामान्यत इतिकर्तव्यताकांक्षासत्वेऽपि तद्विशेषाकांक्षा नास्तीति वक्तुं विस्पष्टमिति । अनुत्थानादिति । अज्ञाते फले कथं कर्तव्यमित्याकांक्षानुदयो लोकसिद्ध इति भावः । तथा च प्रयाजादेर्भिन्नवाक्योपात्तस्योत्पत्त्यन्वयित्वमपि फलविशेषनिश्चयानन्तरमेवावगम्यत इति न ततः प्रागेव सोमान्वयो युक्त इति भावः । इदमत्रावधेयम् । भावनाया इतिकर्तव्यताकांक्षा न 'इतिकर्तव्यताऽस्ति नवा' इत्येवंरूपा । तदस्तिताया भावनात्वादेव सिद्धत्वात् । अपि तु कथं भावयेदित्येवंरूपा । तस्याश्च किं भावयेदित्यस्याः फलविशेषाकांक्षारूपत्ववत् इतिकर्तव्यताविशेषाकांक्षारूपत्वमेव । तत्र यदि विशेषो न कश्चिद्वाक्ये श्रुतस्स्यात् तदा सा जातापि प्रमाणान्तरेण तं लप्स्यमाना सद्यश्शान्तेवावतिष्ठते । यदि तु विशेष उपात्तस्तदा तदन्वयेन शाम्यति । यथा केन भावयेदित्याकांक्षा प्रकृतस्य यागस्य लाभेन शाम्यति । अतः फलविशेषान्वयाभावेपि श्रूयमाणाया इतिकर्तव्यताया अनन्वयो न युक्तः । तस्मात् सोमस्येतिकर्तव्यतात्वाभावेनैवायं पक्षः प्रतिक्षेप्य इति ॥ इतिकर्तव्यतात्वेनान्वयाभावमुपसंहरति तत्सिद्धमिति । अन्वय इति । इतीत्यध्याहर्तव्यम् । वाच्येतीति इतिकारेण वा सिद्धमित्यस्य सम्बन्धः । तदा इतिकर्तव्यतात्वेनेत्यस्य प्रकारान्तरोपलक्षकत्वम् । तस्मात् करणत्वेनोद्देश्यत्वेनेतिकर्तव्यतात्वेन

नन्वेवमपि 'सोमेन यजेत' त्यत्र न विशिष्टविधानम्, गौरवात्, मत्वर्थलक्षणापाताच्च। किन्तुदध्ना जुहोतीतिवद्गुणमात्रविधानमस्तु। विधिशक्तेर्गुणे संक्रमात्। यदाहुः—

सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसङ्क्रान्तेः स्याद्धातोरनुवादता॥ इति।

---

चान्वयासम्भवात्। इदमन्वयानुपपत्त्येत्रान्वेति। तत्तदन्वयविशेषासम्भवरूपहेतुसिद्ध्याऽन्वयसामान्यानुपपत्त्येत्यर्थः। विशिष्टविधौ विशिष्टविधित्वेन सिद्धान्त्यभिमतस्थले।

ननु यत्रोभयमप्राप्तं तत्र प्रकारान्तरासम्भवाद्विशिष्टविधानं मत्वर्थलक्षणा च काममस्तु। सोमेन यजेतेति तु न तल्लक्ष्यम्। वैयधिकरण्यपक्षे विकल्पितद्वितीयकल्पस्यैव सम्भवादित्याशङ्कते नन्विति। एवमपि उभयाप्राप्तिस्थले मत्वर्थलक्षणया विशिष्टविधाने सत्यपि। गौरवात् विशिष्टविधेर्विशेषणविधिकल्पकत्वमङ्गीकृत्यार्थाद्विशेषणविधानरूपात्। एवञ्जातीयस्य दोषस्य स्वाभ्युपेते ज्योतिष्टोमवाक्येनोत्पत्त्यधिकारविधानेऽपि तुल्यत्वाद्दोषान्तरमाह मत्वर्थेति। ननु समानपदोपात्तत्वाद्याग एव भावनायां करणं भवति। सोमस्य चान्यथान्वयो न सम्भवतीत्युक्तम्। अतः कथमिदं निराक्रियत इत्यत्राह किन्त्विति। दध्नाजुहोतीतिवदिति। न हि धात्वर्थः करणमेवेति नियमः। तथा सति हि गुणस्यान्यथान्वयो न स्यात्। अतो होमवद्यागस्योद्देश्यत्वमिहेति भावः। शक्तिरज्ञातज्ञापनम्। तस्य गुणे संक्रमश्च गुणविषयकत्वम्। अत्र चित्राधिकरणवार्तिकं प्रमाणयति यदिति। सर्वत्रेत्यनेन यत्र गुणवाचकमुपपदं श्रूयते तद्वाक्यं सर्वं गृह्यते। आख्यातसम्बद्धे आख्यातसमभिव्याहृते। पदान्तरे आख्यातान्तभिन्ने गुणपदे। पदे विधिशक्त्युपसंक्रमोऽर्थद्वारकः। ननु यत्र धातोः पुरोवादः सिद्धः तद्विषयोऽयं श्लोकः

न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन यागस्य प्राप्तत्वात् । न चास्याधिकारिविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम् । 'उद्भिदा यजेत पशुकामः' इतिवदेकस्यैवोभयविधित्वोपपत्तेः । एवं च सोमेन यजेतेत्यत्र न मत्वर्थलक्षणा । यदि ह्यत्र विशिष्टविधानं स्यात्तदाऽन्वयानुपपत्त्या मत्वर्थलक्षणा स्यात् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तु यागविधाने क्वचिन्न मत्वर्थलक्षणा । न तावदेतस्मिन् वाक्ये । 'ज्योतिष्टोमेन यागेन स्वर्गं भावयेदि'ति सामानाधिकरण्येनैव नामपदस्यान्वयात् । नापि सोमेन यजेतेत्यत्र । यागोद्देशेन सोमविधानात्—सोमेन यागं भावयेदिति ।

---

अत एवानुवादतेत्युक्तम् । इह तु यागविधायकवचनान्तराभावादनुवादत्वं न सम्भवतीति शङ्कां परिहरति न चेति । नन्विदमधिकारवाक्यमित्युक्तम् । अधिकारविधित्वे च नोत्पत्तिविधित्वम् । अग्निहोत्रं जुहोति, अग्निहोत्रं जुहुयात् स्वर्गकाम इति पृथगेव तत्तद्विधिश्रवणादिति शङ्कामुद्भाव्य परिहरति न चेति । उद्भिदेति । अत्र उद्भिन्नामकस्य यागस्य फलसम्बन्धस्य च प्रमाणान्तरतः प्राप्त्यभावेनोभयविधानमेवाङ्गीकृतम् । तथा प्रकृतेऽपि सम्भवतीति भावः । ननु तर्हि इह वोभयविधानं सोमेन यजेतेत्यत्र वेति विनिगमनाविरह इत्यत्र विनिगमकं दर्शयति एवंचेति । ननु ज्योतिष्टोमवाक्ये यागविधानाङ्गीकारे उपपदार्थज्योतिष्टोमस्येह सोमस्येव विधानासम्भवात् तदन्वयार्थं मत्वर्थलक्षणावश्यक्येवेति शङ्कापरिहारं सोमवाक्ये मत्वर्थलक्षणाभाव हेतुं चाह यदि हीत्यादिना । एतस्मिन् ज्योतिष्टोमेनेत्यस्मिन् । सामानाधिकरण्येनेति । अस्य बहुव्रीहिवृत्तत्वेन यागसामानाधिकरण्यं स्वरसत एवेति न मत्वर्थलक्षणेति भावः । ननु कर्मधारयपरित्यागेन बहुव्रीहिस्वीकरणं गौरवग्रस्तमित्यत्राह नामपदस्येति । अस्य स्तोममात्रवाचित्वे बहुवचनान्तत्वं स्यात् । किञ्च 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोती'ति वचनेन स्तोत्रापकरणस्य

नन्वनुवादेऽप्यस्ति मत्वर्थलक्षणा । अत एवोक्तम्—

विधाने वानुवादे वा यागः करणमिष्यते ।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥ इति ।

अतश्च विशिष्टविधाविव गुणविधावप्यस्त्येव मत्वर्थलक्षणेति चेत्, मैवम् । गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाऽङ्गीक्रियते । यदा तु भावनायां धात्वर्थस्य करणत्वेनान्वयस्तदाऽ

---

ग्रहग्रहणाद्यानन्तर्यावगतेर्ग्रहवति सोमयाग एवैतस्य सिद्ध्या, स्तोमानां च 'त्रिवृत्पञ्चदशस्सप्तदश एकविंश एतानि वाव ज्योतींषि य एतस्य स्तोमाः' इति ज्योतिराख्यतयाऽवगतानां स्तोत्रद्वारा यागसबन्धावगमात् ज्योतिराख्यस्तोमसम्बन्धित्वस्य प्राप्तत्वेन तत्प्रख्यनयान्नामधेयत्वमेव । अतो न किञ्चिद्विधेयमवशिष्यते । बहुव्रीहिश्चावश्यक इति ।

ननु यादृश्या भावनायाः पुरोवादस्तादृश्या एवानुवादो वक्तव्यः । यागकरणिकैव भावना प्रागुदितेति न तदुद्देश्यका भावनानुवादमर्हति । नह्येकैव भावनैकमेव करणत्वेन साध्यत्वेन च विषयीकरोति । किञ्च यागानुवादेन सोमविधानेऽपि यागस्वरूप आनर्थक्यादपूर्वसाधनत्वावगत्यावश्यकत्वेन यद्यागेनापूर्वं भावयेत् तत्सोमवतेति वाक्यार्थो वक्तव्यः । तथा चानुवादेऽपि मत्वर्थलक्षणाऽस्त्येवेति पार्श्वस्थधातोरनुवादत्वसम्पादनेन यागस्य साध्यत्वेनान्वयवादिनं चोदयति नन्विति । अनुवादे ; धातोरिति शेषः । मत्वर्थलक्षणा ; उपपद इति शेषः । अत्रोद्भिदधिकरणवार्तिकं प्रमाणयति अत एवेति । धात्वर्थो विधीयतामनूद्यतां वा । सर्वथा तत्करणमेव । एवञ्चोपपदार्थस्य साक्षाद्विधानासम्भवात् तत्तृतीयाद्यन्तमुपपदं धातुसमभिव्याहृतं श्रुत्याऽभावेऽपि लक्षणया धात्वर्थबोधक एव भवतीति वार्तिकार्थः । एवं चोद्ये सति इहोपपत्त्यभावादनुपपत्तिसद्भावाभावादुपात्तप्रमाणस्यान्याभिप्रायकत्वाच्च मैवं वक्तव्यमित्याह मैवमिति ।

उपपत्त्यभावमाह गुणेत्यादिना । नन्वत एवाङ्गीक्रियत इत्यत्र

न्ववदानुपपत्त्या साङ्गीकर्तव्या । गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयः । मानाभावात् । न हि दध्ना जुहोतीत्यत्र होमस्य करणत्वं श्रूयते । तद्वाचकतृतीयाद्यभावात् । कल्प्यत इति चेन्न । गुणस्य तत्र विधित्सितत्वेन साध्याकांक्षायां साध्यत्वकल्पनाया एवोचितत्वात् । दध्ना होमं भावयेदिति ।

---

हेतुरेव नास्तीत्याह गुणविधौ चेति । यत्र गुणस्यैवाज्ञाततया ज्ञाप्यत्वं तत्रेति तदर्थः । मानाभावादिति । धात्वर्थकरणताबोधकप्रमाणाभावादित्यर्थः । इदमेव प्रमाणसामान्याभावं तद्विशेषाभावकूटेन साधयति न हीत्यादिना । प्रकृतस्य सोमेन यजेतेत्यस्य गुणविधित्वं संशयितमिति दध्ना जुहोतीति निश्चितस्थलोदाहरणम् । श्रूयते शब्देनोपस्थाप्यते । तद्वाचकतृतीयाद्यभावादिति । आदिना स्वरसतः करणत्वलक्षकविभक्त्यन्तरपरिग्रहः । अत्र तृतीयादिश्रुत्यभावेन यावच्छ्रुतं तावत्येवानुवादत्वम् । धात्वाख्याते श्रूयेते इति अस्तु यागस्य भावनायाश्चानुवादः । करणत्वस्याप्यनुवाद इत्यत्र प्रमाणं नास्ति । संबन्धिद्वयस्याप्यनुवादे पुरोवादसिद्धसंबन्धोऽपि गम्यत इति चेत् भवतु संबन्धस्याप्यवगतिः । अथापि स पूर्वं विधिवाक्यावगत एवेति कुतोऽवसीयते । उक्त करणत्वेऽसाधितस्य करणत्वायोगेन साध्यत्वस्याप्याक्षिप्तत्वेन तस्याप्यवगमसंभवात् । न हि तृतीयादिश्श्रूयते येन तदेव नियम्येत' इति निगूढम् । ननु कारकमद्वारीकृत्य भावनायामन्वयो न संभवति । अस्ति च भावनायाः करणाकांक्षा । अतो यजिना करणत्वं लक्ष्यत इति शङ्कते कल्प्यत इति । उचितत्वादिति । अयं भावः । भावनायास्तावन्न केवलं करणाकांक्षा । अपि तु साध्याद्याकांक्षापि । तत्र च साध्याकांक्षैव प्राथमिकी । अतस्समानपदोपात्तो धात्वर्थस्तामेव शमयितुं प्रवर्तते । यदा तु तत्र तस्य न सामर्थ्यं तदैव ततो निवर्तमानः करणाकांक्षां शमयति । तस्य सामर्थ्यासामर्थ्ये चेष्टत्वानिष्टत्वाभ्याम् । एवं च यदि प्रमाणान्तरेण तस्य पश्वादिवदभीष्टत्वं नावगतम् ; तदैव तस्यासामर्थ्यम-

**न चायमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवान्वयो न प्रकारान्तरेणेति । षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः । षष्ठाद्ये हि यजेत स्वर्गकाम इत्यादौ प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्यापुरुषार्थत्वेन परिहृतम्। यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा**

---

नुमन्तव्यम् । एवं च गुणविधौ धात्वर्थस्य प्रमाणान्तरतः प्राप्तिरस्ति न वा ; अस्ति चेत्तत एवेष्टत्वमवगतमिति साध्योभावे सामर्थ्यमस्त्येव । न चेत्तस्याज्ञाततया विधिस्तमेव विधातुमज्ञाततया ज्ञापयितुं प्रवर्तत इति गुणो विधित्सितो न स्यात् । अतो धात्वर्थस्य प्राप्ततया साध्याकांक्षाशमनाय साध्यत्वमेव लक्षयितव्यमिति ।

अनुपपत्तिसद्भावं दर्शयितुमाह **न चेति** । **प्रकारान्तरेण** करणत्वभिन्नेन सम्बन्धेन। **इतीति** । इत्याकारक इत्यर्थः। अस्य **नियम** इत्यनेनान्वयः । अनुपपत्तीः प्रपञ्चयति **षष्ठेत्यादिना** । **षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः** षष्ठेऽध्याये आद्येऽधिकरणे यः पूर्वपक्षस्तदनुत्थानापत्तेरित्यर्थः । अनुत्थानं विशदयति **षष्ठाद्य इति** । **इत्यादावित्यादिना** यजेत पशुकाम इत्यादिपरिग्रहः । **प्रत्ययवाच्यायामिति** समानपदश्रुतित्वनिर्वाहाय । भावनायाः पुरुषार्थोद्देश्यकत्वस्य तदधिकरणसिद्धत्वे प्रवृत्तेः शब्दभावनाभाव्यत्वं पूर्वोक्तं विरुद्ध्यत इति शङ्कापरिहाराय **वक्ष्यमाणार्थेति** । **समानपदश्रुत्येति** । स्वर्गादेर्भिन्नपदोपात्तत्वेन विलम्बितोपस्थितिकत्वाद्भाव्यत्वमिति भावः । **यागस्येति** । यागादेरित्यर्थः । तस्य प्रवृत्त्या साधयितुं योग्यत्वेन साध्यत्वानपायात् । भ्रमप्रमासाधारणस्येष्टसाधनताज्ञानस्यैव प्रवृत्तिहेतुत्वेन यागादौ कादाचित्क्यां प्रवृत्तौ सत्यां तावतैव विधेः प्रवृत्तिस्वरूपयोग्यत्वरूपप्रवर्तनात्वनिर्वाहसम्भवात् । स्वर्गकाम इत्यादेश्च पदस्य स्वर्गकामनादिरूपांगविधायकत्वेनोपपन्नत्वदिति । **भाव्यत्वामिति परिहृतमित्यनेनान्वेति आशङ्क्य पूर्वपक्षयित्वा** । **परिहृतमिति** । विधेः प्रवर्तनात्मकस्येष्ट-

भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत ।

किं च वाजपेयाधिकरणे तन्त्रसम्बन्ध आशङ्क्य परिहृतः । धात्वर्थस्य करणत्वेनैवान्वये तन्त्रसम्बन्धशङ्कैव न स्यात् । तन्त्र सम्बन्धशङ्कापरिहारौ च व्याख्यातौ ।

---

साधनत्वानाक्षेपेण प्रवर्तकत्वाभावेन तद्धानस्यावश्यकत्वे तस्य च श्रुत्यधीनस्य भ्रमत्वे प्रमाणाभावेन तत्प्रमात्वसंपत्तये इष्टस्यापेक्षितत्वेन तस्यैव पुरुषार्थभूतस्य भाव्यत्वौचित्यात्समानपदोपात्तोऽपि यागादिरपुरुषार्थत्वेन न भाव्यं भवतीति । शङ्कैवेति । कुतः सिद्धान्त इति भावः । व्यर्थमिति । संशयपूर्वपक्षाभावे निर्णयरूपतत्कृत्यस्याभावादिति भावः । नन्वनेनाधिकरणेन साध्यत्वाभावे निश्चिते करणत्वमपि न स्यादिति पूर्वपक्षे प्राप्ते भावार्थाधिकरणेन करणत्वं साधितमिति ब्रूमः । एवं चैतदधिकरणभावार्थाधिकरणसिद्धोऽयं नियमः कथमेतदधिकरणपूर्वपक्षानुत्थानापादनेन परिजिहीर्ष्यत इति शङ्कायामनुपपत्त्यन्तरमाह किञ्चेति । वाजपेयाधिकरणे 'वाजपेयेन यजेत स्वाराज्यकामः' इति विषयवाक्येन प्रवृत्तेऽधिकरणे । तन्त्रसम्बन्धः तन्त्रेण सम्बन्धः । धात्वर्थस्य फलभावनायां गुणकरणत्वफलसाध्यत्वनिर्वाहरूपानेकोद्देशेन सकृद्भावेन सम्बन्धः । शङ्कैव न स्यादिति । तत्र हि धात्वर्थस्य करणत्वेनान्वये गुणान्वयासम्भवात्साध्यत्वेनान्वये फलान्वयासम्भवाच्च तदुभयोपपत्तये सम्बन्धसामान्येनान्वय इति पूर्वपक्षे सम्बन्धसामान्यस्यानाकांक्षितत्वाद्विशेषरूपेणैवान्वय इत्येवमन्यतरदेव परिग्राह्यमिति सिद्धान्तः कृतः । यदि साध्यत्वेनान्वयो नेति स्यात् तर्हि कस्य सम्पादनाय पूर्वपक्षी तन्त्रसम्बन्धं ग्रहीष्यति । करणत्वभिन्नश्चायं तन्त्रसम्बन्धः कथं सम्बन्धतामनुभवति । तथा परिहारोऽपि साध्यत्वाभ्युपगमेन कृतो न सङ्गच्छेतेति । अत्र शङ्कापरिहारोभयासाङ्गत्याभिप्रायेणोपरि शङ्कापरिहाराविति निर्देक्ष्यति । तत्रेति तदधिकरणगतावित्यर्थः । व्याख्यातौ वैयधिकरण्येनान्वयविचारावसरे । ननु धात्वर्थस्य यत्नाप्राप्तिः

किं च धात्वर्थस्य न करणत्वेनैवान्वयः । गुणकामाधिकरणे आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात् । तथा हि—दध्नेन्द्रियकामस्य जुहुयादित्यत्र न तावद्धोमो विधीयते । तस्य वचनान्तरेण विहितत्वात् । नापि होमस्य फलसम्बन्धः । गुणपदानर्थक्यापत्तेः । नापि गुणसम्बन्धं विधत्ते । फलपदानर्थक्यापातात् ।

---

तत्रैव करणत्वेनान्वय इति भावार्थाधिकरणार्थ इति बुद्ध्या पूर्वपक्षिणि प्रत्यवतिष्ठमाने तदभिप्रायानुसारेणैव तत्पक्षः परिहृतः । न तु तावता साध्यत्वेनान्वयोऽस्तीति सिद्धान्तिहृदयमिति मन्वानं प्रति करणत्वं विहायान्यथाऽप्यन्वयस्यैव सिद्धान्तिसम्मततया तत एव नियमस्य परित्यक्तव्यतया साध्यत्वेनान्वयोऽपीष्यतामिति सूचयितुं अन्यथाऽन्वयेन नियमभङ्गं दर्शयति किञ्चेति । करणत्वेन करणत्वेनैव । गुणकामाधिकरणे गुणानामेव फलसम्बन्धप्रतिपादकेऽधिकरणे । ननु कुतस्तत्र करणत्वमनन्तरोक्तं साध्यत्वं वा न सम्भवति येनाश्रयत्वेनान्वय उच्यते । किं चेदमाश्रयत्वमित्यत्राऽऽरभते तथा हीति । दध्नेति तदधिकरणविषयवाक्योक्तिः । हु धात्वर्थप्रक्षेपस्याध्वर्युकर्तृकतया फलकामस्य यजमानस्य च ततो भिन्नत्वेनेन्द्रियकामस्येति षष्ठीनिर्देशः । अत्र वाक्ये किं होमो विधीयते, उत तस्य फलसम्बन्धः, किं वा गुणसम्बन्धः, आहोस्वित् उभयसम्बन्धोऽथ वा होमान्तरमेव, यद्वा फलमुद्दिश्य दधिमात्रमिति सम्भाव्यमानान् पक्षान् होमस्याश्रयत्वेनान्वयव्युत्पादनाय निषेधति न तावदित्यादिना । वचनान्तरेण अग्निहोत्रं जुहोतीति विधिना । फलसम्बन्धः फलसाधनत्वम् । विधीयत इत्यनुषङ्गः । अज्ञाततया ज्ञाप्यत इति तदर्थः । गुणपदेति । गुणवाचकदधिपदेत्यर्थः । गुणसम्बन्धं गुणकरणकत्वम् । होमस्येत्यनुषङ्गः । फलपदेति । फलपरेन्द्रियकामस्येति पदेत्यर्थः ।

नाप्युभयसम्बन्धं विधत्ते । प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः । यदाहुः—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

---

उभयसम्बन्धं फलगुणोभयसम्बन्धं, फलसम्बन्धं गुणसम्बन्धं चेति यावत् । कर्मणीति । सप्तम्यर्थ उद्देश्यत्वम् । यद्यप्यनुवादेऽपि मत्वर्थलक्षणावादिनं प्रति होमोद्देशेनोभयविधाने वाक्यभेद इति वक्तुमशक्यम् ; अथापि सम्बन्धद्वयविशिष्टधात्वर्थस्यैव विधानेऽपि वस्तुतो विशेष्यस्य प्राप्तत्वेन विशेषणद्वय एव विधिशक्तिसंक्रमादर्थतस्तस्योद्देश्यत्वमेवेति न व्याघातः । अथ वा प्राप्ते कर्मणि कर्मणि प्राप्ते सति । अनेकविधाने अनेकज्ञापने वाक्यभेदादिति वाक्यार्थः । एतेनेह वस्तुतः कर्मणः फलसम्बन्धबोधनेऽपि फलस्यैवोद्देश्यत्वात् कर्मणः करणत्वेनैवान्वयात् कर्मोद्देशेनेति न युक्तं वक्तुमित्यप्यपास्तम् । उक्तेऽर्थे पौर्णमास्यधिकरणवार्तिकं प्रमाणयति । यदिति । कर्मणि प्रमाणान्तरेण ज्ञाते सति तस्मिन् प्राप्तकर्मगति वाक्येऽनेको गुणोऽज्ञाततया ज्ञापयितुं न शक्यते । तथा सति कर्मणि विधिव्यापाराभावेन विशेषणेष्वेव संक्रमेण विधिव्यापारानेकत्वप्रसङ्गात् । अतो वाक्यस्यैकव्यापारत्वाविघाताय वाक्यभेद एव प्रसजेत् । कर्मणि मानान्तरादज्ञाते पुनर्बहवोऽप्येकयत्नतो विधीयन्ते । बहुगुणविशिष्टं कर्म तथाविधा भावना वैकेनैव विधिव्यापारेणावृत्तिमन्तरेण विधातुं शक्यते । विशेष्य एव विधिव्यापारात् । विशेषणानामार्थिकैर्विधिभिरेव विधेयत्वादिति वार्तिकार्थः । अत्रानेक इति पदेन कर्मणि प्राप्ते गुणद्वयस्यापि विधानं न संभवतीत्युक्तम् । बहव इत्यनेन त्रिचतुरादियावद्गुणसत्त्वेऽपि विधिसंभव उक्तः । एकयत्नत इत्यनेन विधिव्यापारानेकत्वाभावेन वाक्यभेदो नास्तीत्युक्तम् । नन्विह गुणशब्द एवोपात्तः । स च कर्मोपकारकपरः । अतश्च गुणानेकत्व एव वाक्यभेदः । प्रकृतवाक्ये तु गुणसब-

अत्र च कर्मपदवत् गुणेत्यप्युपलक्षणम् । एकोद्देशेनानेकविधाने वाक्यभेदात् ।

॥ अत एव ग्रहैकत्वाधिकरणे ग्रहं संमार्ष्टीत्यत्र ग्रहोद्देशेन

---

न्धः फलसंबन्धश्चाज्ञातौ ज्ञाप्येते । तत्रैक एव गुणः । फलं तु न कर्मोपकारकम् । अतो नास्ति वाक्यभेद इत्यत्राह अत्रेति । कर्मपदवदिति तत्त्वव्युत्पादनमुखेन प्रकृतोपलक्षणत्वदार्ढ्याय । उपलक्षणं स्वशक्यार्थवृत्तिशक्यतावच्छेदकभिन्नधर्मपुरस्कारेण तद्भिन्नस्याप्युपस्थापकम् । धर्मश्च कर्मगतः प्राप्तत्वरूपः । गुणगतश्चाप्राप्तत्वरूपः । इमौ द्वावपि 'उद्देशेन' 'विधाने' इति पदाभ्यां सूचितौ । एकोद्देशेन एकानुवादेन । अनेकविधाने अज्ञातानेकज्ञापने । वाक्यभेदादिति । तथाच कर्मणीति गुण इति च विशेष्यस्य कस्यचित् ज्ञापनाय निर्दिष्टम् । प्राप्ते नानेको विधातुं शक्यत इत्येव वक्तव्यमिति भावः । ननु कर्मपदस्यैवोपलक्षणत्वमसिद्धम् । अस्तु वा तत्र । गुणपदे कुत इत्यत्र क्रमेण लक्षणाया आवश्यकत्वं दर्शयति अत एवेति । ग्रहैकत्वेत्यादि । ग्रहः यस्मिन् पात्रे सोमरसो द्रोणकलशादिभ्यो गृह्यते । स चानेको ग्रहैर्जुहोतीति वाक्येनावगतः । तेषु पात्रेषु सोमरसे गृहीतेऽथ बाह्यस्तदवसेकनिर्हरणार्थोऽयं संमार्जनव्यापारो यद्यपि प्रतिग्रहं भवति ; अथाप्येकवचनश्रवणात्तदवैयर्थ्याय एकत्वविशिष्टग्रहस्यैवोद्देश्यत्वादेकस्मिन्नेव ग्रहे संमार्गः इति पूर्वपक्षः । स न संभवतीत्युच्यते । अत्र हि वचनोपात्तमेकत्वं न प्रातिपदिकार्थे निविशते । अपि तु लाघवात् द्वितीयार्थे उद्देश्यत्व एव । एवं च ग्रहैकत्वोभयोद्देश्यका संमार्गभावनेति बोधः । स च न संभवति । भावनाया उभयोद्देश्यकत्वायोगात् । तस्याः करोतिपर्यायाख्यातवाच्यत्वेनैककर्मकत्वावसायात् । किं च ग्रहोद्देशेन संमार्गे विहिते 'प्रतिप्रधानं गुणावृत्ति'रिति न्यायेन सर्वत्रैव संमार्गप्राप्त्या कति ग्रहाःसंमार्जे-

एकत्वसम्मार्गविधौ वाक्यभेदात् ग्रहैकत्वमविवक्षितमित्युक्तम् ।
रेवत्यधिकरणं च 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम

---

नीया इति बुभुत्सैव नास्तीति । ननु तर्हि ग्रहमुद्दिश्य संमार्गः एकत्वं च विधीयतामिति चेदेवं तर्हि अनेकविधाने वाक्यभेदः । अत एकत्वमविवक्षितमिति । इत्युक्तमिति । तथा चेह ग्रहस्य द्रव्यस्यैवोद्देश्यत्वादिहापि वाक्यभेदस्य सिद्धान्तात् कर्मपदमुपलक्षणमेष्टव्यमिति भावः । रेवत्यधिकरणे रेवतीपदघटितनिर्दिश्यमानवाक्यविषयकेऽधिकरणे । 'त्रिवृदग्निष्टुदग्निष्टोमः' इति वाक्येन त्रिवृत्पदवाच्यस्तोत्रीयानवकस्तोमकोऽग्निष्टोमसंस्थाकोऽग्निष्टुन्नामा यागो ज्योतिष्टोमविकृतिराम्नातः । अनन्तरं 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजे'ते'ति श्रुतम् । अग्निष्टोमसाम आग्नेयीषु ऋक्षु क्रियमाणमग्निष्टोमस्तोत्रसाधनं यज्ञायज्ञियं साम । तस्य प्राकृताग्नेयीऋग्बाधेन वायव्याः वायुदेवता ऋचो विधातव्याः । पूर्ववाक्ये त्रिवृत्स्तोमविधानेन ज्योतिष्टोमगतं स्तोमान्तरं परिसंख्यातम् । अतोऽत्राग्निष्टोमसाम्ना वायव्यासु ऋक्षु गीयमानेनैकविंशस्तोमः संपाद्यो विधातव्यः । अत्राग्निष्टोमसामपदमग्निष्टोमस्तोत्रपरम् । साम्नः ऋगक्षराभिव्यक्त्यर्थत्वेन ऋगङ्गतया तासामेतदङ्गत्वाभावेन वायव्यानां तत्र विधानासम्भवात् । अतः क्लृप्तोपकारसिद्धये स्तोत्रपरत्वमेव । तथा च वायव्याविशिष्टैकविंशस्तोमविशिष्टाग्निष्टोमस्तोत्रभावनासमानकर्तृकप्रकृतयागप्रयोगः पश्वर्थो विधीयते । अनन्तरं चेदमेतस्यैवेति वाक्यं श्रूयते । रेवत्यः 'रेवतीर्न' इत्युपक्रमे रेवर्णविशिष्टा ऋचः । वारवन्तीयं अश्वं नत्वा वारवन्तमित्यस्यां ऋच्युत्पन्नं साम । अत्र किं 'दध्नेन्द्रियकामस्य जुहुया' दित्यत्रेव गुणफलसम्बन्धो विधीयते उत कर्मान्तरमिति विचारः । अत्रैवं पूर्वः पक्षः । प्राकरणिकेन वारवन्तीयमग्निष्टोमसाम भवतीति वाक्येन वारवन्तीयस्याग्निष्टोमस्तोत्रसाध-

नत्वं प्राप्तम् । तस्य साम्नो रेवतीसंबन्धित्वमिह विधेयम् । यद्यपि साम्नः ऋगक्षराभिव्यक्त्यर्थस्य न रेवत्यङ्गकत्वं संभवति । अथापि रेवतीनां तदाधारत्वावश्यंभावाद्रेवत्याधारकत्वमेवेह विधीयते । एवं रेवत्याधारवारवन्तीयस्य पशुकामो ह्येतेन यजेतेति पश्वर्थतया विधिः । अत्रैतच्छब्दो विलिङ्गसंख्यत्वाद्रेवतीमुपस्थापयितुमसमर्थः तद्विशिष्टं वारवन्तीयमेव वक्तीति तस्यैव फलसम्बन्धः । न च वारवन्तीयस्य रेवतीसम्बन्धः फलसम्बन्धश्चेति वाक्यभेद इति वाच्यम् । संबन्धद्वयस्याप्येकभावनाविषयत्वे हि वाक्यभेदः । अत्र तु कृत्वाशब्दान्तर्गतप्रत्ययार्थभावनायां रेवतीवारवन्तीयसंबन्धो विषयः । तथाविधभावनाविशिष्टायां यजेतेत्यत्रत्यायां भावनायां फलवारवन्तीयसम्बन्ध इत्यदोषात् । अतः कर्मान्तरं न विधीयते । अपि तु गुणफलसम्बन्ध एव । वारवन्तीयस्य चाश्रयः प्रकृतो यागः । अत एवैतस्यैवेति प्रकृतयागपरामर्शि पदमपि सङ्गच्छत इति । एष प्रतिक्षिप्यते । वारवन्तीयस्य साम्नो ध्वन्यात्मकत्वेन सिद्धवस्तुत्वात्क्रियाविशेषमन्तरा फलजनकत्वाभावेन क्रियारूपाश्रयाकांक्षत्वमावश्यकम् । तत्र प्रकृतो यागो नाश्रयो भवति । यागस्य द्रव्यदेवतासाध्यस्य सामसाध्यत्वाभावात् । नाप्यग्निष्टोमस्तोत्रमाश्रयः । तदाश्रयत्वसमर्पकप्रमाणाभावात् । न च वारवन्तीयमग्निष्टोमसाम भवतीति वाक्यात्तन्निश्चयः । तेन क्रतुप्रकरणगतेन वाक्येन वारवन्तीयस्य क्रत्वर्थत्वावगमात्तस्याग्निष्टोमस्तोत्रसाधनत्वेऽपि पश्वर्थत्वेन पुरुषार्थस्य प्रकृतवारवन्तीयस्य तत्साधनत्वे प्रमाणाभावात् । न च तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वेति वाक्येनाग्निष्टोमस्तोत्रस्योपस्थितत्वेन सामस्तोत्रापेक्षस्य तत्साधनत्वमवगम्यत इति वाच्यम् । तथात्वे तेन वाक्येन तत्स्तोत्राङ्गत्वेन वायव्यानामृचामुपदिष्टत्वेन तत्र रेवतीनिवेशासम्भवात् । प्रकृतस्य साम्नः स्तोत्रापेक्षस्यातिदेशप्राप्ताज्यपृष्ठादिस्तोत्रनिवेशेन रेवतीभिरातिदेशिकर्गा-

कृत्वा पशुकामो ह्येतेन यजेत' इत्यत्र वारवन्तीयस्य रेवतीसम्बन्धे अग्निष्टोमसामसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदाद्भावनोपसर्जनं भावनान्तरं विधीयत इत्युक्तम् । तस्मात्प्राप्ते ह्योमे नो-

---

धस्यैव युक्तत्वेनौपदेशिकर्ग्बाधायोगात् । न चातिदिष्टस्तोत्राणामेवाश्रयत्वम् । अग्निष्टोमसोमेत्यनुवादासम्भवात् । अतः प्रकृतेनैव वाक्येनाग्निष्टोमस्तोत्ररूपाश्रयसमर्पणमेष्टव्यम् । एवं च वारवन्तीयस्य रेवत्याधारकत्वमिवाग्निष्टोमस्तोत्रसाधनत्वमपि विधेयम् । तथा फलसम्बन्धश्चेति वाक्यभेदः । अत इह पशुकामो ह्येतेन यजेतेत्यनेन पश्वर्थतया यागान्तरमेव विधीयते । यद्यप्यस्यामेव भावनायां रेवतीवारवन्तीयाग्निष्टोमस्तोत्रसंबन्धानामन्वयः संभवति ; अथापि क्त्वाशब्दश्रवणात्तदुपस्थापितायामेव भावनायां तेषां संबन्धः । तत्राग्निष्टोमसामपदस्य पूर्ववाक्य इवाग्निष्टोमस्तोत्रपरत्वेन विशेषणप्रधानत्वम् । तथा च रेवतीवारवन्तीयविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टा पशूद्दश्यका विजातीययागभावना विधीयत इति । **रेवतीसंबन्धे** रेवत्यधिकरणकत्वे । **अग्निष्टोमसामसम्बन्ध** अग्निष्टोमस्तोत्रसाधनीभूतसामाभेदे तत्स्तोत्रसाधनत्व इति यावत् । **फलसम्बन्धे** फलसाधनत्वे । भिन्नभिन्नायामेव भावनायां रेवतीसम्बन्धः फलसम्बन्धश्च विधेय इति न वाक्यभेद इति पूर्वपक्ष्यभिप्रायं निराकर्तुम**ग्निष्टोमसामसम्बन्ध** इत्युक्तम् । अयं भावः । पूर्वोक्तप्रकारेण अग्निष्टोमस्तोत्रसाधनत्वस्यापि विधेयत्वात् किमाद्यभावनायां तदन्वय उच्यते उतान्त्यायाम् । आद्ये रेवतीसम्बन्धस्यापि अन्त्ये फलसम्बन्धस्यापि च विधेयतया वाक्यभेदः । **भावनोपसर्जनं** क्त्वाशब्दोक्तभावनाविशेषणकम् । **भावनान्तरं** प्रकृतयागभावनाभिन्ना विजातीययागभावना । एतस्यैवेति पदं तु यागस्यास्य पूर्वयागविकृतित्वादुपपन्नमिति । **इत्युक्तमिति** । तथा च गुणशब्दस्य यथाश्रुतार्थकत्वे रेवतीनां स्तोत्रस्य च वारवन्तीयं प्रत्युपकारक-

**भयविधानं सम्भवति। नापि होमान्तरं विधीयते, गौरवात्। प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात्, मत्वर्थलक्षणाप्रसङ्गाच्च।**

**नापि दध्येव केवलं करणत्वेन विधीयत इति युक्तम्। केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः। कर्तृव्याप्यत्वनियमात्करणत्वस्य। किं तर्हि विधीयत इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते। प्रत्ययार्थत्वेन दध्नोऽपि**

---

त्वाभावात्प्रत्युत साम्न एव तदुपकारकत्वात्फलस्यापि तथात्वात्सर्वथानेकगुणसम्बन्धाभावेन वाक्यभेद एव न स्यात्। अतो गुणशब्द उपलक्षणमिति। अस्तु तर्हि रेवतीवाक्य इव कर्मान्तरमिति पंचमपक्षं प्रतिक्षिपति **नापीति**। **गौरवप्रसङ्गादिति**। एकस्यैवोत्पत्तिविधित्वाधिकारविधित्वकल्पनाविशिष्टविधानरूपगौरवप्रसङ्गादित्यर्थः। **प्रकृतहानम्** उपस्थितस्याग्निहोत्रहोमस्य धात्वर्थत्वत्यागः। **अप्रकृतकल्पना** अपूर्वहोमार्थकत्वाङ्गीकारः। षष्ठं निरस्यति **नापीति**। एवकारेण होमव्यवच्छेदः। **केवलमिति**। करणत्वानाक्रान्तमित्यर्थः। **केवलस्य** करणत्वानाक्रान्तस्य; अत एव **व्यापारानाविष्टस्य**। कुत इत्यत्राह **कर्त्रिति**। क्रियारूपस्य यागादेः कर्तृगतकृतिविषयभावेन करणत्वम्। सिद्धरूपस्य च पदार्थस्य कर्तृगतकृतिजन्यव्यापारविषयत्वेन तत्। न हि कुठारः उद्यमनादिव्यापारमन्तराऽपि करणीभवितुमलम्। अतो दध्नः सिद्धरूपस्य क्रियावेशमन्तरा करणत्वं न सम्भवतीति। एवं वाक्योपात्तेषु सर्वत्र विध्यसम्भवे निरूपिते विधेयमजानानः पृच्छति **किन्तर्हीति**। **फलभावनायामिति**। फलभाव्यकभावनायामित्यर्थः। एतेन होमस्य नेहोद्देश्यत्वमित्युक्तम्। **करणत्वेनेति**। गुणविधिस्थले सर्वत्र करणत्वस्य निरूपकतासम्बन्धेनान्वयः। क्रियाया गुणजन्यत्वात्। गुणफलविधिस्थले पुनः करणत्वेनैव करणत्वस्यान्वयः। तेनैव फलं भवतीति कल्पनसम्भवात्। सम्बन्धतया भास-

तस्य प्राधान्यात् । एवं च दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः । करणत्वं च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन संबन्ध्यते ।

---

मानं करणत्वं फलनिरूपितम् । प्रकारतया भासमानं तु क्रियानिरूपितमिति । ननु यदि करणत्वसमावेशमन्तरा दध्नः फलकरणत्वं न सम्भवति ; तर्हि करणत्वविशिष्टं दधि करणत्वेनान्वेतीत्येवोच्यताम् । कुतो दधिकरणत्वमेवेति तत्राह प्रत्ययेति । दध्नः प्रकृत्यर्थदध्यपेक्षया । तस्य करणत्वस्य । प्राधान्यादिति । सर्वत्र प्रत्ययार्थस्यैव विशेष्यतया करणत्व एव दध्यन्वयस्य वक्तव्यतया करणत्वविशिष्टं दधीति बोधो न सम्भवतीति भावः । तृतीयोपरि तृतीयाभावेऽपि यजेतेत्यादौ यागेन भावयेदितिवत् इहापि दधिकरणत्वेनेति सम्भवतीति सूचयन् निर्गलितं बोधाकारमाह एवं चेति । किंप्रतियोगिकम् किन्निरूपितम् । होमस्याश्रयत्वं यदि प्रकृतवाक्येन ज्ञाप्यते तर्हि अनेकविधानं प्रसजति । अत उक्तं सन्निधिप्राप्त इति । अग्निहोत्रं जुहोतीति वाक्यस्य सन्निहितत्वेन तस्य मनसि विपरिवर्तमानतया तावतैव दध्ना होमः कर्तव्य इति विधिकल्पनेन तस्याश्रयत्वज्ञानसम्भवान्न सम्भवत्प्रासिके तत्रापि विधिव्यापार इति भावः । आश्रयत्वेनेति । करणतानिरूपकत्वेनेत्यर्थः । न ह्यनाश्रित्य होमं दधि फलं जनयतीति स आश्रयः ।

नव्यास्तु दध्नो जुहोतीत्यादाविव गुणफलविधिस्थलेऽपि दध्यादेरेव भावनायां करणत्वेनान्वयः । तस्य च क्रियावच्छिन्नस्यैव फलकरणत्वात्तावतैवावच्छेदकाकांक्षायां पूर्ववद्धोमादिकमाश्रयो भवतीत्याहुः । सम्बध्यते भावनायामिति शेषः । नन्वाश्रयस्य सन्निधिप्राप्तत्वेनेह भावनायां धात्वर्थस्य तथाऽन्वयो व्यर्थ इति धातुवैयर्थ्यं प्रसजति । अतो दध्नेति पदवैयर्थ्याङ्गीकारेण धात्वर्थस्यैव करणत्वमिष्यताम् । मैवम् । होमे

ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः । प्रकृतमनुसरामः । तत्सिद्धं धात्वर्थस्य न करणत्वेनैवान्वय इति । किं तर्हि क्वचित्करणत्वेन क्वचित्साध्यत्वेन क्वचिदाश्रयत्वेनेति । गुणविधौ साध्यत्वेनैवान्यः संभवतीति न मत्वर्थलक्षणायाः प्रयोजनम् । किं च गुणविधौ मत्वार्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम् । न तावच्छ्रुतिः ।

---

दध्नः प्राप्त्यभावेनानुवादानुपपत्तेः । न च दध्ना जुहोतीति वाक्येन तत्प्राप्तिः । तेनापि नियमेन प्राप्त्यभावात् । पयसा जुहोतीत्यादिना पयआदेरपि होमसाधनत्वावगमात् । अतः पाक्षिकानुवादपरिहारार्थमिन्द्रियार्थतया दध्न एव विधिः । धातोस्तु 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय' इति साधुत्वार्थं प्रयोग इत्येवोपपत्तिर्भवति । अथापि तु तदर्थस्योपस्थितस्य विधिव्यापाराभावेऽपि भावनायामन्वयमात्रमङ्गीक्रियत इति । एवं गुणकामाधिकरणसिद्धं धात्वर्थान्वयप्रकारमुपसंहरति ततश्चेति । अनुगतानतिप्रसक्तस्याश्रयत्वस्यानिर्वचनादाह **प्रकृतमनुसराम** इति । एवं गुणकामाधिकरणानुरोधायैव करणत्वनियमस्य त्याज्यतया वाजपेयाधिकरणोक्तस्य सिद्धान्त्यनभिमतत्वकल्पनाया अयुक्तत्वेन साध्यत्वमपि ग्राह्यमित्याशयेनोपसंहरति **तत्सिद्धमिति** । नेति । करणत्वेनान्वय इति नेत्यन्वयः । द्वितीय इतिः सिद्धमित्यस्य विशेष्यम् । **किं तर्हीति** केन रूपेण तर्ह्यन्वय इति प्रश्नः ।

नन्वाश्रयत्वस्य प्रमाणान्तरावसितत्वेनानाकांक्षितत्वान्न धात्वर्थस्य तत्त्वेनान्वयः । केवलं पुनस्साधुत्वाय धातुः । अपि च करणाकांक्षैव वितताऽऽश्रयाकांक्षेति न करणत्वातिरिक्तमाश्रयत्वम् । अतो नातीव नियमबाधकं दृश्यत इत्यतो बाधकान्तरमाह **किञ्चेत्यादिना** । किं मानं वक्तव्यं मानतया कस्य वक्तव्यता किं श्रुतेः किं वा वाक्यस्येति । करणतयाऽङ्गत्वं हि सोमस्य सम्मतम् । तच्च तृतीययाऽवगन्तव्यम् । श्रूयमाणा च तृतीया न सोमनिष्ठं

मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्यात्, न गुणस्याङ्गत्वेऽपि। समभिव्याहारात्मकं वाक्यमिति चेत्तत्किं स्वतन्त्रमेव मानमुत लिङ्गश्रुती कल्पयित्वा। नाद्यः, बलाबलाधिकरणविरोधात्। तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे मानमित्युक्तम्। द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्तिकल्पने वृथाऽऽयासः समाश्रितः स्यात्। विशिष्टविधौ चागत्या तदाश्रयणम्।

---

करणत्वमाह; प्रातिपदिकस्य सोमविशिष्टार्थकत्वादित्याह मत्विति। अङ्गत्वे फलनिरूपिते। गुणस्याङ्गत्वे गुणनिष्ठे धात्वर्थनिरूपिते। मानं स्यादित्यनुषङ्गः। ननु सोमादिगुणवाचकपदस्य गुणविशिष्टार्थकत्वेन विशेषणविधया गुणोपस्थापकत्वात्तस्य धातोश्च समभिव्याहारसत्त्वेनाङ्गाङ्गिवाचकपदसमभिव्याहाररूपं वाक्यमेव मानमस्त्विति शङ्कते समिति। तद्विकल्पयति तदिति। स्वतन्त्रं प्रमाणान्तराकल्पकं सत्। लिङ्गश्रुती लिङ्गं सामर्थ्यरूपं ततः श्रुतिमङ्गत्ववाचिकाम्। बलाबलाधिकरणविरोधादिति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपेष्वङ्गताबोधकेषु प्रमाणेषु उत्तरोत्तरस्य पूर्वपूर्वकल्पनेनैव प्रमाणतया द्वयोस्समावेशे पूर्वस्य प्राबल्यमुत्तरस्य तदभावश्च यस्मिन्नधिकरणे स्थितं तदधिकरणविरोधादित्यर्थः। इत्युक्तमिति। तत्र समभिव्याहारेऽङ्गतावाचकपदाभावेन विनियोगविधिनाऽङ्गत्वबोधनासम्भवादङ्गतावाचके पदे कल्पनीये तत्रापि श्रूयमाणार्थयोरङ्गाङ्गिभावे सामर्थ्यं प्रथमत आलोच्य पश्चादेव तत्पदं तृतीयाश्रुत्यादि कल्पयित्वा वाक्यस्य विनियोजकत्वमित्युक्तमित्यर्थः। द्वितीये कल्पयित्वाऽङ्गत्वे मानमिति पक्षे। उत्सृज्य गुणगताङ्गत्वाबोधिकां मत्वा। लाघवादाह तस्या एवेति। न गतिसद्भावादेव न तदाश्रयितव्यमित्युच्यते; अपि तु तदाश्रयणेऽप्यभिमतासिद्धेरिति

किं च भवतु श्रुत्यन्तरकल्पनम् । तथाऽपि तत्सहकृतः प्रत्यक्ष एव विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, उत कल्पितं विध्यन्तरम् । कल्पितमिति चेन्न, श्रुतविधेर्वैयर्थ्यतापत्तेः । न हि तेन तदा गुणो विधीयते, कल्पितविध्यन्तराङ्गीकारात् । नापि धात्वर्थः । तस्य वचनान्तरेण विहितत्वात् ।

अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्ते इति चेत् तर्हि तत्र कथं धात्वर्थस्यान्वयः । करणत्वेनेति चेन्न, अन्वयानुपपत्तेः । न हि संभवति दध्ना होमेनेति चान्वयः । साध्यत्वेनैवान्वयः—दध्ना होमं भावयेदिति चेत्—न ।

---

पूर्वं वृथाशब्दव्यञ्जितं विशदयति किञ्चेति । एवेति । आयासन्यूनाधिकभावेन विकल्पक्रमः । प्रथमपक्षे वक्ष्यमाणस्य दोषस्य द्वितीयकल्पेऽपि संभवादिहापाद्यमानस्य च तत्र परिहर्तुं शक्यत्वात्प्रथमं द्वितीयपक्षमनूद्य निरस्यति कल्पितमिति । श्रुतविधेः श्रूयमाणस्य गुणविधिवाक्यस्य । व्यर्थतापत्तेः अज्ञातकिञ्चिदर्थप्रमापकत्वासम्भवात् । वचनान्तरेण अग्निहोत्रं जुहोतीत्यादिवाक्येन । प्रथममनुवदति अथेति । कल्पितश्रुतिसहकृतः कल्पिततृतीयान्तसोमेनेत्यादिपदविशिष्टः । तत्र तद्विधिविषयभावनायाम् । अन्वयानुपपत्तेः गुणस्येति शेषः । न हि संभवतीति । समानपदश्रुत्या करणाकांक्षायाश्शमितत्वादिति भावः । अथ वा अन्वयेत्यादि । गुणस्य करणत्वेनान्वयार्थमेव श्रुतेः कल्पितत्वेन करणतया दध्यवरुद्धभावनायां धात्वर्थस्य तथाऽन्वयस्यानाकांक्षितत्वेनान्वयासम्भवादित्यर्थः । ननु तर्हि तत्र धात्वर्थः साध्यत्वेनान्वेत्विति शङ्कामनुवदति साध्यत्वेनेति । यन्ममाभिमतं तव चानिष्टं तेनैवेत्येवकाराभिप्रायः । तर्हि करणत्वनियमो

तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात्। विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाऽङ्गीकृतः स्यात् ।

---

मत्वर्थलक्षणानियमश्च न स्यादित्याह **तथा सतीति** । **विवक्षितत्या-देरित्थं** वाऽर्थः । यस्मिन् वाक्यार्थे स्वीक्रियमाणे गुणस्य धात्वर्थाङ्गत्वं सम्भवति स कल्पितवाक्ये विवक्षितो वाक्यार्थः । **अङ्गीकृतः** श्रूयमाण-वाक्य एवाङ्गीकृतप्रायः स्यादिति । यस्तत्र मार्गः स इहैवेति भावः । ननु न सोमेन यजेतेति वाक्यं कल्प्यते । अपि तु सोमेन यागं भावये-दिति । तथा च धातुजन्योपस्थितिविषयस्य करणत्वमेवेति नियमो न भज्यत इति चेन्न । धातूपस्थाप्यत्व एव करणत्वम्, न पदान्तरोपस्था-प्यत्व इति नियमकारणाभावात् । यदि यजेतेत्यत्रापूर्वसाधनत्वज्ञानाय तृतीयान्तत्वमावश्यकम् । तर्हि यागवाचकपदकल्पनेऽपि यागमिति न कल्पयितुं शक्यते । अथ यागमिति न कल्प्यते । अपि त्वपूर्वसाधन-मित्येवेति चेत्, अपूर्वसाधनत्वं कुतोऽवगतम्? येन तथा कल्प्येत । श्रूय-माणाद्वाक्यादिति चेत्; इह तदवगतिरिति कुतः? यागस्य करणत्वेना-न्वयात्तस्य चापूर्वनिरूपितत्वादिति चेत्; ईदृशस्य करणत्वेनान्वयस्य धात्वर्थ-विधावपि तुल्यत्वेन गुणविधावेवापूर्वसाधनत्वमवगन्तव्यमिति निर्बन्धका-भावेन श्रूयमाणवाक्यगतधातोरेवापूर्वसाधनलक्षणाया युक्तत्वात् । अन्यथा व्रीहीन् प्रोक्षतीत्यादौ द्वितीयान्तपदघटितेपि व्रीहीणामुद्देश्यत्वं न स्यात्। अतः कल्पितवाक्येऽनुस्त्रियमाणं विद्यमानवाक्य एव युक्तमनुसर्तुम् । नन्वत्रोत्पत्तिवाक्यगताया एव भावनाया अनुवादात् तस्याश्च धात्वर्थकरण-त्वेन तदुद्देश्यकत्वं न स्यादिति चेत् कल्पितवाक्येऽपि श्रूयमाण-विधिविशिष्टे समानमेतत् । न च विधिरपि कल्प्येत । प्रत्यक्षवि-धिवैयर्थ्यस्यापादितत्वात् । यदि च भावनाभेद आवश्यकस्तर्हि कल्पना-

तस्मान्न गुणविधौ मत्वर्थलक्षणा ।

यत्तु 'विधाने वाऽनुवादे वा' इति वार्तिकं, तत्प्रतीतिमवलम्ब्य, न वस्तुगतिम् । तथा हि —यावद्धि अग्निहोत्रं जुहुयादिति वाक्यं नालोच्यते, केवलं दध्ना जुहोतीति वाक्यमालोच्यते, तदा षष्ठाद्यन्यायेन होमस्याभाव्यतां जानतां प्रतिपदाधिकरणभावार्थाधि-

---

तो वरं यजेतेत्यस्यैव भावनांशेऽनुवादकत्वानङ्गीकरणम् । न च भावनाभेदश्शक्याभ्युपगमः तथा सति प्राप्तोद्देशेनानेकविधानप्रयुक्तस्य वाक्यभेदस्य क्वचिदप्यभावप्रसङ्गात् । अथ श्रुतविधिरेव कल्पितवाक्येऽप्यङ्गीक्रियत इत्येकैव भावना । अथापि धात्वर्थकरणिकायास्तस्या एव 'दध्नामूतेन होमेन फलं भवत्वि'त्याकारिकायां धात्वर्थोद्देश्यकत्वमपि सम्भवतीति चेत् तदेतत् कल्पनां परित्यज्य श्रूयमाण एव गुणविधौ नाभ्युपेयत इत्यत्र न किञ्चित्कारणमन्यत्राभिनिवेशादिति । तस्मादिति साधकाभावाद्बाधकसद्भावाच्चेत्यर्थः ।

उपात्तप्रमाणस्यान्याभिप्रायकत्वं वक्तुमाह यत्त्विति । प्रतीतिं कादाचित्कभ्रमम् । वस्तुगतिं वस्तुतत्त्वं यथावस्थितार्थविषयज्ञानं वा । ननु कथं गुणविशिष्टो धात्वर्थः करणमित्येव भ्रमः ? कुतो यागस्य साध्यत्वेनैवान्वय इति न भ्रमः । अथ वा गुणोऽपि करणं धात्वर्थोऽपीति स्यात् । यद्वा गुण एव धात्वर्थविशिष्टः करणमिति स्यादिति शङ्कायां विवक्षितस्य भ्रमस्य पुरुषविशेषीयत्वमुपपादयति तथा हीति । नालोच्यत इति । कृते ह्यालोचने विशिष्टविधानभ्रमो न भवतीतीदमुक्तम् । स्मर्यमाणेऽपि वाक्ये यावदुपेक्षया 'तस्य कोऽर्थ' इति विचारे न प्रवृत्तिस्तावदपि भ्रमसम्भवादालोच्यत इति पदम् । तदेति तावदित्यर्थः । अभाव्यत्वं जानतामिति । अनेन धात्वर्थः साध्यमित्येव भ्रमः स्यादिति शङ्कानिरासः । प्रतिपदाधिकरणेत्यनेनोभयकरणत्वभ्रमनिरासः । भावार्थाधिकरणेत्य-

करणवासनावासितान्तःकरणानां भवत्येतादृशी मतिः, यद्दधिमता होमेनेष्टं भावयेदिति। प्रतिपदाधिकरणे हि सोमेन यजेते-त्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनोन्वयः, उत एकस्यैवेति सन्दिह्य प्रधानसम्बन्धलाभात्, विनिगमनाविरहाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव फलभावनाकरणत्वमित्युक्तम्। भावनाकरणत्वं हि भावनाभाव्यनिर्वर्तकतया। भाव्यं च स्वर्गादि नादृष्टमन्तरेणेति अनेकेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गात्। तस्मादेकस्यैव करणत्वम्।

---

नेन धात्वर्थविशिष्टस्य गुणस्य करणत्वमिति भ्रमो निरस्तः। षष्ठाद्यर्थस्य पूर्वमेवोक्ततया प्रतिपदाधिकरणभावार्थाधिकरणार्थव्युत्पादनेन भ्रमनिरासं गमयति प्रतिपदेत्यादिना। सोमेन यजेतेति तत्राधिकरणयोरुपात्तत्वादुपादानम्। गुणधात्वर्थयोः द्रव्यगुणाद्युपपदार्थधात्वर्थयोः। फलभावनाकरणत्वेनेति। फलश्रवणाभावेऽपि विध्यन्यथाऽनुपपत्त्या फलस्य कल्पनीयत्वात् सर्वस्या अपि भावनायाः फलोद्देश्यकत्वम्। प्रधानफलसम्बन्धलाभादिति। अन्यशेषतामन्तरेण साक्षात्पुरुषार्थसाधनत्वस्यापेक्षितस्य सर्वत्र लाभादित्यर्थः। ननु दध्ना जुहोतीत्यादौ गुणस्य, दध्नेन्द्रियकामस्य जुहुयादित्यादौ धात्वर्थस्य च प्रधानसम्बन्धः परित्यक्तः। तद्वदिहापि स्यादित्यत्राह विनिगमनाविरहाच्चेति। तत्रांशान्तरस्य प्राप्तत्वेनाप्राप्त एव विधेः प्रवृत्त्या सर्वस्य स नासीत्। इह तु सर्वस्याप्राप्ततया फलसम्बन्धस्तुल्य एव। न च समानपदश्रुत्या धात्वर्थ एव करणमिति युक्तम्। तस्योपस्थितिशैघ्र्यसम्भवेऽपि विलम्बितोपस्थितिकस्यापि प्रबलकारकश्रुत्या करणत्वावगमात्। अतो न विनिगमकमिति। अत्र 'इत्यादिषु' सन्दिह्य 'आशङ्क्य' उक्तमित्यनेन विषयविशयपूर्वपक्षोत्तररूपाधिकरणाङ्गचतुष्टयमुक्तम्। अनेकादृष्टकल्पनाभाव एव लाघवमित्याह भावनेति। स्वर्गादीत्यनेन फलस्य चिरकालानन्तरभावित्वं व्यापारापेक्षित्वं च सूचिते। नादृष्टमन्तरेणेति। इतीति। इत्यत इत्यर्थः कल्पनायामन्वेति। एकस्यैवेति।

यदाऽप्येकस्य तदाऽपि किं द्रव्यगुणयोः फलभावनाकरणत्वम्, उत धात्वर्थस्येति भावार्थाधिकरणे सन्दिह्य द्रव्यगुणयोरेव भावनाकरणत्वम्, 'भूतं भव्यायोपदिश्यते' इति न्यायादित्याशंक्य धात्वर्थस्यैव भावनाकरणत्वम्, पदश्रुतेर्बलीयस्त्वादित्युक्तम्। अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति।

यदा त्वग्निहोत्रं जुहोतीति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयत इत्यालोचनान्न मत्वर्थलक्षणेति।

---

धात्वर्थस्य वोपपदार्थस्य वैकस्येत्यर्थः। यदा धात्वर्थः करणं, तदोपपदार्थः दृष्टद्वारा तत्साधनं भवति। यदा चोपपदार्थः करणं तदाऽपि सिद्धस्य तस्य फलकरणतानिर्वाहायापेक्षितो व्यापारो धात्वर्थ इति दृष्टद्वारा तदुपयोगः। एवञ्चादृष्टमेकमेवेति भावः। द्रव्यगुणयोरिति। द्रव्यस्य वा गुणस्य वा जातेर्वा कस्यचिदुपपदार्थस्येत्यर्थः। भावार्थाधिकरणे यदधिकरणसूत्रादौ भावार्थशब्दस्तदधिकरणे। भूतं सिद्धम्। भव्याय साध्याय। सिद्धं हि साधनं भवति; न तु साध्यत्वावस्थापन्नम्। यागादि च क्रियारूपं न सिद्धमिति द्रव्यादेरेव कारकश्रुत्या साधनत्वं युक्तमिति भावः। पदश्रुतेरिति। भावनाया भाव्याकांक्षाकाल एवोपस्थितो धात्वर्थः स्वयमपुरुषार्थत्वादनन्वितः करणाकांक्षायां झटिति सम्बध्यते। एवं परिपूर्णस्य तस्य पदस्यार्थे निश्चित एव पदान्तरार्थः पर्यालोचनीय इति विलम्बोपस्थितिकस्य द्रव्यादेस्तत्साधनत्वमेव युक्तम्। न च साध्यस्य साधनत्वाभावः। साध्यावस्थायां तदभावेऽपि साधितस्य तत्सम्भवादिति भावः। एवं श्रमान्तरासम्भवं पुरुषविशेषे सम्पाद्य प्रतीत्यवलम्बनेन मत्वर्थलक्षणां निगमयति तथा चेति। एतद्वाक्यान्तरानालोचनदशायम् एतस्य दध्ना जुहोतीति वाक्यभिन्नस्याग्निहोत्रं जुहोतीति वाक्यस्यानालोचनसमय इत्यर्थः। एतदिति पृथक्पदं वा। करणत्वशङ्कायाम् करणत्वप्रतीतौ। तदेति आलोचनादित्यत्रान्वितम्। ननु प्रवर्तनात्मकस्य विधेर्धात्वर्थविशेषावच्छिन्न-

**अत एवोक्तं पार्थसारथिमिश्रैराधाराग्निहोत्राधिकरणे 'फलतो गुणविधिरयं न प्रतीतितः' इति ।**

**यद्वा एतद्वार्तिकमधिकारविध्यभिप्रायम् । उद्भिदा यजेतस्या-**

---

प्रवृत्त्यतिरिक्तविषयत्वासम्भवेन गुणविधिस्थलेऽपि धात्वर्थविधानमेव वक्तव्यमित्याशङ्क्य पार्थसारथिमिश्रैरुक्तम् 'यद्यपि न क्रियां विहाय द्रव्ये विधिः प्रतीयते । तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वादप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते न प्रतीतित' इति । एवं चानुवादस्थलेऽपि विशेषण एव विधितात्पर्यसत्त्वेऽपि विशिष्टविधानमेवाङ्गीकर्तव्यमित्यत्राह **अत एवेति** । अयं भावः । धात्वर्थेऽपि विधिरिति न ग्रन्थतात्पर्यम् । अपि तु प्रमाणान्तरप्राप्तस्यापूर्वसाधनत्वेनावगतस्य यागस्य प्राप्तायामेव भावनायामुद्देश्यत्वेनान्वयः । गुणस्य च करणत्वेन । एवं गुणविशिष्टा भावनैव प्राप्ताऽपि पुनर्विधीयते । केवले गुणे विधिना कर्तव्यत्वबोधासंभवात् । एवं विशिष्टाया विधानेऽपि विशेष्यांशस्य वस्तुतः प्राप्तत्वेन गुणांश एव विधिशक्तिस्संक्रामतीति फलतो गुणविधिः । प्रतीयमानन्तु विशिष्टभावनायामेव विधिविषयत्वमित्यत्र तात्पर्यम् । न च तेषां गुणविधावपि विशिष्टविधानमेव संमतमिति वक्तुं शक्यम् । उद्भिदधिकरणे तदुक्तिविरोधादिति । अत्रत्यप्रतीतिपदं न पूर्वोक्तप्रतीतिसमानार्थकम् । पूर्वपक्षिण इहाग्निहोत्रं जुहोतीति वाक्यपरामर्शस्य वक्तुमशक्यत्वादिति । उक्तव्याख्यानस्य क्लिष्टत्वादन्यथा श्लोकाभिप्रायमाह **यद्वेति** । **अधिकारविध्यभिप्रायम्** । यत्र धात्वर्थस्य फलसंबन्धो बोध्यते, तद्विधिविषयकमित्यर्थः । यद्यपि समे दर्शपूर्णमासाभ्यां यजेतेत्यादिप्रयोगविधिष्वपि अनूद्यमानस्यापि धात्वर्थस्यैव करणत्वेनान्वयात्तदभिप्रायकत्वमपि वक्तुं शक्यम् । अथाप्युद्भिदा यजेत पशुकाम इति तत्रोपात्तविषयवाक्यस्याधिकारविधिरूपत्वात्तदभिप्रायकत्वोक्तिः । नन्वग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादौ तृतीयान्तपदाश्रवणात् कथमधिकारविध्यभिप्रायकत्वमित्यत्राह **उद्भिदेति** । अथ वा प्रकृतानुगुण्यमिदानीमिति सूचयति **उद्भि-**

दीनामधिकारात् । तत्र हि यागो विधीयताम्, उत्पत्तिवाक्यसिद्धो वाऽनूद्यताम्, उभयथाऽपि धात्वर्थस्य करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम् । अन्यथाऽन्वयानुपपत्तेरिति । तस्मात् गुण-

देति । आदिना विश्वजिता यजेतेत्यादिपरिग्रहः । अधिकारात् अधिकारविधित्वात् अथवा प्रकृतत्वादित्यर्थः । तदभिप्रायकत्वमुपपादयति तत्र हीति । करणत्वेनान्वयादिति । स्वरूपतः प्राप्तस्यापि फलसाधनत्वेन विधिसंभवात्फलस्य विधेयत्वाच्चानूद्यमानेनापि धात्वर्थेन करणेन भाव्यमिति भावः । अन्यथान्वयानुपपत्तिरिति । इदमत्र विवक्षितम् । उद्भिदा यजेत पशुकाम इत्यादौ किं फले गुणविधानं, कर्मणि वा, गुणविशिष्टं वा कर्म फले विधीयत इति विकल्प्य सर्वत्र दोषमुद्भाव्योद्भिच्छब्दस्य गुणपरत्वे मत्वर्थलक्षणाप्रसञ्जकं 'इतरथे'त्यादिभाष्यं विशिष्टविधिपरं मनसि निधाय 'तद्दर्शयति'इत्यवतार्यानन्तरं किञ्चेत्यारभ्यायं श्लोक उपात्तः । तस्यायं भावः । किमुद्भिदेत्यादौ प्रमाणान्तरप्राप्तस्य यागस्यानुवाद इत्युच्यते, विधानमिति वा । सर्वथा यागस्यैव करणत्वमेष्टव्यम् । तस्य पदश्रुत्योपस्थापितत्वात् फलसाधनत्वेन विधिसम्भवाच्च । एवमवसिते करणत्वे उद्भिदादिपदानां गुणपरत्वेऽन्वयासम्भवाद्यजि सामानाधिकरण्यमेव तेषां वक्तव्यमिति सिद्ध्यति तृतीयान्तानां यागपरत्वम् । तत्र च गुणपरत्वे मत्वर्थलक्षणापत्तेर्नामधेयत्वेन तद्वाचित्वं युक्तम् । एवं नामधेयत्वे सिद्धे संज्ञाभेदात् कर्मभेदसिद्ध्याऽनुवादत्वं न स्यादिति चेन्मास्तु तत् । दध्नेन्द्रियकामस्य जुहुयादित्यादौ तु रूढानां दध्यादिपदानां नामधेयत्वासम्भवेन मत्वर्थलक्षणाया एव वाच्यतया तदभावाय प्रथमतः प्रतीतः करणत्वेनान्वयो न स्वीकृत इति । अत एव इहैव केवलं विशिष्टविधिपक्षे मत्वर्थलक्षणादोषो वार्तिक उद्भावितः । अत एव चित्राधिकरणेऽपि 'करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतकरणत्वार्थाक्षिप्तसाध्यांशानुवादेन गुणे विधीयमाने न मत्वर्थलक्षणे'त्युक्तमिति । एवं पार्श्वस्थचोद्यसमाधिं निगमयति तस्मादिति ।

विधौ विनाऽपि लक्षणामन्वयोपपत्तेर्न मत्वर्थलक्षणेति । अतश्च सोमेन यजेतेत्यत्र न विशिष्टविधानम्, किं तु गुणमात्रविधानम्, यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यास्मिन् वाक्ये विधीयत इत्येव युक्तम् । अन्यथा मत्वर्थलक्षणापत्तेरिति ।

अत्रोच्यते । यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा, तथापि यागस्याप्राप्तत्वात् सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं सम्भवति । न च 'ज्योतिष्टोमेने'त्यादिना यागस्य प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम् । तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । तेन च विहितस्य कर्मणः फलविशेषसम्बन्धमा-

---

पूर्वपक्षमुपसंहरति अतश्चेति ।

एवं सोमेन यजेतेति वाक्ये विशिष्टविधानं नास्तीति पूर्वपक्षे प्राप्ते सिद्धान्तमाह अत्रोच्यत इत्यादिना । पूर्वपक्षिणा पार्श्वस्थं प्रत्युक्तं गुणविधौ मत्वर्थलक्षणाऽभावं सिद्धान्त्यभिमतं दर्शयति यद्यपीति । अतो वैयधिकरण्यपक्षोक्तप्रकार एवानुसर्तव्य इत्याशयेनाह तथापीति । ज्योतिष्टोमेनेत्यादिना ; ज्योतिष्टोमेनेति पदमादौ यत्र तेन ज्योतिष्टोमेन यजेत स्वर्गकाम इति वाक्येन । स्वरूपतः कर्मणि प्रतिपन्ने पश्चादेव तद्गतविशेषाकांक्षायां तस्य फलविशेषसाधनत्वादिकं बोधयितुं युक्तम् । अतस्तद्भेद एवोचित इत्याशयेनाह तस्येति । तदेव विशदयितुं तयोर्भेदमाह कर्मेति । कर्मस्वरूपमात्रबोधकः स्वरूपनिरूपकधर्मपुरस्कारेण कर्मविषयकबोधजनकः । मात्रपदेन फलसम्बन्धादिव्यवच्छेदः । तेन विहितस्य हीत्यनेन स्वरूपज्ञानाभावे विशेषाकांक्षा न भवतीति सूचितम् । एवं चैकस्य विधेर्विलम्बितज्ञानद्वयजनकत्वस्यायुक्तत्वाद्विधिभेद आवश्यक इति भावः । सामान्यतः फलसम्बन्धस्य विध्यन्यथाऽनुपपत्त्योत्पत्तिवाक्यादेवाक्षिप्ततया विशेषपदम् । मात्रपदेन विहिते पुनर्विधिव्यापारासम्भवेन स्वरूपस्य न विधिरिति विवक्षितम् । उक्तं विधिभेदं क्वचित्प्रद-

त्वमधिकारविधिना क्रियते। फलविशेषसम्बन्धबोधकस्याधिकारविधित्वात् । यथा यदाग्नेयोऽष्टाकपालो भवतीत्येतद्विहितस्य कर्मणः फलविशेषसम्बन्धमात्रं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्त इति तस्याधिकारविधित्वं, नोत्पत्तिविधित्वम् ।

स्यादेतत् । दर्शपूर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं सम्भवति। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः । न हि तदा तेन कर्म विधीयते। तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात् । नापि गुणविधानं सम्भवति। प्राप्ते कर्मणि अनेकगुणवि-

---

श्यं स्थिरयति यथेति । यदित्यादि । यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवतीत्येतद्वाक्यविहितस्येत्यर्थः । यच्छब्दसत्त्वेऽपि विवक्षितस्य वाक्यान्तरेणानवगतत्वात् भवतेरेव सत्त्वेन कर्मवाचकपदाभावेऽप्यग्नेर्देवताया अष्टाकपालसंस्कृतपुरोडाशरूपद्रव्यस्य च तद्धितोपात्तत्वेन विना त्यागं तयोः सम्बन्धासम्भवादन्यथाऽनुपपत्त्या कल्पितस्य यागस्य भवतिना लक्षणात् तस्य च लेडन्तत्वादग्न्यष्टाकपालादिविशिष्टो याग इह विहित इति भावः । दर्शपूर्णमासाभ्यामिति वाक्यान्तरतोऽमावास्यायां विहितयोरैन्द्रदधिपयोयागयोस्तथा पौर्णमास्यां विहितयोरुपांशुयाजाग्नीषोमीययोः प्रकृतेनाग्नेयेन समुच्चयात् निष्पन्नस्य त्रिकस्य त्रिकस्य क्रमेण दर्शपदेन पूर्णमासपदेन च ग्रहणात् तद्घटकस्याग्नेयस्यापि फलविशेषसम्बन्धो विधीयत इति भावः । नोत्पत्तिविधित्वमिति । तथा च तद्वदिहापि उत्पत्त्यधिकारविधिभेदो युक्त इति भावः । दृष्टान्तवैषम्यं शङ्कते स्यादिति । गुणविधानं द्रव्यदेवतादिगुणविधानम् । एवं विहितविधानासम्भवेन कर्मविधाने वाक्यभेदभिया गुणविधानस्याप्यसम्भवेन कस्याप्यविधानात् वाक्यानर्थक्यं स्यात् । अतोऽगत्या विशिष्टकर्मोत्पत्तिविधानमङ्गीकर्तव्यम् । एवं च दर्शपूर्णमासाभ्यामित्यस्याप्युत्पत्तिविधित्वे पूर्वेषां कर्मणां फलसम्ब-

धाने वाक्यभेदापत्तेः । अतः आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम् । ज्योतिष्टोमेनेत्यस्य तु अधिकारविधेरुद्भिदा यजेत पशुकाम इत्यादिवदुत्पत्तिविधित्वेऽपि स्वीक्रियमाणे न कस्यचिदानर्थक्यम् । सोमेन यजेतेत्यस्य गुणविधित्वाद्यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेत्–मैवम् । यद्यपि सोमेन यजेतेत्यत्र न वाक्य-

---

धो न स्यादिति , गौरवाच्च तत्र केवलमाधिकारविधित्वं युक्तमित्याह अत इति । अधिकारविधित्वम् फलविशेषसम्बन्धमात्रबोधकत्वम् । ननूक्तं स्वरूपज्ञानानन्तरमेव फलसम्बन्धज्ञानमिति एतच्छङ्कापरिहाराय उद्भिदा यजेतेति दृष्टान्तः । या गतिस्तत्र सैवेहेति भावः । उत्पत्तिविधित्वे उत्पत्तिविधित्वेऽपि । न कस्यचिदानर्थक्यमिति । न हि किञ्चिदपि द्रव्यदेवताविषयकं वचनमस्ति , यस्यानर्थक्यं प्रसज्येत । यत्तु ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिद्रव्यदेवताविशिष्टं वचनम् , तत्रापि न तदन्यथाऽनुपपत्त्या यागो विधातव्यः । ग्रहणस्यैव सोमरसविषयकस्य विधिसम्भवादिति पशुसोमाधिकरणे स्थितम् । न च गुणशून्यं यागमात्रपरमग्निहोत्रं जुहोतीतिवद्वाक्यमस्ति ; यस्य वा वैयर्थ्यमापाद्येत । न च सोमेन यजेतेत्यस्यैव फलकल्पनेन विश्वजिद्वाक्यस्येवाधिकारविधित्वं युक्तम् । ज्योतिष्टोमेनेत्यस्यानर्थक्यप्रसङ्गादिति भावः । सोममात्रविधानात् मात्रपदेन गुणान्तरव्यवच्छेदः । 'न कस्यचिदानर्थक्य'मिति यदुक्तं तन्न । ज्योतिष्टोमेनेत्यत्रैव वाक्यभेदप्रसङ्गेन तत्परिहाराय कस्याप्यविधाने आनर्थक्यापत्तेरित्यभिप्रायेणाह यद्यपीति । फलस्य विधेयत्वाभावेन तत्साधनत्वेन यागस्यैवाधिकारविधिविधेयतया फलस्य च भावनायामुद्देश्यत्वेनैवान्वयात् प्रकृतेऽधिकारोत्पत्त्युभयविधित्वस्वीकारेऽपि विधिविधेयताया एकपदोपस्थाप्यार्थनिष्ठताया अव्याहतत्वेन विभिन्नपदोपस्थाप्यार्थनिष्ठविधेयतानेकत्वनिबन्धनवाक्यभेदाभावेऽपि वस्तुतो ज्योतिष्टोमेन यजेत

भेदः, तथापि ज्योतिष्टोमेनेत्यस्मिन् वाक्ये कर्मस्वरूपे तस्य च फलसम्बन्धे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव । सोमेन यजेतेत्येतद्वाक्यविहितकर्मणः फलसम्बन्धमात्रविधाने तदभावात् । उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम् ।

न च सोमेन यजेतेत्यत्रापि कर्मणः स्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम् । श्रूयमाणेन विधिना गुणस्याविधेयत्वात् विशेषणविधेरार्थिकत्वात । सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः । ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्म-

---

ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति वाक्यद्वयेनापि विवक्षणीयार्थविधानेनास्य वाक्यस्य वाक्यद्वयकार्यकारित्वस्याक्षतत्वाद्वाक्यभेदोऽस्त्येव । विधिशक्तेरज्ञातज्ञापनस्य यजौ फलपदे च प्रसरात् । ईदृशवैलक्षण्यसूचनाय गौरवलक्षण इति । सोमवाक्यस्योत्पत्तिविधित्वाङ्गीकारे नैष दोष इत्याह सोमेनेति । फलसम्बन्धमात्रविधाने कर्मस्वरूपाविधाने । लाघवात् वाक्यद्वयकार्यकारित्वाभावात् । स नास्तीति शेषः । वचनान्तराभावेन उत्पत्तिविधायकवाक्यान्तराभावेन । अगत्या एककार्यकारित्वरूपलाघवसम्पादकोपायाभावेन । तदाश्रयणम् । वाक्यभेदाभ्युपगमः । ननु सोमेन यजेतेत्यत्रापि सोमयागोभयविधाने वाक्यभेदः । तत्र चेत् परिहारः स इहापीति शङ्कां निरस्यति न चेति । तर्हि कथं सोमस्य यागार्थत्वमवसीयते तत्राह विशेषणेति । सोमविशिष्टयागे पूर्वं विहिते विशेषणस्य सोमस्य यो यागमुद्दिश्य विधिस्तस्य, विशेषणाननुष्ठाने विशिष्टानुष्ठानस्याकृतत्वप्रसङ्गेनान्यथाऽनुपपत्त्या कल्पनीयत्वादित्यर्थः । तथा च तेन सोमो यागार्थ इत्यवसीयत इति भावः । तदिदं सर्वविशिष्टविधिसाधारणम्; न त्विह परं कल्प्यत इत्याह सर्वत्रेति । ननु ममापीह फलविशिष्टयागविधिरेव स्यात् । विनिगमनाविरहादेव चास्योत्पत्तिविधित्वमित्यत्राह ज्योतिरिति । फलविशिष्ट-

स्वरूपं फलसंबन्धश्चेति उभयं श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरवलक्षणो वाक्यभेदः । यदाहुः—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुद्ध्यते ॥ इति ।

---

यागविधिरिति न शक्यं वक्तुम् । फलस्य यागाङ्गत्वाभावात् । उद्देश्याकांक्षापूरणाय फलस्योद्देश्यत्वेनाप्यन्वयस्यावश्यकत्वाच्च । यागविशिष्टफलविधिस्तु फलस्य विधेयत्वाभावान्नोपगन्तुं शक्यः । यागस्य करणत्वेनान्वये सोमस्यापि तत्त्वेनान्वयो न सम्भवतीतिवदिहान्वयानुपपत्तिरपि नास्ति । फलस्योद्देश्यत्वेन यागस्य च करणत्वेनान्वयात् । एवं चेह मत्वर्थलक्षणाया वक्तुमशक्यत्वाद्यथा यागः स्वरूपतो विधीयते तथा फलसाधनत्वेनापि श्रूयमाणेनैव वाक्येन विधीयत इत्यङ्गीकर्तव्यम् । न हि फलस्य यागस्य चोद्देश्यत्वेन विधेयत्वेन चान्वयेऽपि यागस्वरूप एव विधेस्तात्पर्यम् । फलसम्बन्धस्त्वार्थिकविधिविधेय इति विनिगन्तुं शक्यम् । स्वरूपफलसम्बन्धयोर्विनैव विशेष्यविशेषणभावमन्वये सति स्वरूपांश एव विधेस्तात्पर्यं नान्यत्रेत्युक्तेरयोगात् । विध्यन्वयित्वमेव हि विधितात्पर्यसत्त्वे गमकम् । अन्यथा यदाग्नेयोऽष्टाकपाल इत्यादावपि यागानुवादेन द्रव्यदेवताविधानेऽपि द्रव्यांश एव विधेस्तात्पर्यम् ; देवतांशस्त्वार्थिकविधिगम्य इति वक्तुं शक्यत्वात् । अतो विशिष्टस्य विध्यन्वये विशेष्यमात्रविधानम् । विशेष्यांशस्य प्राप्तत्वे तु विधेस्तत्र निवेशासम्भवाद्विशेषणेऽवतारः , शिखी ध्वस्त इत्यादिलौकिकवाक्य इव । उभयोर्विध्यन्वये चोभयस्यापि विधानमित्येव वक्तव्यम् । एवं च फलसम्बन्धस्वरूपोभयविधाने वाक्यभेदस्य न कथञ्चिदपि परिहार इत्यभिप्रायः । तादिदमभिप्रेत्योक्तं दृढ इति । वाक्यभेदाङ्गीकारापेक्षयाऽऽर्थिकविधिकल्पनस्यैव ज्यायस्त्वमित्यत्र पौर्णमास्यधिकरणवार्तिकं प्रमाणयितुमाह यदिति । श्रौतेति । इदं तावन्महद्गौ-

न च सोमेन यजेत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम् । तस्याः स्वीक्रियमाणत्वात् । लक्षणातो वाक्यभेदस्य जघन्यत्वात् । लक्षणा हि पददोषः वाक्यभेदस्तु वाक्यदोषः । पदवाक्यदोषयोर्मध्ये पद एव दोषकल्पनाया उचितत्वात् । 'गुणे त्वन्याय्यकल्पना' इति न्यायात् ।

अत एव 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात्पदद्वयेनावस्थाविशेषो लक्ष्यत इत्युक्तम् । तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव

---

रवम्— यदेकमेव विधातुं व्याप्रियमाणस्य विधेस्तत आकृष्य यावन्तोऽर्थाः स्थितास्तावत्स्वपि व्यापारकल्पनं नाम । इतस्तु वरं विशिष्टविधानेन कृतकृत्यो विधिः पश्चाद्विशेषणाकरणे विशिष्टस्य कृतत्वाभावेन विशेषणेऽपि कर्तव्यत्वावगमाय विध्यन्तरमाविर्भावयतीति । अतः स्वयमेकस्यैव विधाने व्याप्रियत इत्यर्थः । अतश्च प्रकृते विधेर्यागस्वरूपे फलसम्बन्धे च व्यापारकल्पनात् सोमवाक्ये विशिष्टविध्यङ्गीकरणेन विशेषणाविधिकल्पनमेव ज्याय इति । यदुक्तं श्रौतव्यापारनानात्वेऽतिगौरवम् ; अन्यथा तु नेति, तत्रैकं हेतुं मुखान्तरेण दर्शयति नचेति । जघन्यत्वात् उपादेयतायां पश्चात्तनत्वात् । ततोऽस्य दोषस्य प्रबलत्वादिति यावत् । यत एवं तदाह लक्षणेति । लक्ष्यमाणो ह्यर्थो न वाक्यार्थः अपि तु पदार्थः । अतः पददोष एवायम् । वाक्यभेद इति । श्रौतव्यापारनानात्वे हि बहुवाक्यकृत्यमेकत्र कर्तुमिष्यत इति वाक्यदोष एवेति भावः । वाक्यदोषत्वे जघन्यत्वं कुत इत्यत्राह पदेति । गुणे त्विति । पदसमुदायात्मकवाक्यैकदेशत्वेन पदस्य गुणत्वम् । अत एव लक्षणातो वाक्यभेदस्य जघन्यत्वादेव । आधानानुवादेनेति । वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति तस्य प्राप्तत्वादिति भावः । अवस्थाविशेषः वयोऽवस्थाविशेषः । यदा जातपुत्रता कृष्णकेशता च पुंसः

स्वीकार्या । तस्मात्सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययं, गौरवलक्षणवाक्यभेदापत्तेः ।

किं च सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानम्, गुणविधाने तु वाक्यार्थविधानम् । तच्च श्रुत्यर्थविधानसम्भवेऽयुक्तम् । यथाहुः—

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे । इति ।

वाक्यार्थः पदान्तरार्थ इत्यर्थः । ज्योतिष्टोमेनेत्यत्रापि फलो-

---

सम्भाव्यते । युवैव धर्ममन्विच्छेदिति वचनात् । नन्विह न वाक्यभेदः । यागस्य करणत्वेन फलस्य चोद्देश्यत्वेन भावनान्वये विशिष्टायास्तस्या एकस्या एव विधीयमानत्वात् । यागस्वरूपफलसाध्यसाधनभावबोधश्च पश्चादेव यागनिष्ठकरणतायाः फलनिष्ठोद्देश्यतायाश्च निरूपकापेक्षायां अरुणादिवाक्ये क्रयसोमयोरिव भविष्यति । अतो विधेर्भावनायामेकस्यामेव व्याप्रियमाणत्वात्सोमवाक्ये च लक्षणाभावाज्ज्योतिष्टोमवाक्यस्यैवोत्पत्तिविधित्वमित्यतो दोषान्तरमाह किञ्चेति । श्रुत्यर्थविधानम् एकपदश्रुत्यर्थविधानम् । अन्याय्य इति । सन्निहितत्वेन विधेस्तत्रैव व्यापृतत्वात् । एतदसम्भव एवान्यत्र गन्तव्यमिति । पदान्तरार्थ इति । येन पदेन समुदितमाख्यातपदं पदसमुदायात्मकं वाक्यं भवति, तत्पदमिह वाक्यशब्देन विवक्षितमिति भावः । ननु पूर्वं सर्वत्राख्यातसम्बद्ध इति विधिशक्तेर्वाक्यार्थ एव संक्रम उक्तः । तत्कथमुच्यते श्रुत्यर्थ एव विधातव्य इति । न । यत्र हि श्रुत्यर्थविधानं न सम्भवति तद्विषयत्वात्तस्य । तच्च स्थलं दध्ना जुहोतीत्यादीति स्पष्टीभविष्यति । नन्विह तदर्थमुत्पत्तिविधित्वाङ्गीकारे ज्योतिष्टोमवाक्ये ज्योतिष्टोमशब्दार्थविधानाद्वाक्यार्थविधानं प्रसजति । नेत्याह ज्योतिरिति । ज्योतिष्टोमो यागान्नार्थान्तरमिति नातिरिक्तं विधीयते । फलं तु न विधातुं शक्यम् । अतः प्राप्तोऽपि याग एव विधेयः स च श्रुत्यर्थ एवेति । ननु यागविधानेऽपि ज्योतिष्टोमशब्दार्थस्यापि करण-

द्देशेन यागस्यैव विधानान्न वाक्यार्थविधानं, तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च । तस्मात् ज्योतिष्टोमेनेत्ययमधिकारविधिरेव ।

अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्यो यत्र कर्मणो रूपमुप-

---

त्वेनान्वयाद्वाक्यार्थविधानमस्त्येव तत्राह तदिति । उत्पत्तिविधित्वेऽपि तस्य तथाऽन्वयादीदृशवाक्यार्थविधानमविशिष्टम् । यदि नामधेयार्थस्य करणत्वेनान्वयेऽपि विशेषणांशस्य प्राप्तत्वाद्विधिसंक्रमो धात्वर्थमात्र एवेत्युच्यते ; तन्ममापि तुल्यमिति भावः ।

ननु यत्र वाक्यार्थस्य श्रुत्यर्थस्य वा विधानं सम्भवति , तत्र कतरस्याङ्गीकारो युक्त इति परामर्शे इदं युक्तं 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे' इति । यथा ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नित्यत्र । तत्र हि किं दध्नेन्द्रियकामस्य जुहुयादित्यत्रेवैन्द्रवायवाग्रत्वरूपगुणफलसम्बन्धो युक्तः उत ग्रहणरूपश्रुत्यर्थफलसम्बन्ध इति शङ्कायां प्रथमपक्षग्रहणे 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् , यदि बृहत्सामा शुक्राग्रा'नित्यनेन रथन्तरसामत्वपक्ष एवैन्द्रवायवाग्रत्वस्य बृहत्सामपक्षे च शुक्राग्रत्वस्य सिद्धतया फलार्थस्यैन्द्रवायवाग्रत्वस्य बृहत्सामत्वपक्षेऽपि प्राप्त्यापत्तिरिति दोषो भवति । द्वितीयपक्षपरिग्रहे च बृहत्सामत्वपक्षेऽपि ग्रहणस्य फलार्थमनुष्ठाने शुक्राग्रत्वस्यैव प्राप्त्या 'ऐन्द्रवायवाग्रा'नित्यस्य पाक्षिकानुवादत्वापत्तिर्दोष इति स्थिते वाक्यार्थविधानात् श्रुत्यर्थविधानस्य युक्ततया पाक्षिकानुवाद एव सोढव्य इति ग्रहणस्यैव फलार्थत्वम् । यद्येवमादिस्थलविषयकत्वमन्तरेण सर्वत्रैवायं न्यायः प्रवर्तनीयः ; तर्हि दध्नेन्द्रियकामस्य जुहुयादित्यत्रापि मत्वर्थलक्षणाङ्गीकारेण दधिविशिष्टहोमविधानं स्यात् । इति शङ्कायां ज्योतिष्टोमवाक्ये तद्विधाने क्लेशं दर्शयन्सोमवाक्य एवोत्पत्तिविधित्वमित्याह अपि चे-

लभ्यते । यागस्य च द्वे रूपे, द्रव्यं देवता चेति । सोमेन यजेतेत्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वात्, अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यं, न तु देवताराहित्यमात्रं,

---

ति । किं तद्रूपमित्याह यागस्येति । यद्यपि होमेऽपीमे रूपे स्तः, अथापि तत्रापि यागांशस्यैवेति न दोषः । देवता चेति । तथा च देवतोद्देश्यकद्रव्यत्यागरूपस्य यागस्य द्रव्यदेवताऽभावे स्वरूपमेव न निष्पद्यत इति तयो रूपत्वम् । केवलयज्यादिश्रवणे तस्य यागसामान्यविषयकत्वेन तत्र विधेयत्वनिश्चयासंभवात् रूपवत्त्वे च यागान्तरवैलक्षण्यदर्शनेनापूर्वत्वनिश्चयात् यज्याद्यर्थविधेयताज्ञानं प्रति रूपज्ञानस्य कारणत्वमिति रूपवति वाक्ये कर्मविधानमिति भावः । यदि द्रव्यं देवता चेति द्वे रूपे; तर्हि प्रकृते तदनुपलम्भान्न शक्यो यागो विधातुम् । अथानुपलम्भेऽपि विधिः, स ज्योतिष्टोमवाक्येऽपि तुल्य इत्यभिप्रायमाक्षेपं दर्शयति सोमेनेति । ननु यथा देवतानुपलम्भेऽपीह विधित्वं मेने । तथा द्रव्यानुपलम्भेऽपि देवतावाक्य इति द्विर्यागो विधातुमिष्टस्स्यादिति शङ्कायां नात्र देवताविधायकवाक्यान्तरसत्त्वाद्देवतानुपलम्भ उच्यते, अपित्वन्यस्मादेव हेतोरित्याह सोमेति । किमिदमव्यक्तत्वं तदाह अव्यक्तत्वं चेति । यस्य हि तद्धितेन चतुर्थ्या मन्त्रवर्णेन वा देवताख्यं रूपमुपदिश्यते । तद्व्यक्तम् । अन्यदव्यक्तम् । तदाह स्वेति । नन्विह स्वपदेन लक्ष्यो यागो ग्रहीतव्यः । तच्च न संभवति । यदि स्वार्थं चोदिता देवता प्रसिद्धा । न तर्हि तद्राहित्यं संभवति । अथाप्रसिद्धा, तद्राहित्यमप्यप्रसिद्धमिति लक्षणासंभव इति । सत्यम् । स्वार्थचोदितदेवताकं यद्यत् तत्त्वराहित्यमित्यत्र तात्पर्यान्न दोषः स्वपदेन दर्शपूर्णमासादि ग्राह्यम् । तत्र देवताया अङ्गत्वेन विहितत्वात् । स्वार्थचोदितत्वाभाववद्देवतावत्त्वमिति तु निष्कर्षः । देवतायां स्वार्थचोदितत्वनिवेशस्य प्रयोजनमाह न त्विति । देवताराहित्यमात्रम् देव-

ऐन्द्रवायवं गृह्णातीत्यादिवाक्यविहितग्रहदेवतानां सत्त्वात्, ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात्, तथापि

---

ताराहित्यपदमात्रप्रतिपाद्यम् । यथाश्रुतलक्षणानुरोधात्किञ्चिद्विशेषणाविशिष्टया देवतया राहित्यमिति यावत् । यद्यपि यागस्य देवतोद्देशघटितस्य देवताराहित्यासंभवादेव नेदं लक्षणमिति वक्तुं शक्यम् ; अथापि देवताचोदनाभावे यागत्वं हीयेतेति शङ्काशमनार्थं स्वार्थचोदितपदेनापेक्षितसिद्धिदर्शनार्थं च प्रकारान्तरेण हेतुमाह ऐन्द्रवायवमिति । आदिना मैत्रावरुणं गृह्णातीत्यादिपरिग्रहः । वाक्याविहितग्रहदेवतानाम् । वाक्यविहितानां ग्रहणार्थदेवतानाम् । ननु तत्र देवताद्रव्यविशिष्टग्रहणविधानेन ग्रहणस्यैव देवतावत्त्वम् , न यागस्येत्यत्राह ग्रहणेति । ग्रहणार्थाभिः ग्रहणाङ्गभूताभिः । प्रसङ्गत इति । नन्वन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानं प्रसङ्गः । अत्र त्वेकस्या अपि देवताया ग्रहणकाले तत्र स्वोच्चारणकालिकत्वसम्पादनायोच्चारणक्रियावेशेन यथाऽनुष्ठानं , तथा यागेऽपि तत्संम्पादनाय पुनरप्युच्चारणद्वाराऽनुष्ठानमिति कथमननुष्ठानम् । उच्यते प्रसङ्गत इत्यस्याङ्गभावमन्तरेणेत्यर्थ इति न दोषः । न च यागादन्यत्र देवताया असम्भवेन ग्रहणार्थत्वेनावगताया अपि देवताया यागापेक्षासत्त्वाद्यागस्य च देवतामन्तरेणासम्भवतस्तदपेक्षासत्त्वादाकांक्षानुरोधेन परस्पराङ्गाङ्गिभावः कल्पनीय इति नेदं लक्षणं युक्तमिति वाच्यम् । दध्नेन्द्रियकामस्य जुहुयादित्यत्र दध्नः क्रियापेक्षत्वेऽपि यथेन्द्रियार्थत्वेनावगतत्वान्न सन्निधिप्रमाणावगम्यहोमाङ्गत्वमपि कल्प्यते । किं तु तदुपकारकत्वमात्रम् । तद्वदिहापि ग्रहणार्थत्वेनावगताया देवताया अपेक्षानुरोधेन यागोपकारकत्वमात्रं कल्प्यत इति नास्या यागाङ्गत्वेन चोदितत्वम् । नन्वेवमुद्भिदादिषु ज्योतिष्टोमविकृतिषु देवताया अतिदेशो न स्यात् । अनङ्गत्वात् । न ।

द्रव्यमुपलभ्यत एव । तेनापि यागस्वरूपं ज्ञातुं शक्यमेव । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र न द्रव्यं देवता वा श्रूयते । अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं यागसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यात्

---

उद्भिदाद्यर्थत्वेनातिदेशाभावेऽपि ग्रहणस्य तदङ्गत्वेन तदतिदेशे तदर्थाया देवताया अप्यतिदेशेन तत्रापि प्रसङ्गादेवोपकारलाभसंभवेनाक्षतेः । अत इयदेव लक्षणमिति । समाधत्ते तथापीति । शक्यमेवेति । विधेयताज्ञानाय यागविशेषज्ञानमेव हि रूपसम्पाद्यम् । तत्र यावता यागविशेषो निर्धारयितुं शक्यस्तावदेवापेक्षितं एकं वा द्वे अपि वा । प्रकृतद्रव्यन्तु न कस्यचिद्यागस्याङ्गमिति तावतैव यागविशेषनिर्धारणं सुशकमिति भावः । ज्योतिष्टोमवाक्ये तद्ज्ञानं दुश्शकमित्याह ज्योतिरिति । चस्त्वर्थे । यागविशेषज्ञानमिति । स्यादित्यनेन संबन्धः । इत्यादीति । वाच्यसमापकपदग्रहणायादिपदम् । तथा च यागसामान्यस्याविधेयत्वाद्विशेषस्यैव विधेयत्वाद्विजातीययाग एव प्रकृतधातुना विवक्षितुं युक्त इति विशिष्टं वाक्यम् । क्लेशेनेति । विधिस्तावच्छ्रूयमाणो विधेयमाकांक्षति । सन्निहितश्च धात्वर्थः । तत्र यदि प्रमाणान्तरप्राप्तं यजिरभिदध्यात्, न तत् यागसामान्यं विधिर्विदध्यात् । अतोऽप्राप्त एव यागो विधानयोग्य इह विवक्षणीय इति विमर्शात् क्लेशः । ननु द्रव्यदेवतानुपलम्भेऽपि नामधेयवशाद्यागविशेषज्ञानं भविष्यति । उच्यते— यदि यागविशेषज्ञानं प्राङ्न स्यात्, कस्येदं नामधेयमित्यवगम्येत । किञ्च यद्यपि नामधेयाद्वैलक्षण्यमवगम्यते ; अथापि किं सन्निहितवाक्यान्तरविहितानामेव कर्मणां 'वैश्वदेवेन यजेत' राजा राजसूयेन स्वराज्यकामो यजेतेत्यादाविव ज्योतिष्टोमनामधेयं परिच्छेदकमिति शङ्कासम्भवेन न नामधेयस्य निर्धारकत्वम् । इतस्त्वित्थमालोचनीयम् । यदि ज्योतिष्टोमवाक्यं प्रमाणान्तरप्राप्तयागसमुदायानु-

अतो नायं कर्मोत्पत्तिविधिः ।

नन्वेवमपि अग्निहोत्रं जुहोतीत्ययमपि होमोत्पत्तिविधिर्न स्यात्, रूपाश्रवणात् । तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात् । तथा चाघाराग्निहोत्राधिकरणविरोधः । तत्र हि अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोतीत्यादीनां च गुणविधित्वमुक्तमिति चेत्— सत्यम् । अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यते, अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात्, तदेतदग्रे वक्ष्यामः

---

वादकं स्यात् ; तर्हि तेषामुत्पत्तिशिष्टद्रव्यावरोधेन सोमेन यजेतेत्यनेन तदुद्देशेन सोमो विधातुं न शक्यत इति तत्र विशिष्टविधानं भवेत् । यदि त्वपूर्वस्यैव यागस्य विधिः, तर्हि तत्र सोममात्रविधानाल्लाघवमिति । एवं च सोमेन यजेतेति वाक्येनैव यागविशेषविज्ञानमिति तत्रैव तद्विधिर्ज्यायानिति । अतो ज्योतिष्टोमवाक्यस्य नोत्पत्तिविधित्वमित्याह अत इति ।

एवं रूपवति वाक्य एव कर्मोत्पत्तिविधानमित्युक्ते आघाराग्निहोत्राधिकरणविरोध इति शङ्कते नन्विति । एवं रूपवत एव वाक्यस्योत्पत्तिविधित्वे । ननु तत्र रूपवद्वाक्याभावादुद्भिदा यजेतेत्यत्रेव नीरूपवाक्ये कर्मविधानस्वीकारः । नैवम् । रूपवद्वाक्यसद्भावात् । तदाह तच्छ्रवणाच्चेति । आघाराग्निहोत्राधिकरणाविरोधः आघारमाघारयति अग्निहोत्रं जुहोतीति वाक्यद्वयेऽपि कर्मविधित्वं सिद्धान्तयताऽधिकरणेन विरोधः । ननु दध्ना जुहोतीत्यस्य कदाचिद्विप्रकर्षः स्यात् । अतस्तत्रोत्पत्तिविधानमिति शङ्कापरिहारायोपपादयति तत्र हीति । यदुक्तं तस्मिन्नधिकरणे रूपवद्वाक्यसत्त्वेऽपि रूपरहिते कर्मविधानमङ्गीकृतमिति तत्तथैव । प्रकृते तु न स न्यायः सञ्चारयितुं शक्य इत्याशयेनाह सत्यमिति । नन्वग्नये होत्रं होमोऽस्मिन्निति व्युत्पत्त्याऽग्निदेवतात्मकरूपलाभसंभवात्कथमिह रूपानुपलम्भमङ्गीकृत्य वाद इति पृच्छन्तं प्रत्याह अग्निहोत्रेति । तत्प्रख्यन्यायेन तत्प्रख्यं चान्यशास्त्रमिति न्यायेन । युक्त-

तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते, अन्यथाऽऽनर्थक्यापत्तेः। दध्ना जुहोतीत्यस्य च नानर्थक्यं गुणविधित्वात्। अतः अग्निहोत्रं जुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम्। ज्योतिष्टोमेनेत्यस्य च नानर्थक्यम् अधिकारविधित्वोपपत्तेः। अतः किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यम्।

किं च दध्ना जुहोतीत्यस्य कर्मोत्पत्तिविधित्वे पयसा जुहोतीत्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते, उत्पत्तिशिष्टदध्यवरोधात्। उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते, आकांक्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात्। अतस्तेनापि विशिष्टं कर्मान्तरं विधेयम्। तथा चानेकादृष्टकल्पनागौरवम्। अग्निहोत्रं

---

मिति। प्रमाणान्तरप्राप्तकर्मानुबन्धिनः कस्यापि विधानासम्भवेनान्यपरत्वाभावादानर्थक्यपरिहाराय विधिर्धात्वर्थस्य विशेषपरत्वं निश्चाययतीति होमविशेषनिश्चयसंभवात् 'समिधो यजतीत्यादिवदुत्पत्तिविधित्वमुपपन्नमिति भावः। ननु तथाऽपि रूपवत्येव वाक्ये कर्मविधानमिति नियमस्त्यक्तस्तत्राह संभवतीति। संभवति रूपवति वाक्ये कर्मविधाने तदङ्गीकर्तव्यमित्येव नियम इष्ट इति न दोष इति। ननु सन्निहितदध्यादिविधिविहितकर्मसमुदायानुवादत्वमेवाग्निहोत्रं जुहोतीति वाक्यस्य स्यात्। तथा च तेषां तन्नामकत्वासिद्धिः। अतो वाक्यानर्थक्याभावाद्रूपवद्वाक्ये कर्मविधानं स्यादित्यतो दोषान्तरमाह किं चेति। कर्मोत्पत्तिविधित्वे स्वीक्रियमाण इति शेषः। एतत्कर्मानुवादेन दधिवाक्यविहितहोमानुवादेन। उत्पत्तिशिष्टगुणावरुद्धे कर्मोत्पत्तिवाक्योपदिष्टगुणेन पूर्वमेव विशेषिते। सप्तम्यर्थ उद्देश्यत्वम्। कुत इत्यत्राह आकांक्षाया इति। कर्मगताया गुणविषयाकांक्षाया इति तदर्थः। तेनापि पयोवाक्येनापि। विशिष्टम् पयोरूपगुणविशिष्टम्। कर्मान्तरम् दधिवाक्यविहितभिन्नं कर्म। विधेयमिति। अगत्या तथैवाङ्गीकर्तव्यमित्यर्थः। अनेकादृष्टेति। कर्मणां निष्फलानां विधेयत्वासम्भवेन फलावश्यकत्वे तेषां च

जुहोतीत्यस्य तु उत्पत्तिविधित्वं एतद्वाक्यविहितस्य कर्मणो द्रव्याकांक्षायां युगपदेव खलेकपोतन्यायेन 'दध्ना जुहोति', 'पयसा जुहोति' इत्यादिवाक्यैर्गुणा विधीयन्त इति नानेकादृष्टकल्पनागौरवम् ।

अतोऽग्निहोत्रं जुहोतीत्ययमुत्पत्तिविधिः, पयसा जुहोतीत्यादयस्तु गुणविधय इति युक्तम् । सोमेन यजेतेत्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किंचिद्दूषणं, पक्षद्वयेऽप्येकस्यादृष्टस्य तुल्यत्वात् । तस्माद्युक्तं सोमेन यजेतेत्ययमेवोत्पत्तिविधिरिति

---

क्षणध्वंसिकर्मतः साक्षादुत्पत्त्यसम्भवेन व्यापारतयाऽदृष्टस्य कल्पनीयतया कर्मानेकत्वेऽदृष्टानेकत्वमपि भवतीत्यर्थः । न चाग्निहोत्रं जुहोतीति वाक्यस्योत्पत्तिविधित्वेन कर्मण एकत्वेऽपि दधिविशिष्टकर्मानुष्ठानजन्यमेकमपूर्वं पयोविशिष्टकर्मानुष्ठानजन्यमपरमित्यदृष्टानेकत्वमस्तीति वाच्यम् । कर्मण एकत्वेन दध्यादेस्तत्र विकल्पितत्वेनापूर्वस्यैकजातीयत्वात् । अत्र पक्षे एकैकस्मिन् प्रयोगे एकैकस्यैवानुष्ठानादृष्टमेकम् । तत्र तु भिन्नभिन्नवाक्यविहितकर्मणां प्रतिप्रयोगं समावेशनानेकान्यदृष्टानीति वैषम्याच्च । नन्वग्निहोत्रवाक्यस्योत्पत्तिविधित्वेऽपि तत्सन्निहितेनैकेन वाक्येन गुणे विहिते व्यवहितेन वाक्यान्तरेण तत्र गुणविधानस्याकांक्षाभावेनासम्भवात्तस्य विशिष्टविधायकत्वमेवेति तुल्यमित्यत आह अग्निहोत्रमिति । खले कपोतन्यायेनेति । यथा वृद्धा युवानः शिशवश्च कपोता युगपत्खले समुदिताः पतन्ति ; तथा विप्रकृष्टं सन्निकृष्टं सन्निकृष्टतरं च वाक्यं सन्निधेरवर्जनीयत्वेन युगपदेवोत्पत्तिविधिना सम्बध्यत इति संभवति तत्र तत्रैतदुद्देशेन गुणविधानमिति भावः । अतः प्रयोजनवत्त्वाय रूपवद्वाक्यस्योत्पत्तिविधित्वं तत्र त्यक्तम् । इह तु नेत्याह अत इत्यादिना । दध्ना जुहोतीत्यस्येव पयसा जुहोतीत्यस्यापि खले कपोतन्यायेन गुणविधित्वं समर्थितमुपसंहारे सूचयितुं पयसा जुहोतीत्यादय इत्युक्तम् ।

तस्मात् ज्योतिष्टोमवाक्ये यागविशेषज्ञाने क्लेशसद्भावादिह तदभावा-

अलमनया अप्रसक्तविधिनिरूपणानुगतप्रपञ्चनिरूपणचिन्तया । प्रकृतमनुसरामः । तत्सिद्धं विधिः प्रयोजनवन्तमप्राप्तमर्थं विधत्त इति ।

स च विधिश्चतुर्विधः । उत्पत्तिविधिर्विनियोगविधिः प्रयो-

---

दाधाराग्निहोत्राधिकरणन्यायानवताराच्च । नन्वेवं यागविधानेऽपि सोमस्य विधिर्माभूत् । तस्य 'सोमं क्रीणाति, सोममभिषुणोतीति विध्यन्यथाऽनुपपत्त्यैव संभवत्प्राप्तिकत्वात् । अतोऽप्युभयाप्राप्त्यभावेन नेदं विशिष्टविध्युदाहरणमिति चेन्न । संभवत्प्राप्तिकस्यापि तस्येह विधानात् । अन्यथा सोमेनेति पदवैयर्थ्यात । न हि सोममात्रविधानपक्षे यागस्योद्देश्यत्वेनान्वयवत् प्रकारान्तरेणास्यान्वयस्सुवचः । अतस्तस्यापि विधानमावश्यकम् । एतद्विध्यभावे सक्तून् जुहोतीत्यस्य संस्कारविधित्वाभ्युपगमप्रसङ्गेन सक्तूनामिह प्राप्त्या सोमानियमासिद्धापत्तिरिति तत्परिहारश्च प्रयोजनमस्तीति । तदिदमभिप्रेत्योक्तमलमिति । प्रयोजनवदर्थावबोधित्वोपपादनाय विधीनां विधित्वमेव प्रकृतापेक्षितम् । तत्तु विशिष्टविधित्वे गुणविधित्वे च तुल्यम् । अथापि तत्त्वबोधनायैष विचारो वर्तित इति सूचयति अनुगतप्रसङ्गचिन्तयेति । एवं धात्वर्थ-गुण-विशिष्टविधानेन विधेरप्राप्तार्थकत्वं निरूप्योपसंहराति तदिति ॥

एवमप्राप्तार्थकत्वं निरूप्य यथाभूतेनाधिकारिणा यथाक्रममनुष्ठीयमानात्सपरिकरात्कर्मणः प्रयोजनं भवतीति सर्वेषामपि विधिविधेयानां साक्षात्परम्परासाधारणप्रयोजनवत्त्वं सिद्ध्यतीति निरूपयितुं तमेव विधिं चतुर्धा विभजति स चेति । चः पूर्वोक्तत्रैविध्यसमुच्चये । स्वरूपतोऽज्ञातानामेवाङ्गाङ्गिभावो ज्ञातव्यो भवति । अवगते चाङ्गाङ्गिभावेऽनुष्ठेययावदवगत्याऽस्य प्रागनुष्ठानमस्य पश्चादिति क्रमबोधनेन प्रयोगविधानं संभवति । एवमिदमित्थमनुष्ठेयमिति निर्णये जाते शक्तयशक्तिभ्यामधिकार्यनधिकारि-

गविधिरधिकारविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधि-

---

विभाग इत्युत्पत्तिविधिरित्यादिक्रमादरः । तत्रेति उत्पत्तिविध्यादिषु चतु-र्ष्वित्यर्थः । अस्य तत्तद्विधिनिरूपणोपक्रमवाक्यैः संबन्धः । प्रथमोद्दि-ष्टमुत्पत्तिविधिं निरूपयति कर्मेति । अग्निहोत्रं जुहोति समिधो यजती-त्यादावग्निहोत्रहोमसमिद्यागादिरूपकर्मस्वरूपमात्रबोधकत्वसत्त्वेन लक्षणसम-न्वयः । न चोद्भिदा यजेत पशुकाम इत्यादावव्याप्तिः, तस्य स्वरूपमा-त्रबोधकत्वाभावादिति वाच्यम् । तस्याधिकारविधित्वेन तदसङ्कीर्णविभा-जकधर्मभूतस्योत्पत्तिविधित्वस्य तत्रासत्त्वस्येष्टत्वात् । अथ वा अग्निहोत्रं जुहु-यात् स्वर्गकामः इत्यधिकारविधेरपि कर्मस्वरूपबोधकत्वसत्त्वादतिव्याप्तिरिति मात्रपदम् । तच्च बोधेऽज्ञातविषयकत्वनिवेशतात्पर्यकम् । अत उद्भि-द्वाक्येऽप्यज्ञातकर्मस्वरूपबोधाल्लक्षणसमन्वयः । स्वरूपेण ज्ञातस्यापि इष्ट-साधनत्वेनाज्ञातस्य कर्मणो बोधजनकेऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादौ पुनरतिव्याप्तिः स्यादिति स्वरूपेति । तच्चेष्टसाधनतावच्छेदकत्वोपलक्षित-धर्मपरम् । अधिकारवाक्येनेदृशधर्मावच्छिन्नस्य बोधसद्भावेऽपि तत्रास्या-ज्ञातत्वाभावादज्ञाततद्विषयकबोधजनकत्वस्य तत्राभावान्नातिव्याप्तिः । अ-ज्ञातत्वं प्रमाणान्तरजन्यप्रमित्यविषयत्वम् । न चेदृशधर्मावच्छिन्नस्याधि-कारविध्यादिरूपप्रमाणान्तरजन्यप्रमितिविषयत्वेन तदविषयत्वघटितलक्षणस्या-संभव इति वाच्यम् । प्रमाणान्तरे स्वानपेक्षत्वविशेषणस्य देयत्वात् । अधिकारविध्यादेश्चोत्पत्तिविध्यपेक्षत्वेन स्वानपेक्षत्वाभावात् स्वानपेक्षस्वभिन्न-प्रमाणत्वाभावेन तादृशप्रमाणजन्यप्रमित्यविषयतादृशधर्मावच्छिन्नविषयक-बोधजनकत्वस्य लक्ष्ये सत्त्वेनादोषात् । अधिकारवाक्यादौ च नातिव्या-प्तिः; तस्य स्वपदेन ग्रहणे उत्पत्तिविधेस्तदनपेक्षत्वेन तज्जन्यप्रमित्यविषय-त्वस्य कर्मस्वरूपेऽसम्भवेन लक्षणार्थाभावात् । स्वापेक्षत्वं च स्वजन्यबोध-जनिताकांक्षाशामकबोधजनकत्वस्वोपजीवित्वान्यतरवत्त्वम् । अधिकारवि-

रुत्पत्तिविधिः। यथाऽग्निहोत्रं जुहोतीति । उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः, होमेनेष्टं भावयेदिति । न तु होमं कुर्यादिति साध्यत्वेन । तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकार

---

भेरुत्पत्तिवाक्याधीनफलाकांक्षापूरकत्वान्न तदनपेक्षत्वम् । उत्पत्तिवाक्यस्य चाधिकारवाक्यजनिताकांक्षापूरकत्वाभावात्तदनपेक्षत्वम् । स्वोपजीवित्वनिवेशाच्च न लौकिकतत्समानार्थकवाक्यमादायासंभवः । तथा च स्वजन्यबोधजनिताकांक्षाशामकबोधजनकत्वस्वोपजीवित्वान्यतराभाववत्स्वभिन्नप्रमाणजन्यप्रमितिविषयताऽनवच्छेदकताद्दशधर्मावच्छिन्नकर्मविषयकबोधजनकत्वमुत्पत्तिविधित्वमिति दिक् । वस्तुतस्तु कर्मगतताद्दशधर्मावच्छिन्नविधेयताशालिबोधजनकत्वमुत्पत्तिविधित्वम् । विधेयत्वं स्वरूपसंबन्धविशेष इति । उत्पत्तिविधिरिति । उत्पत्तिः कर्मोत्पत्तिः तद्विषयकज्ञानोत्पत्तिरिति यावत् तज्जनकविधिवाक्यमित्युत्पत्तिविधिशब्दार्थः । लक्ष्यं निर्दिशति यथेति । प्राभाकरास्तु उत्पत्तिविधौ धात्वर्थः साध्यत्वेनान्वेति । विशिष्याग्निहोत्रं जुहोतीत्यादौ द्वितीयाश्रवणादपि तथेत्याहुः तन्मतं निरस्यन्नाह उत्पत्तिविधौ चेति । अन्वय इति भावनायामिति शेषः । ननु साध्याभावे कस्येदं करणं भविष्यति तत्राह होमेनेष्टमिति । इष्टसामान्यस्य साध्यत्वेनान्वयः स्वीकर्तव्य इति भावः । ननु साध्याकांक्षैव प्राथमिकीति साध्यत्वेनैव धात्वर्थान्वयो युक्त इत्यत्रानुपपत्तिं निषेधपुरःसरं दर्शयति न त्वित्यादिना । साध्यस्य साध्यन्तरान्वयायोगेनेति । यद्यप्युत्पत्तिवाक्ये साध्यत्वेनान्वितस्यापि साध्यवति वाक्ये साधनत्वेनान्वयो नानुचितः; अथापि यावदस्य यत्किञ्चित्साध्यनिरूपितं साधनत्वं नावगम्यते, तावदुत्पत्तिवाक्ये साध्यत्वेनान्वयो दुर्वचः । यदि तु साध्यान्तरसाधनत्वाज्ञानेऽपि साध्यत्वमिष्यते, तर्हि तथाविधसाध्यस्य साध्यान्तरान्वयायोग एवेति भावः । ननु करणत्वेनान्वयेऽपि तत्रैवेष्टस्योक्तत्वादधिकारव-

वाक्यावगतफलसम्बन्धो नस्यात् । करणत्वेन त्वन्वये होमेनेष्टं भावयेत् । किं तदिष्टमित्याकांक्षायां फलविशेषसम्बन्धो घटते ।

न च उत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्यार्थ इति वाच्यम् । विधिश्रुतेरेवेष्टबोधकत्वात् । सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसम्बन्धमात्रं बोधयति । तस्माद्युक्तमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति । अत एवोद्भिदा यजेतेत्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते, उद्भिदा यागेन इष्टं भावयेदित्यन्वयोपपत्तेः ।

---

क्यावगतफलसंबन्धो न स्यात्, तत्राह करणत्वेन त्विति । होमेनेष्टं भावयेदिति करणत्वेनान्वयाकारः । प्रकृताकांक्षाहेतुत्वमत्रास्तीति बोधयितुमिह तल्लेखनम् । घटत इति । इष्टसामान्यस्यैव ज्ञाततया तत एव विशेषजिज्ञासासंभवादधिकारवाक्ये तत्समर्पणं युक्तमिति भावः । नन्विष्टवाचकपदाश्रवणादध्याहारे च प्रमाणाभावात्तत्पदाभावेन नायं वाक्यार्थ इत्याशङ्क्याह न चेति । कथमिति क्षेपे । विधिश्रुतेरिति लिङादेरित्यर्थः । ननु प्रवर्तनावाचिन्यास्तस्याः कथमिष्टबोधकत्वमित्यत्रोपपादयति सा हीति । तस्याः प्रवर्तनावाचित्वात्प्रवर्तनायाश्च प्रवृत्त्यनुकूलव्यापाररूपत्वात्प्रवृत्तेश्च स्वविषयजन्यपुरुषार्थोद्देश्यकत्वावश्यम्भावात् तथाविधप्रवृत्त्यनुकूलत्वनिर्वाहायेष्टस्य सद्भावं विधिश्रुतिः कल्पयतीत्यर्थः । तथा च कल्पितस्याशब्दस्यान्वयासंभवात् तद्वाचकपदमध्याह्रियत इति भावः । एवं युक्तिसिद्धस्यार्थस्योपष्टम्भकमपि दर्शयति अत एवेति । उपपद्यत इति । उद्भिच्छब्दस्य यागनामधेयत्वात् विशेषणविशेष्ययोः समानविभक्तिकत्वावश्यकतया यजिधात्वर्थस्य करणत्वाभावे उद्भिच्छब्दोपरि करणत्ववाचिनी तृतीया न स्यादिति भावः । अधातोरेव प्रातिपदिकत्वादिह तृतीयाभावेऽपि वचनान्तेन विवरणे सा भवतीति दर्शयति उद्भिदेति । अन्वयोपपत्तेरिति ।

येषामपीष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयाना-मन्वयोऽनुपपन्न एव। न हि संभवति याग इष्टसाधनमुद्भिदेति ।

---

साध्यत्वेनान्वयस्वीकारे यागमित्येव वक्तव्यत्वेन तद्विशेषणस्य तृतीयान्तपद-प्रतिपाद्यस्यान्वयो नोपपद्यत इति भावः । ननूद्भिद्वाक्यस्याधिकारवाक्य-त्वादधिकारवाक्ये च कर्मणः करणत्वेनान्वयान्न तृतीयान्तानुपपत्तिः । उच्यते । अधिकारवाक्यत्वेऽपि उत्पत्तिवाक्यत्वस्यापि सत्त्वेन साध्यत्वेना-न्वयस्य वक्तव्यत्वात् । किं च साध्याकांक्षायां धात्वर्थस्य साध्यत्वानुपपत्तौ हि पदान्तरार्थः परिग्राह्यः । धात्वर्थस्यैव त्वग्निहोत्रं जुहोतीत्यादाविवा-न्वयसम्भवे किमित्यन्यस्साध्यत्वेनान्वेष्यति । एवं तर्हि पशुकामपदं कथ-मन्वियादिति चेत् विना लक्षणां यथाश्रुतपशुकामनावत्पुरुषाधिकारिकत्वस्य तत्कर्तृकत्वस्य वा बोधनेनैवान्वेतु । तथा च, तृतीयान्तमनुपपन्नमेवेति भावः । एवं प्राभाकरपक्षे कर्मनामधेयानां तृतीयान्तानामन्वयानुपपत्तिं प्रदर्श्येष्टसाधनत्वलिङर्थतावादिमतेऽपि तां प्रदर्शयति येषामपीति । अनु-मतत्वं षष्ठ्यर्थः । गुणवाचिनां तृतीयान्तानां गुणकरणकत्वेनान्वयसम्भ-वात्कर्मनामधेयानामिति । अनुपपन्न एवेति । न च लिङ इष्टसा-धनत्वार्थकत्वेऽपि भावनाया आख्यातार्थभूतायाः सत्त्वेन तत्र यागस्येष्टसा-धनस्य करणत्वेनान्वयान्न तृतीयान्तान्वयानुपपत्तिरिति वाच्यम् । इष्ट-साधनत्वेनावगतस्य साध्यत्वेनान्वयस्यैवोचितत्वात् । अत एव द्वितीयान्त-स्थलेऽनुपपत्त्यभावात् तृतीयान्तानामित्युक्तम् । यैस्त्विष्टसाधनत्ववादि-भिर्धात्वर्थस्याख्यातार्थकृतावनुकूलतासम्बन्धेनान्वय इष्यते, तेषां द्वितीया-न्तकर्मनामधेयानां क्रियाविशेषणतया कथञ्चित्समाधानेऽपि तृतीयान्तान्वयोऽ-नुपपन्न एवेति । ननु तृतीयावगतस्य करणत्वस्य प्रातिपदिकार्थेऽन्वयस्वी-

तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात् ।

ननु तत्राप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः । न हि संभवति होमेन भावयेदग्निहोत्रमिति । सत्यम् । श्रूयमाणा तावद् द्वितीयार्थाक्षिप्तसाध्यत्वानुवादः, होमस्य हि करणत्वेनान्वयात् । असाधितस्य च करणत्वानुपपत्तेः । तस्याश्चानन्वयोपस्थितौ सा सक्तून् जुहोतीतिवत् तृतीयार्थं लक्षयति । अग्निहोत्रेण होमेनेष्टं भावयेदितीत्युक्तं

कारेण करणत्वविशिष्ट उद्भिद् याग इष्टसाधनमित्यस्तु तत्राह तृतीयेति । संख्यादेर्वचनाद्यर्थस्य प्रातिपदिकार्थान्वयेन क्रियान्वयाभावात्कारकस्येति । करणत्वशब्दोपात्तस्य क्रियाभिन्न एवान्वयात्तद्व्यावृत्तये लिङ्गसंख्यान्वयायोग्यस्येति । क्वचिल्लिङ्गस्य शब्दगतत्वेनार्थेऽन्वयाभावात्संख्येत्युक्तम् । कथमस्य लिङ्गाद्यन्वयायोग्यत्वं ? तत्रोक्तं तृतीयोपात्तस्येति । अन्वयादिति । संख्याऽनन्वयिपदोपस्थाप्यकारकनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति क्रियोपस्थितेर्विशेष्यतासंबन्धेन कारणत्वादिति भावः । न च तथाऽपि करणत्वस्य धात्वर्थरूपक्रियायामन्वयाङ्गीकारात् धात्वर्थघटितपरंपरया भावनायामेव वान्वयाङ्गीकारान्न दोष इति वाच्यम् । आश्रयत्वेन परम्परया वा कस्यामपि क्रियायामन्वयस्याव्युत्पन्नत्वात् । यथा मम तृतीयान्तान्वयानुपपत्तिस्तथा तव द्वितीयान्तानामिति शङ्कते नन्विति । अपिशब्दः कर्मनामधेयान्वयानुपपत्तिमात्रेण शङ्कितृसमुच्चयपरः । अधिकारवाक्ये करणत्वेनान्वयस्य प्राभाकरसम्मतत्वेन तत्र द्वितीयान्तं तन्मतेऽप्यनुपपन्नम् । अतः कर्मोत्पत्तिविधिष्वित्युक्तम् । परिहरति सत्यमिति । अथाक्षेपं विवृणोति होमस्येति । करणत्वस्यानुक्तत्वात्कथं तथान्वयस्तत्राह तस्याश्चेति । द्वितीयायाश्चेत्यर्थः । अनन्वयोपस्थितौ साध्यत्वोपस्थापनेनाख्यातेनान्वयासम्भवरूपानुपपत्तिप्रतिसन्धाने । सत्यामिति शेषः । अनन्वयोपपत्ताविति पाठेऽन्वयानुपपत्तावित्यर्थः । सक्तूनिति । तत्र सक्तूनामविनियुक्तत्वेन होमसंस्कार्यत्वासम्भवात् सक्तुभिर्जुहोतीत्यर्थस्यैवो-

पार्थसारथिमिश्रैः । अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः । तत्सिद्धमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति ।

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः । यथा दध्ना जुहोतीति । स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति ।

एकस्य च विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यारूपाणि । एतत्सहकृतेन विधिनांगत्वं

---

क्तत्वादिति भावः । स्वोक्तार्थे प्रमाणं दर्शयति अत एवेति । न विभक्तिविपरिणामो मिश्रसम्मतः, अपि तु लाघवाल्लक्षणैवेति भावः ।

अथ विनियोगविधिं निरूपयति अङ्गेति । वस्तुतोऽङ्गस्य वस्तुतः प्रधानस्य च यः सम्बन्धोऽङ्गाङ्गिभावलक्षणस्तद्बोधको विधिर्विनियोगविधिः । विनियोगोऽङ्गत्वेन बोधनम् । न चाधिकारविधिनाऽपि फलाङ्गत्वस्य यागे बोधनादतिव्याप्तिरिति वाच्यम् । तस्यापि विनियोगविधित्वस्येष्टत्वात् । अत एव नव्यैर्विनियोगविधित्वेनैव तस्यापि ग्रहणम् । प्राच्यैः पुनर्विनियोगविधिभूतस्यैव फलस्वाम्यबोधकत्वरूपांशान्तरसद्भावात् पृथक्करणमिति । प्रकृते तद्व्यावृत्तेरिष्टत्वे फलस्वाम्याबोधकत्वं विवक्षणीयमिति । इह किमङ्गं किं प्रधानमितीदं विवृणोति स हीति । तृतीयाप्रतिपन्नाङ्गभावस्येति । तृतीयायाः करणत्वार्थकत्वात् वक्ष्यमाणरीत्या तस्याङ्गत्वरूपत्वादङ्गभावस्य तृतीयातः प्रतिपन्नत्वम् । होमसम्बन्धमिति । तृतीयया दध्नोऽङ्गत्वेऽवगते परिशेषात्, मानान्तरेणेष्टसाधनत्वस्यावगतत्वाच्च होमस्य प्रधानत्वम् । तत्सम्बन्धं तदुद्देश्यकत्वम् । विधत्त इत्यनेन, तद्बोधकत्वविशिष्टं विधित्वमस्तीत्युक्तम् । भावनायां दध्नः करणत्वेन होमस्य चोद्देश्यत्वेनान्वये वक्ष्यमाणमङ्गत्वं भोत्स्यत इत्याशयेन तदाकारमाह दध्नेति । ननु प्राक् प्रकरणादेरङ्गताप्रमाणत्वमभिहितम् । कथमिह विधेस्तद्बोधकत्वमुच्यते तत्राह एतस्येति । एतत्सहकृतेनेति । एतत्प्रमाणान्यतमसहकृतेने-

परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते ।

---

त्यर्थः । परेति । परस्योद्देशेन प्रवृत्तस्य पुंसः सम्बन्धिन्याः, प्रवृत्तायाः उत्पन्नाया वा कृतेर्व्याप्यं यत्तत्त्वमिति विग्रहः । परं स्वर्गादि । तदुद्देशेनोत्पन्नाया दर्शपूर्णमासादिविषयिण्याः कृतेर्दर्शपूर्णमासादिर्व्याप्यमिति तस्य स्वर्गाद्यङ्गत्वम् । तथा दर्शाद्युद्देशेनोत्पन्नायाः प्रयाजादिविषयिण्याः कृतेर्व्याप्यं प्रयाजादीति तस्य दर्शाद्यङ्गत्वम् । ननु कृतिसत्त्व एव प्रयाजादिसत्त्वमित्येवं कृतिव्याप्यत्वं कृतिसाध्यत्वरूपमेव । तस्य प्रयाजादौ सतोऽपि पूर्वोक्ते दध्यन्यव्याप्तिः, एवं कालकर्त्रादावपि कृत्यजन्येऽव्याप्तिरिति चेत् सत्यम् । न कृतिसाध्यत्वमङ्गत्वम्, अपि तु कृतिकारकत्वमेव । कालादावधिकरणत्वादिकारकत्वसद्भावाल्लक्षणसमन्वयः । तदिदं कृतिकारकत्वं कृष्यादावपि यागापेक्षितधान्यादिप्रयोजकेऽस्तीत्यतिव्याप्तम् । अतः कृतौ विधिविषयत्वं विवक्षणीयम् । एवमपि क्वचित् परप्रेरणयाऽपि संभवति विधिविषयकृष्यादौ यागोद्देश्यकेऽतिव्याप्तिस्तदवस्थेति यदा यदा स्वभिन्नोद्देशेन कारकं स्वम्भवति तदा तदा विषयतया विधिविषयकृतिविशिष्टो भवतीति वक्तव्यम् । तथा च विषयतया विधिविषयकृतिव्याप्या स्वभिन्ननिष्ठोद्देश्यतानिरूपिता या कारकता तद्वत्त्वमङ्गत्वमिति फलति । एतत्सूचनाय व्याप्यपदोपानम् । स्वर्गस्याग्निहोत्रमङ्गमित्यत्र षष्ठ्यर्थ आधेयत्वमङ्गपदार्थे उद्देश्यत्वेऽन्वेति । तथा च स्वर्गनिष्ठोद्देश्यतानिरूपितविधिविषयकृतिव्याप्यकारकतावदग्निहोत्रमिति बोधः । अग्निहोत्रस्य स्वर्गस्य वा अग्निहोत्रं स्वर्गो वाऽङ्गमिति न व्यवहारः । उद्देश्यताया अग्निहोत्रनिष्ठत्वाभावात् कारकतायास्तन्निरूपितत्वाभावाच्च । एवं चाङ्गपदार्थे परपदार्थस्य न प्रवेशः । स्वस्य स्वमङ्गमिति व्यवहारो नास्तीति बोधयितुमेव तदुक्तमिति ध्येयम् । पारार्थ्यापरपर्यायमिति । पारार्थ्यमित्यपरः पर्यायो वाचकः शब्दो यस्य तदित्यर्थः । 'शेषः परार्थत्वा' दिति

तत्र निरपेक्षो रवः श्रुतिः । सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति ।

---

सूत्रेण शेषपदवाच्यतानियामकं यत् पारार्थ्यमङ्गत्वं महर्षेर्विवक्षितम्, तदेव परोऽर्थ उद्देश्यो यस्येति व्युत्पत्त्या परनिष्ठोद्देश्यतानिरूपकत्वरूपं कृष्यादिवारणार्थेन विधिविषयत्वनिवेशेनेदृशं भवतीति भावः । एवं सौत्रपारार्थ्यपदप्रयोगेण नोपकारकत्वादिरूपमङ्गत्वम् ; तस्य गुणफलसंबन्धविध्यादावाश्रयाद्युपकारके तदनङ्गभूते गुणादावतिव्याप्तत्वादित्यपि ज्ञापितम् । ज्ञाप्यत इति । तथा च विधिरेव प्रवर्तनात्मा स्वगतप्रवृत्त्यनुकूलत्वनिर्वाहाय प्रवृत्तिविषयस्येष्टोद्देश्यकत्वमवगमयति । तत्र यद्गतमुद्देश्यत्वं यद्गतं च तदुद्देश्यकत्वं तत्र तद्बोधनाय सहकारित्वेन श्रुत्याद्यपेक्ष्यते । तत्राङ्गत्वघटकानां पदार्थानां प्रमाणान्तरतोऽवगमात् विशेष्यभूतकारकताग्राहकत्वेन श्रुत्यादेरङ्गताग्राहकत्वमिति भावः । अथ प्रमाणानि क्रमेण निरूपयति तत्रेति । तत्र श्रुत्यादिषु । अस्य श्रुतिरित्यनेनान्वयः । निरपेक्ष इति । यद्यपीदं श्रुतिलक्षणं नाङ्गताग्राहकश्रुतिमात्रवृत्ति । एवं च निरपेक्षपदस्य वक्ष्यमाणाङ्गताबोधकप्रमाणानपेक्ष इत्यर्थो न सम्भवति । तथाऽपि लक्षणयाऽर्थान्तरबोधके पदे श्रुतिव्यवहाराभावात् तद्वारणार्थत्वमस्य । तस्य पदस्य लक्ष्यार्थबोधने पदान्तरपर्यालोचनानुपपत्तिप्रतिसन्धानसापेक्षत्वात् । तथा च प्रकृतार्थे पदान्तराद्यनपेक्षत्वे सत्यर्थबोधकशब्दः श्रुतिरिति । यद्यपि प्रकृते विनियोक्त्र्या एव श्रुतेर्निरूपणीयतया तद्भिन्नश्रुतिनिरूपणमसङ्गतम् । तथाऽपि श्रुतिशब्दस्य न प्रकृतश्रुतावेव रूढिः ; अपि तु सामान्यवाचित्वमेव । एवं च श्रुतिलिङ्गेत्यत्र श्रुतिपदेन तद्विशेषः परिग्राह्य इति बोधयितुं तन्निरूपणमिति ध्येयम् । तां विभजति सा चेति । विधात्री विधिबोधिका । अभिधात्री । शक्त्यार्थोपस्थापिका । यद्यपि श्रुतिरितरापीदृशी । अथापि तद्भिन्नत्वं निवेशनीयमिति न दोषः ।

तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिधा । विभक्तिरूपा सामनाभिधानरूपा एकपदरूपा

---

।लिङाद्यात्मिका लिङाद्यादेशभूततद्यात्मिका । आदिना लोडादिपरिग्रहः। व्रीह्यादिश्रुतिः व्रीहिपदयजिपदादिश्रुतिः । अस्पष्टत्वादिकमालोच्य विनियोक्त्रीलक्षणमाह यस्य चेति । श्रवणादेवेत्येवकारेण पदान्तरश्रवणं तदधीनान्वयानुपपत्त्यादिप्रतिसन्धानं च व्यवच्छिद्यते । संबन्धः अङ्गाङ्गिभावलक्षणः । तथा च पदान्तरश्रवणनिरपेक्षा सती याऽङ्गाङ्गिभावबोधिका सा विनियोक्त्रीत्यर्थः । तां च विभजति सा चेति । विभक्तिरूपा सुब्विभक्तिरूपा । समानाभिधानरूपा समानमेकमभिधानमभिधायकं तद्भिन्ना । विभिन्नार्थविषयकशक्तिमत्पदरूपेति यावत् । नात्र शक्तावच्छेदकभेदोऽपेक्षितः ; वस्तुत आख्याते तत्तदादेशानामेवार्थभावनाशब्दभावनाद्यर्थाभिधायकत्वेन तद्भेदाभावात् । नापि शक्तिभेदः ; एकशक्त्युपस्थापितयोरेवकाराद्यर्थयोरापि परस्परसम्बन्धस्य सम्भवेन तत्र समानाभिधानश्रुतित्वाभावे प्रमाणाभावात् । अतः शक्यार्थानेकत्वमेवापेक्षितम् । न च यत्र शक्यार्थस्य एकरूपावच्छिन्नस्यानेकत्वम् । तत्रापि विभिन्नार्थविषयकशक्तिमत्पदत्वमस्तीति वाच्यम् । विभिन्नधर्मावच्छिन्नविशेष्यकोपस्थितिजनकशक्तिमत्पदत्वस्य विवक्षितत्वात् । एकपदरूपेति । सुबन्ततिङन्तपदरूपेत्यर्थः । यद्यप्यन्त्ययोरनयोर्न सम्बन्धवाचकत्वम् । अथापि सम्बन्धिद्वयस्य पदान्तरापेक्षामन्तरेण झटित्युपस्थापितत्वेन तत्सम्बन्धोऽपि शीघ्रं प्रतीयत इति सम्बन्धबोधकत्वमस्त्येव । वाक्यरूपप्रमाणे तु पदान्तरापेक्षाऽस्तीति भेदमभिप्रेत्य श्रुतावन्तर्भावः । वस्तुतस्तु विभक्त्या एव विनियोक्तृश्रुतित्वं मुख्यम् । नानयोः तद्वाचकत्वाभावात् गम्यमानस्यापि

चेति । तत्र विभक्तिश्रुत्याङ्गत्वं, यथा व्रीहिभिर्यजेतेति तृतीया-श्रुत्या व्रीहीणां यागाङ्गत्वम् ।

न च उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति

---

संबन्धस्य मुख्याङ्गत्वरूपत्वाभावाच्च । न हि पशुनेत्यत्र कारकं प्रति एकत्वस्याङ्गत्वं नाम तद्विशेषणत्वातिरिक्तं सम्भवति । अतो विशेषण एवाङ्गत्वव्यवहारो गौण इति । अतः कारकत्वविशेष्यकोपस्थितिजनकशक्तिमत्पदत्वमेव विनियोक्तृश्रुतित्वमिति ध्येयम् । त्रिविधा अपि श्रुतीः क्रमेणोदाहरति तत्रेति । विभक्त्यादिश्रुतिष्विति तदर्थः । अङ्गत्वमिति । प्रत्याय्यत इति शेषः । यागाङ्गत्वमिति । तृतीयायाः करणत्वार्थकत्वाद्यागस्य च मानान्तरप्राप्तस्योद्देश्यत्वाद्व्रीहिकरणकयागोद्देश्यकभावनाया विधिविषयत्वे वाक्येन बोधिते पश्चात्करणत्वोद्देश्यत्वयोर्निरूपकापेक्षायां परस्परान्वयात् विधिविषयकृतिनिरूपितयागनिष्ठोद्देश्यतानिरूपितकरणत्वरूपं यागाङ्गत्वमवगम्यते । तत्र विशेष्यभूतकरणतावाचित्वेन तृतीया-श्रुतेरीदृशाङ्गताप्रत्यायकत्वमिति भावः । ननु प्रमाणान्तरप्राप्तो यागो यदाग्नेय इत्यादिवाक्यविहित आग्नेयादिः । तस्य चोत्पत्तिवाक्य एव द्रव्यमुपदिष्टम् । अत उत्पत्तिशिष्टद्रव्यावरुद्धे तत्राकांक्षाभावेन व्रीहीणामन्वयासम्भवात् वाजिभ्यो वाजिनमित्यत्रेव गुणात् कर्मभेद एव स्वीकर्तव्यः । अतश्चापूर्वयागविधाने व्रीहीणामपि विधानासम्भवात्सोमेन यजेतेत्यत्र सोमपद इव व्रीहिपदे मत्वर्थलक्षणामङ्गीकृत्य व्रीहिविशिष्टयागो विधातव्यः । तत्र च करणत्वं तृतीयोपात्तं व्रीहिमद्यागनिष्ठमेव न व्रीहि-निष्ठम् । अतः श्रूयमाणया तृतीयया व्रीहीणां यागाङ्गत्वं न सम्भवतीत्याशंक्य परिहरति न चेति । उपपत्तेरिति । हविष्ट्वेन पुरोडाशस्य हविराकांक्षानिवृत्तावपि तत्प्रकृतिद्रव्याकांक्षाया अनपायाद्व्रीहयः प्रकृतित्वेनेह

वाच्यम्। पुरोडाशप्रकृतितयोपपत्तेः। पशोरिव हृदयादिरूपहविःप्रकृतितया यागाङ्गत्वम्। न च साक्षात्पशोरेवाङ्गत्वं किं न स्यादिति वाच्यम्। तस्य विशसनात्। अवदीयमानत्वाच्च हृदयादीनाम्। अवदीयमानं हि हविः। यथा पुरोडाशादिः। मध्या-

---

नियन्तुं शक्यन्त इति भावः। एवं परम्परासाधारणकरणत्वाङ्गीकारे दृष्टान्तमाह पशोरिति। यदग्नीषोमीयं पशुमालभत इत्यादिवाक्ये यागविधायके करणत्वेनावगतस्य पशोरित्यर्थः। हृदयादीति। आदिना जिह्वा वक्षः तनिम वृक्यद्वयम् सव्यं दोः दक्षिणं पार्श्वं सव्यं पार्श्वं दक्षिणा श्रोणिः, गुदतृतीयमिति दशानामङ्गानां वपायाश्च परिग्रहः। ननु साक्षात्पशावेव देवतासंयोगश्रवणात्तस्यैव साक्षात्साधनत्वमावश्यकमित्याशंक्य परिहरति न चेति। साक्षादिति अवयवद्वारीकरणमन्तरेणेत्यर्थः। अङ्गत्वं करणत्वम्। तस्य पशोः। विशसनादिति। 'पशुं विशास्ती'ति वचनाद्विशसने कृते प्राणिद्रव्यस्य नष्टत्वात्तस्य साक्षात्साधनत्वासम्भव इति भावः। तथापि कथं हृदयादीनां हविष्ट्वं तत्राह अवदीयमानत्वाच्चेति। अवदानसंस्कार्यत्वादिति तदर्थः। नन्वस्त्ववदानं कथं तावता तेषां देवतोद्देशेन त्यज्यमानत्वरूपं हविष्ट्वमित्यत्राह अवदीयमानं हीति। तथा च यथा मध्यपूर्वार्धदेशावच्छेदेन विहितस्यावदानस्य हविःसंस्कारकत्वं प्रकृतावगम्यते, तथेहापि विधीयमानानां हृदयादिसंस्कारकाणामवदानानां हविःसंस्कारकत्वं युक्तमिति हृदयादीनां हविष्ट्वं सिद्ध्यतीति भावः। ननु हृदयादीनां नावदानसंस्कार्यत्वम्, अपि तु मध्यपूर्वार्धावच्छेदेन पुरोडाशस्येव हृदयाद्यवच्छेदेन पशोरेव संस्कार्यत्वमस्तु। विशसनं चाविशसिते पशौ हृदयाद्यवच्छेदेन पशोः संस्कार्यत्वासम्भवाद्विधीयत इति पशोरेव

त्पूर्वार्धाच्चावद्यतीति वाक्यात् । हृदयादीनि चावदीयमानानि, न पशुः । हृदयस्याग्रेऽवद्यतीति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् ।

पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम् । तस्य जीवत एव 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्युत्सर्गविधानात् । यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् ।

---

हविष्ट्वमित्यत्राह हृदयादीनि चेति । एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतीति हृदयादीनां कर्मत्वश्रवणात् हृदयस्याग्र इत्यत्र च षष्ठ्याः कर्मत्वार्थकत्वात् तेषामेव संस्कार्यत्वम् । तेषु च पशुप्रत्यभिज्ञाऽभावाद्विशसनादिना पशोर्नष्टत्वाच्च विशिष्टस्य त्यज्यमानत्वं नास्ति । अपि तु पुरोडाशादेरिव हृदयादीनामेवेति भावः । यदुक्तं पशोरिव हृदयादिहविः-प्रकृतितया यागाङ्गत्वमिति, तत्र सर्वपशुयागमभिप्रेत्य ; अपवादसद्भावादित्याशयेनाह पात्नीवतयागे त्विति । त्वाष्ट्रं पत्नीवतमालभेतेति विहितः पत्नीवत्त्वष्टृदेवताकोऽयं यागः । उत्सर्गविधानादिति । उत्सर्गबोधनादित्यर्थः । उत्सृजतिना पूर्वोक्तं यागमनूद्य पर्यग्निकृतमिति पदेन कृतावस्थस्य पर्यग्निकरणस्यातिदेशतः प्राग्विधानात् वृत्तपर्यग्निकरणकत्वस्य च पूर्वेष्वङ्गेष्वकृतेष्वसम्भवेन तावन्मात्राक्षेपात गृहमेधीयाज्यभागन्यायेनातिदेशाभावेन संज्ञपनाविशसनाद्यप्राप्त्या जीवत एव पशोस्त्वाष्ट्रं पात्नीवतमिति देवतासम्बन्धश्रवणान्यथाऽनुपपत्त्या त्यागस्यावश्यकत्वेन पशुः साक्षादेवाङ्गमिति हृदयम् । अत्र पर्यग्निकृतमिति विधीयमानस्य पर्यग्निकरणस्य प्रकृतौ हविः-प्रकृतिद्रव्यसंस्कारकत्वेन क्लृप्तस्य साक्षाद्धविःसंस्कारकत्वेऽप्राकृतकार्यकारित्वापत्त्या तद्द्वारणैव विशसनादितात्पर्यग्राहकाभावेऽपि एतस्यैव तात्पर्यग्राहकत्वाभ्युपगमेन पशोर्न प्रदेयत्वम् ; अपि तु हृदयादीनामेव । संभवति चावदानाभावेऽपि पश्ववयवभावेनैव स्थितानां तेषां त्यागकर्मत्वम् । अतोऽन्यत्रैव पशुः प्रकृतिद्रव्यमेवेति खण्डदेवः । एवमुत्पत्तिशिष्टस्यापि वाक्यान्तरपर्यालोचनया परम्परया करणत्वे स्थिते सुतरां प्रकृते इदं सम्भवती-

एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति। आरुण्यस्यापि क्रयाङ्गत्वं तृतीयाश्रुत्या। न चामूर्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम्। एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः।

---

त्याशयेनाह एवमिति। पूर्वं दध्ना जुहोतीत्यत्र तृतीयायाः साक्षात्करणताबोधनेनाङ्गताग्राहकत्वमुक्तम्। अथ साक्षात्करणत्वार्हस्यापि वाक्यान्तराविरोधाय परम्पराकरणत्वरूपाङ्गताग्राहकत्वमेव तृतीयाश्रुतेरित्युक्तम्। अथ तदनर्हस्यापि करणत्वश्रवणादङ्गत्वमवसातव्यमित्याह आरुण्यस्यापीति। अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति श्रुतारुणापदशक्यार्थस्यारुण्यस्यापीति तदर्थः। यद्यपि सामान्यतः क्रयमात्रविधायकवचनाभावेनाजया क्रीणाति वाससा क्रीणातीत्येवं गुणविशिष्टस्यैव क्रयस्य श्रवणेनैकगुणावरुद्धे गुणान्तरानिवेशेन क्रयभेदस्यावश्यकत्वात्, अन्यत्र कथञ्चिदुपपादनेऽपि प्रकृते क्रयानुवादेनारुणैकहायन्याद्यनेकगुणविधानासम्भवेनास्य क्रयान्तरत्वावश्यकत्वाच्च तस्यापि विधेयत्वे तत्करणिकायां भावनायां सोमेन यजेतेतिवदरुणादिपदानां मत्वर्थलक्षणया क्रयपरत्वेनान्वयस्य वक्तव्यतया न श्रूयमाणा तृतीयाश्रुतिरारुण्यनिष्ठं करणत्वं बोधयितुमलम्; अथापि विशिष्टक्रयविधानेऽपि आरुण्येन क्रयं भावयेदिति कल्प्यमाने विशेषणविधावेवास्य तृतीयाश्रुत्या क्रयांगत्वमिति ध्येयम्। नन्वारुण्यस्य गुणस्य द्रव्यविनिमयरूपक्रयसाधनत्वयोग्यताया अभावेन तद्भावनायामनन्वयादरुणयेति पदं वाक्यात्पृथक्कृत्य तद्योग्यताऽनुसारेणारुण्येन द्रव्यं परिच्छिन्द्यादित्येव पदाध्याहारेण वाक्यार्थो वक्तव्यः। तथा च प्राकरणिकसर्वद्रव्याङ्गत्वमेवारुण्यस्य, न तु क्रयाङ्गत्वमित्याशंक्य परिहरति न चेति। तदुपपत्तेरिति। एकवाक्यघटकत्वेन प्रतीयमानस्य पदस्य पृथक्करणस्यायुक्तत्वात् क्रयकरणत्वयोग्यताया

**व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या । तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम् । स्वरूपे आनर्थक्यात् । व्रीहिषु प्रोक्षणं विनाऽनुपपत्त्यभावात् । किंत्वपूर्वसाधनत्वप्रयुक्तं—यदि व्रीहिषु**

---

अभावेऽपि अयोग्यतानिश्चयाभावमात्रेण शाब्दबोधसम्भवेन पश्चादुपपत्तिजिज्ञासायां साक्षादसम्भवेऽपि द्रव्यपरिच्छेदद्वारोपपादयितुं शक्यत्वात् तत्र च स्वान्वयिभावनाऽन्वितद्रव्यलाभेन द्रव्यान्तरपर्यन्तानुधावनस्यायुक्तत्वादेकहायनीरूपद्रव्यस्येतरव्यावर्तनरूपपरिच्छेदद्वारा क्रयाङ्गत्वमेवास्य सम्भवतीति भावः ।

द्वितीयां विभक्तिश्रुतिमुदाहरति **व्रीहीनिति** । **द्वितीयाश्रुत्येति** । द्वितीययोद्देश्यत्वेऽवगते समानपदोपात्तस्य प्रोक्षणस्य भावनायां करणत्वेनान्वयात् व्रीहिनिष्ठोद्देश्यतानिरूपितकृतिकारकतायाः प्रोक्षणे बोधात् द्वितीया व्रीहीणामङ्गित्वबोधनमुखेन तस्याङ्गत्वं बोधयतीत्यर्थः । ननु यागहोमादेर्द्रव्यमन्तरोत्पत्त्यसंभवात् व्रीह्यादेस्तत्स्वरूपार्थत्वं वक्तुं शक्येतापि । प्रोक्षणस्य व्रीहिजनकत्वस्यैवासिद्धत्वेन द्वितीयाश्रवणेऽपि बाधाद्व्रीहीणामुद्देश्यत्वेन बोधासम्भवात्कथं व्रीह्यङ्गत्वं प्रोक्षणस्य ? वाक्यार्थो वक्तव्य इति चेत् सक्तुन्याय एवानुसन्धीयतामित्यताह **तच्चेति** । **व्रीहिस्वरूपार्थम्** व्रीहिस्वरूपोद्देश्यकम् । स्वरूपोत्पादकत्वाभावरूपानर्थक्यसत्त्वेऽपि यथा कुठारमुद्यच्छति निपातयतीत्यादौ कुठारस्योद्यमनाद्यजन्यस्यापि च्छेदनसाधनत्वेनोद्देश्यत्वम् , तथा प्रोक्षणविशिष्टानामेव व्रीहीणां यागसाधनत्वाभ्युपगमेन व्रीहीणामुद्देश्यत्वमित्यपि नेत्याह **व्रीहीति** । **अनुपपत्त्यभावादिति** । व्रीहीणां तण्डुलपुरोडाशादिनिष्पत्त्यैव यागसाधनत्वेन प्रोक्षणमन्तरेणैव तन्निष्पत्त्या प्रोक्षणविशिष्टत्वेन रूपेण यागसाधनत्वस्य वक्तुमशक्यत्वात्स्वरूपे आनर्थक्यमेवेति । एवमाशङ्कां विशदीकृत्य वक्तव्यमाह **किन्त्विति** । **अपूर्वसाधनत्वप्रयुक्तम्** अपूर्वसाधनत्वावच्छिन्नोद्देश्यकम् । व्रीहित्वेन व्रीहीणामु-

प्रोक्षणं क्रियते तदा तैर्यागे अनुष्ठितेऽपूर्वं भवति नान्यथेति । अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यत इति । एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यम् ।

---

द्देश्यत्वासम्भवेऽपि अपूर्वस्यादृष्टरूपस्य प्रोक्षणं विनाप्युत्पत्तौ प्रमाणाभावेन तत्साधनत्वेनोद्देश्यत्वसम्भवादिति भावः । ननु यागो ह्यपूर्वसाधनं न व्रीहयः । ततो विशदयति यदीति । यागेऽनुष्ठित इति । तथा चापूर्वसाधनयागसाधनत्वेनोद्देश्यत्वमभिसंहितमिति भावः । ननु व्रीहीणां लोकेऽप्युपयोगेन जुह्वादेरिवाव्यभिचरितक्रतुसम्बन्धाभावादपूर्वसाधनत्वेन व्रीहीणामुद्देश्यत्वं न सम्भवति । किञ्चैवमाज्यसान्नाय्यादीनामपि यागसाधनत्वाविशेषात् तेष्वपि प्रोक्षणं स्यात् । व्रीहित्वातिरिक्तधर्मवाचकपदाभावेन तथोक्त्यसम्भवश्चेत्यत्र तत्परिहारेणोपसंहरति अत इति । अनारभ्याधीतस्थल एवाव्यभिचरितक्रतुसम्बन्धापेक्षा । इह तु प्रकरणस्य क्रतुसम्बन्धबोधकस्य सद्भावेन नापूर्वसाधनत्वावगत्यसम्भव इत्यभिप्रेत्य प्रकरणेत्युक्तम् । तर्हि प्रकरणादेवाङ्गाङ्गिभावो न श्रुत्येति शङ्कावारणाय तत्सहकृतया द्वितीयाश्रुत्येति । अपूर्वसाधनत्वावगतिमात्र एवेह प्रकरणोपयोगः । नाङ्गत्वेऽपीति भावः । तण्डुलनिर्वृत्तिप्रणाड्या तद्द्वारा । तथा चापूर्वकारणीभूतयागनिर्वर्तकप्रदेयप्रकृतितण्डुलप्रकृतित्वेन रूपेणोद्देश्यत्वं विवक्षितमिति नाज्यादावतिप्रसङ्ग इति भावः । तदङ्गत्वमुच्यत इत्यनेनान्वयानुपपत्त्या व्रीहिपदस्योक्तधर्मावच्छिन्नलक्षकत्वमभ्युपगम्यत इति न बोधकपदाभाव इति सूचितम् । न केवलमदृष्टार्थेषु, दृष्टार्थेष्वपि त्वपूर्वसाधनत्वं विवक्षणीयम् । न हि यागहोमादिकं द्रव्यापेक्षमपि व्रीह्यादिकमेवापेक्ष्योत्पद्यत इति वक्तुं युक्तम् । अतस्सर्वत्रापूर्वसाधनत्वविशेषणैवोद्देश्यत्वं वक्तव्यमित्याह एवमिति ।

एवमिमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् । यत्तु वाक्यीयोऽयं विनियोग इति तन्न । तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं भवति तावल्लिङ्गाद्रशनामात्राङ्गत्वमेव स्यात् । स्योनं ते सदनं कृणोमीत्यस्येव सदनाङ्गत्वम् । श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्राङ्गत्वं सम्भवति तावच्छ्रुत्या 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववदश्वाभिधान्यां विनियोगः क्रियत इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम् । तस्माच्छ्रौत एवायं विनियोगः ।

---

द्वितीयाश्रुतेरुदाहरणान्तरमाह एवमिति । चयनेऽश्वाभिधानी गर्दभाभिधानी च स्तः । अभिधानी रज्जुः । इमामगृभ्णन् रशनामृतस्येति मन्त्रस्सामान्यतो रशनाग्रहणं प्रकाशयन् सामर्थ्यानुरोधेन तयोरुभयोरपि प्रसक्तनिवेशो भवति । ततः प्रागेवायं विधिरश्वाभिधानीमुद्दिश्य प्रकृतमन्त्रपूर्वकादानं विदधानः आदानद्वारा मन्त्रस्याश्वाभिधान्यङ्गत्वमवगमयति । तत्र येन प्रमाणेन विधिनाऽश्वाभिधान्यङ्गत्वं बोध्यते, तत् व्रीहीन् प्रोक्षतीत्यादाविव द्वितीयारूपमेव । तदाह इमामिति । अत्र मन्त्रस्याङ्गत्ववाचिन्यास्तृतीयाया अभावात् इतिकरणेनैव तदङ्गत्वावगमात् तस्य चाश्रुतित्वाद्वाक्यीयोऽयं विनियोग इति केचिदाहुः तन्निरासायानुवदति य त्त्विति । लिङ्गादिति । इमामगृभ्णन्निति मन्त्रगताद्रशनाप्रकाशनसामर्थ्यादित्यर्थः । रशनामात्राङ्गत्वम् रशनासामान्याङ्गत्वम् । एवकारः केवलाश्वाभिधान्यङ्गत्वव्यवच्छेदार्थः । स्वपक्षे नैष दोष इत्याह श्रौतेति । युक्तमिति । ननु वाक्यीयविनियोगपक्षेऽपि यथा 'यद्यप्यन्यदेवत्यः पशुस्तथाऽप्याग्नेय्येव मनोता कार्या' इति वाक्यानर्थक्यपरिहाराय 'त्वं ह्यग्ने प्रथमो मनोते'ति मन्त्रस्याग्निप्रकाशकत्वरूपं लिङ्गं परित्यज्या-

यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः ।

पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्ग-

ग्नीषोमदेवताप्रकाशकत्वकल्पनेन वाक्यस्य विनियोजकत्वम् , तथा प्रकृत-वाक्यानर्थक्यपरिहाराय सामान्यतो रशनाप्रकाशकस्यापि अश्वरशनामात्रवि-षयकत्वकल्पनेन विनियोग इति कथमयं दोष इति चेत् सत्यम् । श्रुत्या विनियोगस्यासम्भवे हीदमनुसर्तव्यम् । इह तु द्वितीयाश्रुतिरस्तीति किम-र्थोऽयं प्रयासः । यदि त्विहाश्वाभिधान्यादानमेवोद्दिश्य मन्त्रविधिरिति स्या-त्, तदा द्वितीयातृतीयाद्यभावादेष पक्षः परिग्राह्यः स्यात् । तत्तु न; द्वितीययाऽश्वाभिधान्या एवोद्देश्यत्वात् । अन्यथा विशिष्टोद्देशे वाक्यभेद-प्रसङ्गात् । अतः श्रौत एवेति भावः । एवं प्रकरणगतामङ्गत्ववाचिनीं च श्रुतिं प्रदर्श्य करणत्वेनाङ्गत्वं व्युत्पाद्यानारभ्याधीतया तयाऽधिकरणत्वेन तत् व्युत्पादयति यदिति । जुहोतीत्यनेन प्रमाणान्तरप्रमितं होमसामा-न्यमुद्दिश्याऽऽधानजन्यापूर्वावच्छिन्नाग्निरूपस्याऽऽहवनीयस्याधिकरणत्वेन वि-धानादिह तत्प्रति सोऽङ्गम् । न चानारभ्याधीतत्वे प्रकरणादिसामान्यसम्ब-न्धबोधकप्रमाणाभावेन स्वरूपे आनर्थक्यापरिहारात् कथमेवं विधातुं शक्य-मिति शङ्क्यम् । होमस्यापूर्वसाधनत्वस्य विस्पष्टत्वेन प्रमाणान्तरमनपेक्ष्यैव तद्विधानसम्भवादिति । एवमन्योऽपीति । अग्नये कृत्तिकाभ्यः पुरोडा-शमष्टाकपालं निर्वपेदित्यत्र चतुर्थ्या , आग्रयणात् गृह्णातीत्यत्र पञ्चम्या , राजा राजसूयेनेत्यत्र प्रथमयेति रीत्येत्यर्थः ।

अथ समानाभिधानश्रुतिमुदाहरति पशुनेति । कारकाङ्गत्वमि-ति । उपादेयगतत्वेन विवक्षितयोरेकत्वपुंस्त्वयोर्वस्तुतः प्रातिपदिकार्थनि-ष्ठत्वेऽपि तत्र प्रातिपदिकार्थे एतदन्वयं यावत्तस्य कारकेऽनन्वयमङ्गीकृत्य पश्चात् तस्य कारकेऽन्वये स्वीक्रियमाणे प्रसजतो विलम्बस्यायुक्तत्वात्, प्रातिपदिकार्थापेक्षया कारकस्य प्रधानत्वात् , प्रकृतश्रुत्या तस्य शीघ्रमुप-

त्वम् । यजेतेत्याख्याताभिहितसङ्ख्याया भावनाङ्गत्वं समानाभिधानश्रुतेः । एकपदश्रुत्या च यागाङ्गत्वम् ।

न चामूर्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम् । कर्तृपरिच्छेदद्वारा तदुपपत्तेः । कर्ता चाक्षेपलभ्यः । आख्यातेन हि भावनोच्यते । सा च कर्तारं विनाऽनुपपन्ना तमाक्षिपति ।

---

स्थितत्वाच्च तस्मिन्नेवानयोः सामानाधिकरण्येनान्वय इति तद्विशेषणत्वादनयोस्तदङ्गत्वम् । एवं क्वाचित्कीं समानाभिधानश्रुतिमुदाहृत्य सर्वविधिस्थले स्थितां तामाह यजेतेति । सुबुपात्तत्वे समानाभिधानश्रुत्यभावादाख्याताभिहितेति ।

अन्तिमां श्रुतिमत्रैव दर्शयति एकपदेति । अर्थभावनान्वितानां सर्वेषामपि यथायोगं यागसम्बन्धस्यापि पार्ष्ठिकत्वादिदमेकत्वं तत्र सम्बध्नातीत्यस्य तदङ्गत्वम् । नन्विदमेकत्वं यथा न भावनानिष्ठं तथा न यागनिष्ठमपि ; यागैक्येऽपि यजेयातां यजेरन्निति द्वित्वादिसंख्याया अपि दर्शनेन बाधात् । अतोऽन्यनिष्ठमेवेदमिति न तस्य यागेन सम्बन्धः । यदि पुनरेतन्निष्ठमपि दध्यादिवन्मूर्तं स्यात् । तर्हि तेनान्वेतुं शक्नुयात् । न चैवम् । अतो नास्य यागाङ्गत्वमित्याशंक्य परिहरति न चेति । कर्तृपरिच्छेदद्वारेति । संख्यायाः साक्षाद्यागसम्बन्धाभावेऽपि तस्याः कर्तृपरिच्छेदकत्वस्य कर्तुः संख्यान्तरावच्छिन्नाद्व्यावर्तकत्वस्य संभवात् तत्परिच्छिन्नस्य कर्तुश्च यागसम्बन्धसत्त्वेन परम्परया यागाङ्गत्वमुपपन्नमित्यर्थः । ननु यदि कर्ताऽप्युपात्तः स्यात्, तर्हि आरुण्यस्यैकहायनीरूपद्रव्यपरिच्छेदमुखेन क्रयाङ्गत्ववत् कर्तृपरिच्छेदमुखेन यागाङ्गत्वं स्यात् । तदेव तु नेत्यत्राह कर्ता चेति । आक्षेपलभ्य इति अन्यथाऽनुपपत्तिरूपप्रमाणगम्य इत्यर्थः । तथा चोपात्तत्वाभावेऽपि गम्यत्वमात्रेण परिच्छेदकत्वं सम्भवति । वक्ष्यमाणरीत्या गम्यस्यापि लक्ष्यत्वे तु सुतरामिति भावः । आक्षेपं दर्शयति आख्यातेनेति । अनुपपन्नेति । भावनायाः कृतिरूपत्वेन तस्याः किञ्चिदाश्रितत्वावश्यंभावेनाश्रयापेक्षित्वादिति भावः ।

ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्तेति । आख्यातवाच्य एव किं न स्यात् । आख्यातश्रवणे भावनाया इव कर्तुरपि प्रतिपत्तेः । न च भावनयैवाक्षेपसंभवे किमिति तद्वाचकत्वं कल्पनीयमिति साम्प्रतम् । तथा सति आख्यातवाच्यकर्त्रैव भावनाक्षेपसंभवे तद्वाचकत्वमपि न स्यात् । किं च भावनाया न केवलं कर्त्रैव संबन्धः, कारकान्तरेणापि संबन्धात् । अतः सा न झटिति कर्तारमेवाक्षिपेद्विशेषाभावात् । कर्तुस्तु भावनयैव संबन्धो न कारकान्तरेण 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति न्यायात् ।

---

एवमाक्षेपलभ्यत्वं कर्तुर्वर्णयन्तं तस्याख्यातेन वाच्यत्वमातिष्ठमानो वैयाकरण आक्षिपति नन्विति । किन्न स्यात् कुतो न स्यात् । स्यादेवेति यावत् । ननु योऽर्थः शब्दे श्रूयमाणे नियमतः प्रतिपन्नो भवति स एव तदर्थ इति चेत् तत एव कर्ता वाच्यः । तदाह आख्यातेति । ननूभयोरपि प्रतिपद्यमानत्वेऽपि उभयत्र शक्तिकल्पने गौरवाद्भावनायां शक्तिं स्वीकृत्य स आक्षिप्यत इत्याशंक्य परिहरति न चेति । अस्य सांप्रतमित्यनेन सम्बन्धः । न स्यादिति । तथा च विनिगमकाभावादुभयस्यापि वाच्यत्वमेव कल्पनीयं स्यात् । न तु कर्तुरवाच्यत्वमिति भावः । ननु कृतित्वमपेक्ष्य कृतिमत्त्वरूपकर्तृत्वस्य शक्यतावच्छेदकत्वे गौरवमिति विनिगमकसत्त्वाद्भावनावाचित्वमेवेति शङ्कां तदसम्भवोपपादनमुखेन स्वपक्ष एव विनिगमकं दर्शयन् परिहरति किञ्चेत्यादिना । कारकान्तरेणापि कर्मकरणादिना कर्तृभिन्नकारकेणापि सह । कर्तारमेवेति । कदाचित् कर्तारं झटित्याक्षिपेत् कदाचित् कर्मेत्यनियम इति भावः । स्वपक्षे तु कर्त्रा भावनाक्षेपः सुकर इत्याह कर्तुरिति । गुणानामिति । यथाऽग्निसमिन्धनरूपैककार्यकारित्वाविशेषान्निविन्मन्त्राणां सामिधेनीनां च न परस्परमुपसर्जनोपसर्जनिभावः सम्बन्धः, तथा कारकान्तराणां कर्तुश्च भाव-

अतः स झटिति तामाक्षिपेदिति स एवाख्यातवाच्यः । भावना तु आक्षेपलभ्यैव किं न स्यात् । किञ्चैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्, तेषामपि कर्तृवदाक्षेपलाभसंभवात् ।

---

नां प्रत्येव मुख्यविशेषणत्वेन मिथः सम्बन्धाभावात् कर्ता स्वान्वयिनीं भावनामेवाक्षेप्तुमलमिति भावः । आक्षेपलभ्यैवेत्यनन्तरमितीत्यध्याहर्तव्यम् । किन्न स्यादिति । अत्र धात्वर्थातिरेकिणी भावना नाम सर्वकारकविशेष्यभूता समस्तीति भवन्मतमभ्युपगम्य तावदेतावदुच्यते । वस्तुतो धातुनैव फलावच्छिन्नव्यापारवाचिना भावनाया अप्युक्तत्वात् तत्रैव व्यापारे कर्तुरन्येषां चान्वय इति न मे किञ्चिदाक्षेपणीयमिति गूढोऽभिसन्धिः । नन्वस्तु सर्वेषामेव कारकाणां भावनायां सम्बन्धः । तावता किं कर्त्राक्षेपकत्वं न भविष्यति ? भविष्यति ; अथापि न झटितीति चेत् अविशेषाद्युगपदेवान्यानीव कर्तारमप्याक्षेप्स्यति । भवतु वा क्रमेणाक्षेपः । तावताऽपि किं हीयते । यथाख्याताभिहित एव कालेऽन्वयमलभमाना संख्याऽऽक्षेपणीयमर्थं प्रतीक्षते, तथा कर्मादावाक्षिप्तेऽपि कर्त्राक्षेपं यावत् प्रतीक्ष्य तेनैव सम्भन्त्स्यते । यदि तु कदाचित् कर्त्रा, कदाचिदन्येन भावनायाः सम्बन्ध इति स्यात्, स्यात् तर्हि कर्तुः कदाचिदनाक्षेप इति । न त्वेतदस्ति । अतो न किञ्चिदाक्षेपलभ्यत्वे दूषणम् । अत आह **किञ्चैवमिति** । **आक्षेपलाभसम्भवात्** । आक्षेपेण लाभसम्भवात् । ननु सामान्यतः सर्वेषां कारकाणामाक्षेपेऽपि तद्विशेषपरिज्ञानाय काष्ठस्थाल्यादिविशेषवाचकपदान्यावश्यकानि । तदुपरि यदि करणाद्यर्थिका विभक्त्यो न स्युः, तर्हि कर्मेदं करणमिदमिति विवेको न स्यात् । अतो विभक्तीनां कारकवाचित्वमावश्यकम् । एवमपि विभक्तीनां तात्पर्यग्राहकत्वमेव स्यादिति चेत्, सोऽयमनाक्षेपपक्षेऽपि तुल्यः प्रश्नः । अतः श्रूयमा-

किंच यदि कर्ता न वाच्यः स्यात्कथमेकत्वं तेनान्वियात् । न हि शाब्दमशाब्देनान्वेतीति युक्तम् । अन्यथा ऊहादिलोपप्रसङ्गः । किं च देवदत्तः पचतीति सामानाधिकरण्यं न स्यात् । न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते, एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यत एव ।

---

णानां विभक्तीनां विभक्तित्वाकारेणार्थान्तराभावाद्युक्तं तद्वाचित्वमङ्गीकर्तुम् । अन्यथा भवद्वार्तिककारमते कर्तुराख्यातेनैवोपात्तत्वेन प्रथमाया अभिहितकारकवाचित्वमपि न सिद्ध्येत् । अतो दोषान्तरमाह किं चेति । न हीति युक्तमित्यनेन सम्बध्येत । शाब्दं शब्दज्ञानजन्योपस्थितिविषयः । अशाब्देन अतथाभूतेन । युक्तमिति । संसर्गताविलक्षणविषयतासंम्वन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति शब्दजन्योपस्थितेर्विषयतासम्बन्धेन हेतुत्वात् । अपरथा शब्दश्रवणोपस्थिततदाश्रयगगनादेरपि शाब्दे भानापत्तेरिति भावः । अन्यथेति शाब्दस्याशाब्देनाप्यन्वय इत्यर्थः । ऊहादीति । आग्नेयादितः सौर्येऽप्यादावतिदिष्टे अग्नये जुष्टं निर्वपामीत्यादिमन्त्रे सूर्याय जुष्टं निर्वपामीति सूर्यादिपदप्रक्षेपस्य लोपः स्यात् । अशाब्देनापि सूर्येण जुष्टं निर्वपामीत्यर्थस्यान्वयसम्भवादिति । आदिना शब्दाध्याहारसंग्रहः । ननु न ब्रूमः संख्यायाः कर्त्रान्वय इति । अपि तु भावनयैव । पश्चात् तु तस्याक्षेपलभ्यस्य तत्परिच्छेद्यत्वं कल्प्यत इति नैष दोषः । अतो दोषान्तरमाह किञ्च देवेति । आश्रयमात्रवाचित्वपक्ष इव विशेषणतया भावनावाचित्वपक्षेऽपि न सामानाधिकरण्यहानिरिति केवलमिति । एकार्थनिष्ठत्वाभावात् । एकार्थवाचित्वाभावात् । तथा च 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति युष्मदि तिङ्पदसामानाधिकरण्याभिधायिसूत्रविरोध इति भावः । नन्वरुणयैकहायन्येत्यत्रारुणापदस्य गुणमात्रवाचित्वेऽपि यथा सामानाधिकरण्यव्यवहारः,

लः कर्तरीति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव । किं च कर्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः । तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता, आख्यातेन कर्ता नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव । कर्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति, तस्या अनभिहिताधिकारत्वात् । देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव , प्रथमाया अभिहितकारकविभक्तित्वात् , प्रातिपदिकार्थमात्रवाचित्वाद्वा ।

न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात् प्रथमावैयर्थ्यम् । लिं-

---

तद्वदिहापि स्यात् । अतोऽन्यदाह ल इति । ' लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रम् । तत्र चेन कर्तरि कृदित्यतः कर्तरीत्यनुषज्यते । अतः सकर्मकेभ्यो धातुभ्यो लकाराः कर्मणि कर्तरि च स्युः । अकर्मकेभ्यो भावे कर्तरि चेति तदर्थः । एवं च तिबादीनां लादेशत्वेन कर्त्रर्थकत्वं स्मृत्युक्तमिति भावः । **स्पष्ट एवेति** । युष्मद्युपपद इति स्मृतिविरोधः किंचिदुपपादनापेक्षित्वादस्पष्टः ; अयं तु स्पष्ट एवेति भावः । अथ वाक्यानुपपत्तिं दर्शयति **किं चेति** । यद्यप्यनभिधानस्य निमित्तत्वमेव न सम्भवति; तिङा कर्तुरभिधानस्य कदाऽप्यनुपगमादिति दोष उद्भावयितुं शक्यते , अथापि तिङ्कृत्तद्धितसमासैरनभिहिते इत्यर्थस्य वक्तव्यतया कृदादिपरिग्रहेणापि निमित्तोपपादनं सम्भवतीति न स उद्भावितः । ननु कर्तृकरणयोस्तृतीयेत्येतावदेवास्ति । न पुनरभिधानानभिधानादिकमपि दृश्यत इत्यत आह **तस्या इति** । अनभिहित इत्यधिकारसूत्रस्येहापि सम्बन्धादनभिहितयोरिति लभ्यत इति भावः । **अभिहितकारकविभक्तित्वादिति** । अभिहिते प्रथमेति वार्तिकादिति भावः । पाणिनिमतेनाह **प्रातिपदिकेति** । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रादिति भावः । **प्रथमावैयर्थ्यमिति** । सा न प्रयोक्तव्येति भावः । लिङ्गा-

गसंख्याप्रतिपत्त्यर्थं तस्यावश्यकत्वात्। केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च । ततश्च यदि कर्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात् । तस्मादाख्यातवाच्यः कर्तेति सिद्धमिति पूर्वपक्षसंक्षेपः ।

अत्राहुः—स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते, अनन्यलभ्यः शब्दार्थ इति न्यायात् । अत एव न गंगापदस्य तीरमर्थः लक्षणयैव प्रतिपत्तिसम्भवात् । अत एव च न वाक्यार्थे

---

देरपि प्रातिपदिकार्थत्व आह केवलेति । तथा च तस्याः प्रयोग आवश्यके सुबर्थस्यैव क्रियायामन्वयदर्शनेनेहापि प्रातिपदिकार्थस्यापि तदर्थत्वमभ्युपगम्यत इति भावः ।

अत्राहुरिति । अस्मिन् वैयाकरणपूर्वपक्षे सिद्धान्तिनः समाधानमाहुरित्यर्थः । पचति पाकं करोतीति धात्वर्थात् पाकात् पृथग्विवरणानुरोधेनाख्यातार्थत्वेन कृञर्थो भावनापरपर्यायो वक्तव्यः । तथा संख्यादेरिव कर्तुरपि प्रतीतिरस्ति। तत्र नानाशक्तिकल्पने गौरवादेकत्रैव शक्तिस्वीकार्या । अन्यप्रतीतिस्तु प्रकारान्तरेण निर्वाह्या । कर्तुश्चान्यथा प्रतीतिर्निर्वहतीत्याह स एव हीति। अनन्यलभ्यश्शब्दार्थ इति । वृत्त्यन्तरेण संसर्गमर्यादया आक्षेपेण वा यो न लभ्यस्स शब्देन शक्त्योपस्थापनीय इत्यर्थः। तत्र वृत्त्यन्तरसंभवे शक्त्यकल्पनं दर्शयति अत एवेति। तीरमर्थ इति। गङ्गायां घोष इत्यादाविति भाव्यम्। लक्षणयेति। गौणस्थलं दर्शयिष्यति। संसर्गमर्यादया लाभस्थले तद्दर्शयति अत एव चेति। प्रत्येकं पदार्थोपस्थितौ समभिव्याहारबलादेव परस्परसंबन्धस्य प्रत्येतुं शक्यतया न शाब्दबोधविषयविशिष्टार्थे काचिच्छक्तिर्वाक्यनिष्ठत्वेन कल्पनीयेति भावः। इदं वैयाकरणानभिमतमपि युक्तिसिद्धत्वादङ्गीकर्तव्यमित्युक्तम् । अन्यथागङ्गपदेपि तीरे शक्तिकल्पनाप्रसंगादिति । एष सार्वत्रिको न्याय इहापि न प्रसर्तव्य

शक्तिः । एवं चाख्यातवाच्यभावना कर्तारं विनाऽनुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम् ।

न च विनिगमनाविरहः । कृतिमान् हि कर्ता । एवं च कृतेरेव भावनापरपर्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवे न तद्वतः कर्तुर्वाच्यत्वं कल्पनीयम्, गौरवप्रसङ्गात् ।

---

इत्याशयेनाह एवं चेति । किमितीति । किं कारणमस्तीतीत्यर्थः । कुत इति यावत् । प्रथमशङ्कितं विनिगमनाविरहं परिहरति न चेति । कर्तेति । कर्तृपदार्थ इत्यर्थः । कृतेर्वाच्यत्वे भावनावाच्यत्वोक्तिर्गतेति भ्रमवारणाय भावनापरपर्यायाया इति । आकृत्यधिकरणेति । गवादिशब्दानां व्यक्तिमात्रवाचित्वे गौरश्व इत्यादिषु परिच्छिन्नार्थप्रतीतिर्न स्यादिति गोत्वाश्वत्वादिधर्मविशिष्टव्यक्तिवाचित्वमाश्रयणीयम् । तत्र 'नागृहीतविशेषणा बुद्धिर्विशिष्टे प्रवर्तते' इति न्यायेन जातिबुद्धिमात्रे शब्दशक्त्योत्पादिते तन्नियतव्यक्तीनामाक्षेपत एव लाभसम्भवेन न तत्रापि शक्तिविषयत्वं कल्प्यत इति विशेषणमात्रवाचित्वमेव शब्दानामित्याकृत्यधिकरणार्थः । सम्भव इति । विशेषणमात्रस्य शब्दवाच्यत्वं क्वचिद्बाधकसत्त्वान्न सम्भवति यथा कृत्सु । तत्र सत्त्वप्रधानानि नामानीति स्मृत्या विशिष्टद्रव्यवाचितायाः सिद्धत्वात् । एवं बाधकाभावे सति आकृत्यधिकरणप्रवृत्तिसंभवेन प्रकृते कृतेः परमाख्यातवाच्यत्वं सम्भवति । विशिष्य भावप्रधानमाख्यातमिति स्मृतिराख्यातप्रत्ययार्थेषु भावनाया मुख्यविशेष्यत्वमभिदधती तस्या वाच्यत्वपक्षमुपष्टम्भयतीति भावः । गौरवप्रसङ्गादिति । धर्म्यंशेऽपि शक्तिविषयत्वकल्पनरूपगौरवापत्तेरित्यर्थः । न च कृतिमात्र प्रत्ययार्थः । अपि त्वाश्रयमात्रम् । कृतिस्तु फलानुकूलव्यापारेष्वन्तर्भूता धातुनैवोपात्तेति वाच्यम् । पचति पाकं करोतीति विवरणे पाकपदस्य फलानुकूलव्यापारपर्यन्तवाचितया ततः पृथग्विव्रियमाणायाः कृतेर्धातुना बोधाभावेना-

न च भावना कारकान्तरेणापि सम्बद्धा तदुज्झित्वा न झटिति कर्तारमाक्षिपतीति वाच्यम् । सा हि यथा नियमेन कर्त्रा सम्बद्धा, न तथा करणादिकारकान्तरेण, तिष्ठतीत्यादिषु तया तदनाक्षेपात् । अतः प्रथमं सा कर्तारमेवाक्षिपति न कारकान्तरम् । अत एव चाख्याताभिहिता संख्या न कारकान्तरेण सम्बद्ध्यते, तस्य प्रथममनुपस्थितेः । अत एव तृतीयादिविभक्तीनां करणादिवाचित्वम्, भावनायास्तैः सह नियतसम्बन्धाभावेन तया तेषां नियमेनानाक्षेपात् । आख्यातश्रवणात् प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जाय-

---

ख्यातार्थत्वावश्यकतया केवलाश्रयस्य तदर्थत्वासम्भवादिति । यदुक्तं भावनाया झटिति कर्त्राक्षेपकत्वं न नियतमिति तदेव नेत्याह न चेति । कर्तारम् । कर्तारमेव । कुत इत्यत्राह तिष्ठतीति । तदनाक्षेपादिति । नन्वेवं भावनायाः करणाकांक्षेह नास्तीति कथं सर्वत्र तस्या अंशत्रयाकांक्षित्वमिति चेत् नैवम् । तृतीयाद्युपात्तं हि करणत्वादिकं धात्वर्थनिरूपितम् । अतो यो धात्वर्थः करणादिविशिष्टः तद्भावनैव तत्करणादिकमाक्षिपेत् । भावनायां तु धात्वर्थः करणत्वेनान्वेष्यति । तस्य प्राप्तत्वेऽस्त्वन्यद्वाक्योपात्तमिति न कचिद्भावनायाः करणाभाव इति । अत एवेति । यद्यपि कर्मणि प्रत्ययस्थले पच्यत इत्यादावपि प्रत्ययेन भावनाप्रतीतेरिष्टत्वेन तत्र कर्त्राकांक्षायाः प्राथमिकत्वेऽपि न संख्यायास्तत्रान्वयः ; अपि तु कर्मण्येव । अतः प्रयोगानुसारेणैव संख्यान्वयः समर्थनीयः । अथ वा कर्तुः प्रत्ययेन लक्षणाया वक्ष्यमाणत्वात् कर्मप्रत्ययस्थले च कर्मण एव लक्षणात् संख्या समानाभिधानश्रुत्युपात्ते कारक एव सम्बध्यते नान्यत्रेत्युक्त्वा कारकान्तरान्वयः परिहरणीयः । अथापि कर्तरि प्रयोगे सम्भवमात्रेणेदमुक्तमिति ध्येयम् । यदुक्तमाक्षेपत एव करणादिज्ञानान्न तृतीयादेः करणादिवाचित्वमिति तद्दूषयति अत एवेति । ननु नियतसम्बन्धाभावे कदाचिदप्याक्षेपो न स्यात् । अतो यो धात्वर्थः करणाद्यपेक्षस्तद्भावनायास्तत्करणस्य च

मानत्वाच्च। न च शाब्दी संख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम्। कर्तुर्लक्षणाङ्गीकारात्। यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति, एवं लक्षितः कर्ता एकत्वेनान्वेष्यति। अत एव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते, कर्तुर्लक्षणात्।

न च मुख्ये सम्भवति किमिति लाक्षणिकत्वं स्वीकार्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात्।

---

नियतसम्बन्ध आवश्यक इति सा भावना नियमेन करणादिकमाक्षेप्स्यति। अतोऽनाक्षेपेण हेतुना तृतीयादेः करणादिवाचित्वं न युक्तमित्यतो हेत्वन्तरमाह आख्यातेति। लक्षणाङ्गीकारादिति। पचतीत्युक्ते कीदृग्विध इति विशेषजिज्ञासासत्त्वेन सामान्यज्ञानावश्यकत्वाय लक्षणाया अङ्गीकर्तव्यत्वादिति भावः। अन्वेष्यतीति। तथा च शक्यस्य लक्षितेनाप्यन्वयसत्त्वेन 'न हि शाब्द'मिति न्याये शाब्दपदं शब्दवृत्त्युपस्थापितार्थकमिति न दोष इति भावः। यद्यप्यर्थान्तराणामिव संख्याया अपि कार्यकारणभावकल्पनालाघवाय भावनान्वय एवेष्ट इति न कर्त्रान्वयो वक्तव्यः। न च पार्ष्ठिकं कर्तृसम्बन्धमादाय प्रकृतवाक्योपपत्तिः। तथा सति तस्यार्थिकत्वेन शाब्दबोधाविषयतया तदर्थं शाब्दत्वस्थापनाऽयोगादिति। तथाऽपि पचतीत्युक्ते कर्ता एकोऽधिको वेति संशयाभावेन शाब्दबोधस्य तादृशसंशयप्रतिबन्धकत्वाय कर्तर्येव संख्यान्वय इत्यभिप्रायेण, अथ वा शाब्दबोधविषयस्यार्थिकबोधविषयत्वं नास्तीति कर्तृविषयकशाब्दबोधाभावे एकः कर्तेत्यार्थिकान्वयोऽपि न स्यादिति शङ्कायां कर्तुर्लक्ष्यमाणत्वादार्थिकबोधस्तथा भवतीति तत्परिहारेणेदं सङ्गच्छत इति। सामानाधिकरण्यानुपपत्तिं परिहरति अत एवेति। अनन्यलभ्यशब्दार्थत्वस्य अनन्यलभ्यस्य शब्दार्थत्वं तस्य। स्थापितत्वादिति। तथा च तन्न्यायाविरोधेनैव मुख्ये सम्भवति लाक्षणिकं न स्वीकर्तव्यमिति न्यायार्थो वक्तव्य इति भावः। अयमेव चैतन्न्यायार्थः, यत् अन्यूनानतिप्रसक्तमनुगतं धर्ममादाय प्रयोग-

अन्यथा सिंहो देवदत्त इत्यपि सामानाधिकरण्यं मुख्यं स्यात्। किं च आख्यातवाच्यः कर्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम् । तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्, शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात्, देवदत्तशब्देन च द्रव्यमात्राभिधानात्। अतश्च भिन्नार्थनिष्ठत्वात् तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्, किं तु लाक्षणिकमेवेति न कश्चिद्विशेषः ।

---

विषये सर्वत्र मुख्यतयैव शब्दे उपपद्यमाने न तस्य विषयविशेषे शक्तिस्वीकारेणान्यत्र लाक्षणिकत्वमभ्युपेत्यमिति । अथ वा अस्यायमर्थः शक्त्या प्रतिपत्तव्यः, अयं लक्षणयेति निश्चिते सति स्थलविशेषे किमनेन शब्देन शक्यार्थो ग्रहीतव्य उत लक्ष्यार्थ इति विचारे शक्यग्रहणसम्भवे लक्ष्यग्रहणमयुक्तमिति । अन्यथा अनन्यलभ्यः शक्यार्थ इत्यस्याभावे । इत्यपीति इत्यत्रापीत्यर्थः । स्यादिति । तत्र गौण्या वृत्त्या सिंहशब्दस्य सिंहवृत्तिक्रौर्यसजातीयक्रौर्यवदर्थकत्वस्येष्टत्वादिति भावः । एवं च लक्षणादिवृत्तिरेवोच्छिद्येतेति तात्पर्यम् । ननु कर्तृत्वं न कृतिमत्त्वम् । अपि तु निष्कृष्टशक्तिमत्त्वरूपम् । अतस्त्वत्पक्षेऽनुगतकृतित्वावच्छिन्नायाः कृतेरिवास्मन्मतेऽनुगतशक्त्यवच्छिन्नस्य कर्तुर्वाच्यत्वं सम्भवति । एवं च सामानाधिकरण्यं सूपपादमित्यत्राह किं चेति । तृतीयावदिति । कारकाणां क्रियान्वयात् तृतीयायाः कर्तृत्ववाचित्व एव क्रियान्वयः समञ्जसो भवति, न कर्तृवाचित्व इति तृतीया शक्तिमात्राभिधायिनी । एवं चाख्यातानभिहितार्थाभिधायिन्यास्तस्यास्तदर्थकत्वे आख्यातस्यापि तदर्थकत्वमेवेति भावः । शक्तिमात्रेति मात्रपदेन तदाश्रयव्यवच्छेदः । कारकाभिधानादिति । कारकस्याभिधातव्यत्वादित्यर्थः । न्यायबलादप्येवमित्याह शक्तिमदिति । आकृत्यधिकरणन्यायेनानभिधानादिति । अनभिधानस्याकृत्यधिकरणसिद्धत्वादित्यर्थः । ननु देवदत्तपदस्य द्रव्यनिष्ठार्थकत्वान्न सामानाधिकरण्यहानिः । नेत्याह देवेति । लाक्षणिकमेवेति । द्रव्यांशलक्षणयैव निर्वाह्यमित्यर्थः । न कश्चिद्विशेष इति । शक्तेर्निष्कृष्टत्वे-

न च लः कर्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्तेति वाच्यम् । न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः । तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् । भवतु वा स्मृतिगम्यः । तथाऽपि नेयं स्मृतिः कर्तुराख्यातवाच्यत्वे प्रमाणम्, किं तु कर्तुरेकत्वे एकवचनात्मको लकारः द्वित्वे द्विवचनात्मकः बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम्। 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यनेनास्याः स्मृतेरेकवाक्यत्वात् ।

---

ऽप्याकृत्यधिकरणन्यायाविरोधाय तन्मात्रार्थकत्वस्याभ्युपगन्तव्यत्वेन सामानाधिकरण्योपपादनविषयेऽसत्पक्षाविशेष एवेति । वस्तुतः शक्तेराश्रयनिरूपकापेक्षया भिन्नतया न कृत्यपेक्षया विशेष इति कृतावेव शक्तिरुचिता । न च कृतित्वेन कृतेः शक्यत्वे गौरवात् कृतित्वस्य शक्यत्वमेव न्याय्यमिति वाच्यम् । भावप्रधानमाख्यातमिति स्मृत्यनुग्रहेण कृतेरेव शक्यत्वाभ्युपगमात् । कर्तरि शक्यत्वनिषेधमात्र एवाकृत्यधिकरणन्यायातिदेशनादिति। स्मृतिविरोधं परिहरति न चेति । साध्वसाधुशब्दविवेक एव तदधीनः, न तु वाच्यवाचकभावोऽपीति । न्यायः आकृत्यधिकरणन्यायः । नन्वर्थविशेषे प्रत्ययविशेषविधानस्यापि दर्शनेन न साधुशब्दान्वाख्यानमात्रार्थता व्याकरणस्य । अत एव 'शक्तिग्रहं व्याकरणे'त्यभियुक्तोक्तिः । न च तस्मिन्नंशे न्यायतो दुर्बलत्वम् । स्मृतेः श्रुतिमूलकत्वेन स्मृतिविरोधे न्यायस्यैव त्याज्यत्वात् । अत आह भवतु वेति । स्मृतिगम्य इति । वाच्यवाचकभाव इत्यनुषज्यते । ननु द्वित्वैकत्वादिवाचकपदाभावात् कथमयमर्थ इत्यत्राह द्व्येकयोरिति । अस्याः लः कर्मणीत्यस्याः । एकवाक्यत्वादिति । अत्र एकवचनादिसंज्ञाया आदेशनिष्ठत्वेन लकारनिष्ठत्वाभावात् तिप्तस्झीत्यादिसूत्रस्याप्येतदेकवाक्यत्वमावश्यकम् । ल इति च षष्ठ्यन्तम् । तथा च कर्तरि कर्मणि च विद्यमाने द्वित्वे एकत्वे बहुत्वे

15 N*

यत्तूक्तं कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति तन्न । तृतीया हि कर्तुः प्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा । तत्र कर्ता तु भावनाक्षेपादेव लभ्यत इति न तत्र तृतीयापेक्षा । तत्संख्या तु आख्यातेनैव प्रतीयत इति न तत्राप्यपेक्षा । यथाहुः—

---

च एकवचनाद्यात्मको लादेशभूतस्तिबादिर्भवति तथा भावकर्तृगतेऽपीत्यर्थः । नन्वेकवाक्यत्वेऽपि द्वयोः कर्त्रोर्द्विवचनम् , एकस्मिन् कर्तर्येकवचनमित्येवं कर्त्रर्थकत्वमेव । न । द्व्येकयोरित्यस्य द्वित्वैकत्वयोरित्यर्थात् । अन्यथा द्व्येकेषामिति बहुवचनप्रसङ्गात् । एतदनुरोधेन बहुष्वित्यस्य बहुत्व इत्येवार्थः । न च लाघवात् द्वित्वैकत्वयोरित्यत्र द्व्येकयोरिति प्रयोग उचितः । तद्भावाद्बहुत्व इत्येव कुतो नोक्तम् । न हि वैपुल्यार्थकत्वभ्रमव्युदासाय तदनादर इति सम्भवति । द्व्येकयोरिति समभिव्याहारादेव संख्यार्थकत्वप्रतीति सम्भवादिति वाच्यम् । तत्रापि सूक्ष्मलाघवस्य सद्भावादिति ।

नव्यास्तु—एवमेकवाक्यत्वे शानजादेः कर्त्राद्यर्थकत्वस्य प्रमाणान्तरेणालाभात् ल इत्यस्य षष्ठ्यन्तत्वे लस्येति सूत्रवैयर्थ्याच्च नैतद्युक्तम् । अपि तु लकारः कर्मणि कर्तरि च भवतीति यथाश्रुत एवार्थः । नैतावता कर्तुर्वाच्यत्वमपि शास्त्रासिद्धम् । कर्त्रादौ बोध्ये इत्येवार्थविलक्षणात् । वर्तत इत्यध्याहारेऽपि वृत्तिमात्रमेवावगम्यते , न पुनः शक्तिरिति । एवञ्च तिबादौ लक्ष्यत्वात् शानजादौ वाच्यत्वाच्च न दोष इत्याहुः ।

अन्तिममाक्षेपमनूद्य खण्डयति यत्त्वत्यादिना । देवदत्तेनेति प्रयुक्ते हि तृतीयया कर्तृकारकस्य संख्यायाश्च बोधोऽनुभवसिद्धः । तत्र देवदत्तः पचतीत्यत्र तृतीयामापादयता किं कर्तृप्रतिपत्तये सा ऽऽपाद्यते संख्याप्रतिपत्तये वा ? न द्वयमपीत्याह तृतीया हीति । भावनाक्षेपात् भावनया आक्षेपात् । आख्यातेनैव प्रतीयते आख्यातजन्यप्रतीतिविषयो भवति । अपेक्षेति । तृतीयाया इति व्यस्यानुषङ्गः ।

संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः॥ इति।

यत्र तु नाख्यातेन तद्गता संख्योच्यते तत्र भवत्येव तृतीया। यथा देवदत्तेन ओदनः पच्यत इति। तस्मान्न कर्तुरनभिधाने किंचित् दूषणमित्यलमतिविस्तरेण। प्रकृतमनुसरामः। तत्सिद्धस्त्रिविधः श्रुतिविनियोगः।

---

संख्यायामित्यादि कर्त्रधिकरणवार्तिकम्। सुब्विभक्त्या हि संख्यायां कारके वा बुद्धिरुत्पाद्यते। तदुभयमपि भावनया आक्षेपात्तिङ्रूपया विभक्त्या च शक्त्या देवदत्तः पचतीत्यत्र सिद्धमित्यर्थः। अतो वाच्यार्थभावात्तृतीयाया न प्रसक्तिरिति भावः। ननु कर्तरि प्रयोग इव कर्मणि प्रयोगेऽपि पच्यते पाकः क्रियत इति विवरणानुसारेण तिङा भावनाया वाच्यत्वेनाक्षेपादेव कर्तृलाभसम्भवात्तृतीया न स्यादित्यत्राह यत्र त्विति। इतीति। तथा च कर्तुराक्षिप्तत्वेऽपि संख्याया अलाभेन तृतीया भवतीति भावः। ननु तर्हि तत्र तृतीयया कर्तृबोधो न स्यात्। न। संख्याप्रतिपत्तये तृतीयायां प्रयुक्तायां आख्याताश्रवणेऽपि तावन्मात्रेण कर्तृकारकानुभवदर्शनेन तदर्थकत्वस्याप्यङ्गीकारात्। एवं चानभिहिते कर्तरि तृतीयायाः शास्त्रेणापादनस्येत्थं परिहारोऽभिमतः। द्व्येकयोरित्यादिनैकवाक्यत्वाभ्युपगमेन कर्तृगतं यदेकत्वादि तस्मिन्ननभिहिते तृतीयैकवचनादि भवतीत्यर्थवर्णनाददोष इति। नन्वेवं देवदत्तः पक्तेत्यत्रापि तृतीया स्यात्। तृचा कर्तुरभिधानेऽपि तत्संख्याया अनभिधानादिति यत् केषांचिदापादनम्, तन्न। यत्प्रातिपदिकोत्तरं तृतीयैकवचनादि विधित्सितम्, तत्प्रातिपदिकार्थान्वयिक्रियाप्रतिपादकपदेन कर्त्रेकत्वादेरनभिधानस्याभिप्रेतत्वात्। एवमभिसन्धायाह इत्यलमिति।

एवं कर्तुराक्षेपतो लाभसम्भवेन तत्परिच्छेदद्वारा संख्याया यागाङ्गत्वसम्भवेनैकपदश्रुतिविनियोगः साधितः। अथ कृत्स्नमुपसंहरति तदिति।

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम् । लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति, किं तु कल्प्यः । यावच्च तैर्विनियोजकः कल्प्यते तावत् प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात्तेषां कल्पकत्वशक्तिर्विहन्यते इति श्रुतेः प्राबल्यम् ।

अत एव ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यावल्लिङ्गादैन्द्र्या

---

एवं श्रुतिं निरूप्य तस्याः प्रमाणान्तरतः प्राबल्यमाह सेयमिति । सा विभक्त्यादिरूपा । इयं अङ्गताबोधिका । लिंगादिभ्य इत्यादिना वाक्यादिपरिग्रहः । विनियोजकः शब्दो द्वितीयातृतीयादिः । कल्पकत्वशक्तिर्विहन्यत इति । नन्वाकांक्षायां सत्यां लिङ्गं श्रुतिश्चोपतिष्ठेते । अनन्तरक्षणे च लिङ्गं श्रुतिं कल्पयति श्रुतिश्चाङ्गत्वमवबोधयति । एवमङ्गत्वे बोधितेऽनन्तरक्षणे तदाकांक्षाया नाशो भवतीति न तदानीमङ्गत्वबोधो लिङ्गत्वप्रयोज्यो जायते । अतश्च लिङ्गस्य श्रुतिकल्पकत्वं नास्तीति न । अपि त्वङ्गताबोधकत्वं नास्तीत्येव । एवं खल्विह सुन्दरपाण्ड्यवचनमुद्धरन्ति—

'निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च ।
एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥
आद्यसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः ।
उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥
विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात् तयोः ।
प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा' इति ।

प्राप्तिमात्रोपपादि प्राप्तिमात्रेणविलम्बेन लभ्यमित्यर्थः । तत्कथमुच्यते शब्दकल्पकत्वशक्तिर्विहन्यत इति नैवम् । कल्पकत्वशक्तेरित्यस्य विनियोगोपधायकशब्दकल्पकत्वशक्तिरङ्गत्व कल्पकत्वशक्तिरङ्गत्वबोधोत्पादकत्वशक्तिरित्येवार्थ इत्यदोषात् । अत एव वक्ष्यति 'यावत् अंगत्वं कल्प्यते' इति । एवं श्रुतेः प्राबल्यस्य फलमाह अत एवेति । ऐन्द्र्येति । 'कदा

इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत् प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री गार्हपत्योपस्थानाङ्गम् ।

सामर्थ्यं लिङ्गम् । यदाहुः—

'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति ।

तेनाङ्गत्वं यथा 'बर्हिर्देवसदनं दामि' इत्यस्य लवनाङ्गत्वम् । स हि

---

चनस्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यत' इतीयमिन्द्रप्रकाशिका ऋक् तयेत्यर्थः । इन्द्रोपस्थानाङ्गत्वं, उपस्थानद्वारेन्द्राङ्गत्वम् । एवमुत्तरत्र । क्रियते— बोध्यते । तथा च मन्त्राकांक्षायाः शान्तत्वेन मन्त्रगतमिन्द्रप्रकाशनसामर्थ्यं नेन्द्राङ्गभावं बोधयतीति । इन्द्रशब्दस्तु गार्हपत्यरूपेऽर्थे नेतव्य इति । न च मन्त्राकांक्षाभावेऽपि स्मारकाकांक्षयेन्द्रगतया मन्त्रस्याकांक्षाकल्पनेन लिङ्गादिन्द्राङ्गत्वमप्यभ्युपगन्तव्यमिति वाच्यम् । इन्द्रपदस्य यथाश्रुतार्थे तात्पर्याभावात् । ध्यानादिनाऽपि स्मृतिसम्भवेन मन्त्रस्य तेनानाकांक्षितत्वाच्चेति ।

अथ द्वितीयं प्रमाणं निरूपयति सामर्थ्यमिति । इदमेव योग्यतेत्यप्युच्यते । सर्वभावानां शब्दानामर्थानां च । अभिधीयत इतीति । तथा च यथा विश्वात्व्यादिसर्वसाधारणं श्रुतित्वम्, तदन्तर्गतायाश्च विनियोक्त्र्याः प्रकृतश्रुतित्वम्; तथा सामर्थ्यसामान्यस्य लिङ्गत्वेऽपि प्रकृतश्रुतिकल्पनानुकूलस्य शब्दनिष्ठस्यार्थनिष्ठस्य च सामर्थ्यस्य प्रकृतलिङ्गत्वमिति भावः । अङ्गत्वमिति । प्रत्याय्यत इति शेषः । इत्यस्य इति मन्त्रस्य । ननु दात्रादेरिव मन्त्रस्य लवने सामर्थ्याभावात् कथं तेन लवनाङ्गत्वम् ? तत्राह स हीति । तथा च स्रुवेणावद्यतीत्यादौ स्रुवनिष्ठसामर्थ्यस्य साक्षादेव द्रवद्रव्यावदानविषयकत्वात् स्रुवस्य तदङ्गत्वम् । यत्र तु शब्दगतं सामर्थ्यं तत्र शब्देनार्थे प्रकाशिते सोऽनुष्ठास्यत इति तदनुष्ठानोपयुक्तप्रकाशविषयकत्वेन सामर्थ्यस्य तद्विषयकत्वमिति शब्दस्य तदङ्गत्वमिति भावः । ननु लवनप्रकाशनयोग्यतासत्त्वे तदङ्गत्वमपीति को निर्बन्धः ।

लवनं प्रकाशयितुं समर्थः । तच्च लिङ्गं द्विविधम् । सामान्यसम्बन्धबोधकप्रमाणान्तरानपेक्षं तदपेक्षं च । तत्र यदन्तरेण यन्न सम्भवत्येव तस्य तदङ्गत्वं तदनपेक्षं केवललिङ्गादेव । यथाऽर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम् । न हि अर्थज्ञानमन्तरेणानुष्ठानं सम्भवति ।

यदन्तरेण यत्सम्भवति तस्य तदर्थत्वं तदपेक्षम् । यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम् । लवनं हि मन्त्रं विनाऽपि उपायान्तरेण स्मृत्वा कर्तुं शक्यम् । अतो न मन्त्रो लवनस्वरूपार्थः सम्भवति । किन्त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः । तत्त्वं च न सामर्थ्यमात्रादवगम्यते, लवनप्रकाशनमात्रे सामर्थ्यात् । अतोऽवश्यं प्रकरणादि सा-

---

अपि च लवनस्य प्रयोजनत्वाभावेनानुद्देश्यत्वात् कथं मन्त्रस्य तदङ्गत्वमिति शङ्कां परिहर्तुं लिङ्गं विभजति तच्चेति । अथ वा लक्ष्ये समन्वयः कृतः । अथ विभजति तच्चेति । सामान्यसम्बन्धो नाम विशिष्येदृशोपकाराधानेनास्य तत्सम्बन्ध इति द्वारघटनामन्तरेण सामान्यतः सम्बन्धः । तदनपेक्षमिति । सामान्यसम्बन्धबोधकप्रमाणानपेक्षलिङ्गगम्यमित्यर्थः । तदेवाह केवलेति । अर्थज्ञानस्य स्वाध्यायोऽध्येतव्य इति विधिविहिताध्ययनोद्देश्यभूतस्यार्थज्ञानस्य । कर्मानुष्ठानाङ्गत्वमिति । तत्रार्थज्ञानस्य साध्याकांक्षायां तेनानुष्ठानं भावयेदिति कल्पितविधौ तदङ्गत्वं बुद्ध्यत इति भावः । तदपेक्षमिति । सामान्यसम्बन्धबोधकप्रमाणापेक्षलिङ्गगम्यमित्यर्थः । उक्तस्य मन्त्रस्य बर्हिर्देवसदनं दामीत्यस्य । मन्त्राभावेऽपि लवनसम्भवमुपपादयति लवनं हीति । तत्त्वं अपूर्वसाधनत्वविशिष्टलवनार्थत्वम् । लवनप्रकाशनमात्रे सामर्थ्यादिति । दामीत्यस्य लुनामीत्येतावन्मात्रार्थकत्वात् अपूर्वसाधनत्वांशप्रकाशने सामर्थ्याभावादित्यर्थः । प्रकरणादीत्यादिना 'उभावामिन्द्राग्नी' इत्यादिमन्त्राणां 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादियागसम्बन्धबोधकक्रमादिपरिग्रहः ।

मान्यसम्बन्धबोधकं स्वीकार्यम् । दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्येत–अनेन मन्त्रेण दर्शपूर्णमासापूर्वसम्बन्धि किंचित्

---

ननु लवनस्यापूर्वसाधनत्वं मन्त्रस्य सामान्यसम्बन्धज्ञानात्प्रागेव ज्ञातं न वा? नाद्यः ; तथा सति तदर्थं प्रमाणान्तरापेक्षैव लिङ्गस्य न स्यात् । नान्त्यः ; मन्त्रस्य सामान्यसम्बन्धे तस्यैवापूर्वसाधनत्वं ज्ञातं भवति , न लवनस्येत्यतस्तदुपपादयति ; योग्यतासत्त्वेऽप्यङ्गत्वमनावश्यकमिति शङ्कां च परिहरति दर्शेत्यादिना । अयमर्थः । लवनप्रकाशनसामर्थ्यं तावत् विद्यमानं मन्त्रस्य लवनाङ्गत्वं बोधयितुं प्रवर्तमानं स्वरूपानर्थक्यशङ्कया प्रतिहतप्रवृत्तिकं भवति । तदा प्रकरणं मन्त्रस्य प्रधानापूर्वसम्बन्धित्वं गमयत् , ततो मन्त्रेण स्वगतापूर्वार्थत्वनिर्वाहाय द्वारविशेषे जिज्ञासिते तस्य चार्थप्रकाशकत्वस्वाभाव्येन तत्प्रकाशितार्थस्य द्वारत्वे चिन्तिते तस्यार्थस्यापूर्वसम्बन्धित्वमन्तरा द्वारत्वासम्भवात् तस्याप्यपूर्वसाधनत्वं कल्पयति । न हि मन्त्रस्य सामान्यसम्बन्धबोधकादन्यल्लवनस्यापूर्वसाधनताग्राहकं प्रमाणमस्ति । अतोऽस्याव्यभिचरितक्रतुसम्बन्धाभावादपूर्वसाधनस्यैव लवनस्य मन्त्रः प्रकाशकः इत्यत्र प्रमाणाभावेन मन्त्रस्यापूर्वसम्बन्धमन्तरा न तत्प्रकाशितार्थस्यापूर्वसम्बन्धो ज्ञातुं शक्यः । एवमपूर्वसाधनयागोपयोगिबर्हिस्संस्कारकत्वेन लवनस्योद्देश्यत्वे आनर्थक्यासम्भवात् सामर्थ्यमेवंविधलवनाङ्गत्वं मन्त्रस्यावगमयतीति । न चैवं यत्र मन्त्रप्रकाशितार्थस्याव्यभिचरितः क्रतुसम्बन्धः तत्रार्थस्यापूर्वसाधनत्वं तत एवावगतमिति तत्र सामान्यसम्बन्धबोधकप्रमाणमनपेक्षितमिति वाच्यम् । तत्रापूर्वसाधनत्वांश एतत्प्रमाणानपेक्षणेऽपि मन्त्रस्याकांक्षामुत्थापयितुमस्यापेक्षितत्वात् । न हि भारवहनसामर्थ्ये सत्यपि पुंस आकांक्षायामसत्यामस्ति तत्र विनियोगः । अतोऽपूर्वसाधनकिञ्चित्प्रकाशनसामर्थ्यं विद्यमानमपि मन्त्रं तत्र विनियोक्तुं मन्त्रगतां प्रयोजनाकांक्षां सहकारितयाऽपेक्षते । सा चाकांक्षा मन्त्राणां वाचस्तोमब्रह्मयज्ञा-

प्रकाश्यत इति । अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात् । किं तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते । तद्धि बर्हिःसंस्कारद्वाराऽपूर्वसम्बन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते । तस्माद्बर्हिर्देवसदनं दामीत्यस्य प्रकरणात् दर्शपूर्णमाससम्बन्धितयावगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम् ।

पूषानुमन्त्रणमन्त्राणां तु यागानुमन्त्रणसमाख्यया यागसामान्यसम्बन्धेऽवगते सामर्थ्यात् पूषयागसम्बन्धोऽवगम्यते ।

---

दौ वाचनिकविनियोगसत्त्वादेव शान्ता । अतः सामान्यसम्बन्धबोधकप्रकरणादिना प्रयोजनाकांक्षायामुत्थापितायामेव लिङ्गस्य विनियोजकत्वमिति तत्राप्यस्त्येवापेक्षा । ननु तर्हि सर्वसाधारण्यायाकांक्षोत्थापकत्वमेव सामान्यसम्बन्धबोधकप्रमाणकार्यं वक्तव्यमिति चेत् सत्यम् । अथापीहापेक्षितस्यापूर्वसाधनत्वस्याप्येतन्मूलकत्वादित्थमुक्तिरिति । **प्रकरणपाठवैयर्थ्यप्रसङ्गादित्यनेन** पाठवैयर्थ्यायाकांक्षोत्थापनादाकांक्षासहकृताया योग्यताया अङ्गताग्राहकत्वमावश्यकमेवेति सूचितम् । लवनस्यापूर्वसम्बन्धे सामर्थ्यं दर्शयति **तद्धीति** । **इतीति** । इत्यतः, एवमपूर्वसम्बन्धि प्रकाश्यं लवनमित्यवगमादित्यर्थः । मन्त्रप्रकाश्यलवनस्य दर्शपूर्णमासापूर्वसम्बन्धित्वज्ञाने मन्त्रस्य तत्सम्बन्धिताज्ञानं प्रयोजकमिति सूचयितुं **प्रकरणाद्दर्शपूर्णसम्बन्धितयाऽवगतस्येति** मन्त्रविशेषणम् ।

लिङ्गेनाङ्गत्वबोधाय प्रबलेन दुर्बलेन वा येन केनापि सामान्यसम्बन्धावगमोऽप्यलमिति बोधयितुमाह **पूषेत्यादि** । 'पूष्णोऽहं देवयज्यया प्रजया च पशुभिश्च जनिषीये' त्येवंरूपा मन्त्राः । यागाद्यनुष्ठानानन्तरं कृतत्वनिश्चयदार्ढ्याय तेषां तदङ्गदेवतादेर्वा स्मरणार्थो मन्त्रोऽनुमन्त्रणमन्त्रः । यथोच्यते 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्'इति । **यागसामान्यसम्बन्धे** यागत्वसामान्येन यागेन सामान्यतः सम्बन्धे । **पूषयागसम्बन्धः** 'पौष्णं चरुं निर्वपेत्' इत्यादिवाक्यविहितपूषदेव-

ननु तेषां यावत्समाख्यया पूषयागेन सामान्यसम्बन्धोऽवगम्यते तावत् प्रकरणात् दर्शपूर्णमासाभ्यामेव सामान्यसम्बन्धोऽवगतः। समाख्यातस्तस्य बलीयस्त्वात् । अत एव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात् सान्नाय्योपांशुयाजाङ्गत्वमपीत्युक्तम् । किं च यागानुमन्त्रणसमाख्ययाऽपि न पूषयागेन सामान्यसम्बन्धोऽवगम्यते, किं तु यागमात्रेण। प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषसम्बन्धोऽवगम्यते । अतः प्रकरणाज्झटिति तत्सम्बन्धस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम् ।

---

त्ययागसम्बन्धः । प्रबले प्रमाणे सति दुर्बलं न ग्रहीतव्यमित्याशङ्कते नन्विति । तावदिति । तावतः कालस्यान्तेरेवेत्यर्थः । बलीयस्त्वादिति । अव्यवहितपूर्वस्यैव बलीयस्त्वे व्यवहितपूर्वस्य तत् कैमुत्यसिद्धं हीति भावः । पौरोडाशिकमिति पुरोडाशकाण्डार्थकम् । आम्नातानामपीत्यपिना समाख्यारूपप्रमाणादरणे पुरोडाशकाण्डप्रतिपाद्यानां प्रयाजादीनां पुरोडाशयागरूपाग्नेयाग्नीषोमीयाङ्गत्वमेव स्यादिति विरोधः सूचितः । सान्नाय्येति । ऐन्द्रदधिपयोयागेत्यर्थः । अपिना समाख्यासाधारणाग्नेयाग्नीषोमीयाङ्गत्वसमुच्चयः । दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इति फलैक्येन सर्वसाधारणस्य प्रकरणस्यैकत्वादिति भावः । एवं प्रमाणगतवैषम्यप्रदर्शनेन प्रकरणस्य ग्राह्यत्वमुक्तम् । अथ प्रमेयगतवैषम्यप्रदर्शनेन तदाह किञ्चेति । पूषयागेन पूषयागत्वेन रूपेण पूषयागेन । न हि पूषयागानुमन्त्रणानीति समाख्येयेति भावः । यागमात्रेण यागसामान्येन । विशेषसम्बन्ध इति पाठो दृश्यते । विशेषेण दर्शपूर्णमासत्वरूपविशेषधर्मावच्छिन्नेन सामान्यसम्बन्ध इति तदर्थः । ननु विशेषरूपेणावगतेरपि विलम्बितत्वे समाख्ययैव सम्बन्धोऽवगम्येतेति शङ्कानुत्पादाय पूर्वोक्तप्रमाणप्राबल्यस्मरणार्थमाह प्रकरणाज्झटिति तत्सम्बन्धस्यैवावगतत्वादिति । युक्तमिति । समाख्यया यागसामान्येन सम्बन्धाङ्गीकारे विशेषबुभुत्सायां सा प्रकारान्तरेण परिहार्या । प्रकरणाङ्गीकारे तु नैष क्लेश इति । वस्तुतः प्रकरणोपस्थि-

पूषेतिशब्दस्य पुष्णातीति व्युत्पत्त्या कथञ्चिदग्न्याद्यभिधायित्वात् ।

मैवम् । पूषानुमन्त्रणमन्त्रे हि श्रूयमाणे एवमवगम्यते—पूषा-

---

तयोर्दर्शपूर्णमासयोरपि यागत्वाविशेषान्नास्य समाख्यया विरोध इत्यपि हृदयम् । ननु प्रकरणसत्त्वेऽपि नैषां दर्शपूर्णमासाङ्गत्वं सम्भवति ; एतत्प्रकाश्यमानायाः पूषदेवतायाः दर्शपूर्णमासयोरन्वयाभावात् । तत्रोत्पत्तिवाक्येष्वेव देवतोपदेशसद्भावेन तदाकांक्षायाः शान्तत्वात् । न चान्यत्र तदसम्भवेऽपि उपांशुयाजे याज्यामन्त्रैरेव विष्ण्वादीनां कल्पनीयतया प्रकृतमन्त्रैरपि पूषदेवताकल्पनेन विकल्पेन निवेशोऽस्त्विति वाच्यम् । तथा सति प्रकरणात्सर्वाङ्गत्वासिद्धेः । एषामनुमन्त्रणमन्त्रत्वेन याज्याकल्पितदेवतावत्युपांशुयाजे, प्रयाजेषु वसन्तमृतूनां प्रीणामीत्याद्यनुमन्त्रणमन्त्राणामिव, देवताकल्पकत्वासम्भवाच्च । न च मन्त्राणामदृष्टद्वाराङ्गत्वम् । अनुमन्त्रणत्वाभावप्रसङ्गात् । इत्यत्राह पूषेति । मीमांसकमते देवतानां विग्रहवत्त्वाभावेन फलप्रदानेन पोषकत्वासम्भवात् कथञ्चिदिति । फलप्रदत्वाभावेऽपि यागाङ्गीभूय निष्पादकत्वेन पोषकत्वमस्तीति भावः । अग्न्यादीत्यादिना सर्वप्रधानाङ्गदेवतापरिग्रहः । न च समाख्यातः प्रकरणस्येव प्रकरणाल्लिङ्गस्य प्राबल्याल्लिङ्गस्य पूषदेवताप्रकाशनसामर्थ्यरूपस्य बाधो न युक्त इति वाच्यम् । लिङ्गस्य प्राबल्यं हि प्रकरणापेक्षया झटित्यङ्गताग्राहकत्वेन वक्तव्यम् । तन्न सम्भवति । तद्धि सामान्यसम्बन्धबोधकप्रमाणेनापूर्वसाधनत्वेनार्थज्ञाने जनित एवाङ्गतां ग्राहयितुमलम् । अतस्तेन प्रकरणादेरपेक्षणात् तस्योपजीव्यस्य प्राबल्यमिति ॥ परिहरति मैवमिति । वस्तुतो दुर्बलाया अपि समाख्यायाः प्रबललिङ्गाश्रितत्वेन प्राबल्यं परिहारहेतुमभिधास्यन् तत्र प्रबललिङ्गाश्रितत्वरूपहेत्वसिद्धिशङ्कापरिहाराय लिङ्गस्य प्रकरणतः प्राबल्यं शङ्कितुरभिप्रायनिरसनेन प्रथमं साधयति पूषेति । इतीति । एवमवगम्यत इत्यनेन सम्बन्धः ।

भिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थ इति। लवनमन्त्र इव लवनप्रकाशनार्थः। न तत्र प्रकरणाद्यपेक्षा, येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात्। प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वात् लिङ्गस्योपजीव्यत्वेन प्राबल्यम्। अतो लिङ्गात् पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वसाधनपूषप्रकाशनार्थत्वं वक्तव्यम्।

---

लवनमन्त्र इव लवनप्रकाशनार्थ इति। बर्हिर्देवसदनमिति लवनमन्त्रे श्रूयमाणेऽयं लवनप्रकाशनार्थ इतीवेत्यर्थः। तत्र पूषप्रकाशनार्थत्वावगमने। प्रकरणाद्यपेक्षेति। आदिना समाख्यायास्तथा प्रकृतेऽभावेऽपि सामान्यसम्बन्धबोधकत्वाविशेषेण क्रमादेश्च परिग्रहः। अस्तीति शेषः। येन प्रकरणाद्यपेक्षासत्त्वेन। तेषां प्रकरणादीनाम्। स्यादिति। उपजीव्यत्वस्यैवाभावादिति भावः। एवं प्रकरणादीनां प्राबल्याभाव उक्तः। अथ लिङ्गस्य प्राबल्यमाह प्रकरणात्त्विति। प्राबल्यमिति। अयं भावः—न हि प्रकरणं स्वतन्त्रमेव प्रमाणम्। अपि त्वङ्गाङ्गिवाचकपदसन्निध्यात्मकं वाक्यं कल्पयित्वा तयोरङ्गाङ्गित्वयोग्यतापरामर्शे सति ततस्तद्वाचकश्रुतिकल्पनेन। यावदेवं स्वानुगुणलिङ्गकल्पनया दर्शपूर्णमासार्थत्वमवगम्यते, तावदेव विद्यमानाल्लिङ्गात् श्रुतिमात्रकल्पनेन प्रकाश्यमानपूषार्थत्वमवगन्तुं शक्यम्। अतः प्रकरणादीनामेव दौर्बल्यम्। तदुपजीव्यत्वात् स्वकार्ये किञ्चिदर्थप्रकाशनार्थत्वांशे तदनपेक्षत्वाच्च लिङ्गस्य प्राबल्यमिति। एवं प्राबल्यं साधितम्। अथ पूषप्रकाशनार्थत्वावगतिर्नाम मन्त्रस्य पूषदेवताङ्गत्वावगतिरेव। सा यदि प्रकरणाद्यनपेक्ष्यैव सिद्धा; न तर्हि लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणापेक्षत्वमिति शङ्कापरिहारेण प्रबललिङ्गापेक्षितत्वं समाख्यायामुपपादयितुमाह अत इति। अतः प्रकरणाद्यपेक्षाभावात्। लिङ्गात् केवलाल्लिङ्गात्। तन्मात्रप्रकाशनमिति। अपूर्वसम्बन्धं विहाय पूषत्वेन पूष्णः प्रकाशनमित्यर्थः। अनर्थकमितीति। इति हेतोरि-

किं तदपूर्वमित्यपेक्षायां यागानुमन्त्रणसमाख्यानुगृहीताल्लिंगात्पूषयागापूर्वसम्बन्धिदेवताप्रकाशनार्थोऽयमित्यवगम्यते । अतो

---

त्यर्थः । तादृशानर्थक्यपरिहारायेति यावत् । नन्वेवं तत्प्रकाशनस्यानर्थक्ये ज्ञाते तदर्थत्वस्य मन्त्रेऽवगत्यसम्भवात्कथं 'पूषप्रकाशनार्थत्वेऽवगत' इत्युच्यते । न च शब्दश्रवणसमनन्तरं प्रतीयमानं स्वरूपस्योद्देश्यत्वं नापहातुं युक्तमिति वाच्यम् । व्रीहीनवहन्तीत्यत्र व्रीहीनिति प्रातिपदिकेन स्वरूपस्य प्रत्ययेनोद्देश्यत्वस्य च पृथगुपस्थितिकाल एव बाधज्ञानात् परस्परानन्वयस्येष्टत्वात् । अन्वयोपपत्त्यर्थमेव हि लक्षणाङ्गीकारः । प्रकृते चोद्देश्यतावाचकपदाभावादपि न पूषप्रकाशनार्थत्वावगतिसम्भव इति चेन्न । न खलु शब्दादुद्देश्यत्वावगम इहोक्तः । किं तर्हि ? अनुमानात् , अयं मन्त्रः फलवत्पूषदेवताप्रकाशनार्थः तत्प्रकाशनसमर्थत्वात् , यो यत्प्रकाशनसमर्थः स फलवत्तत्प्रकाशनार्थः , यथा लवनमन्त्र इति । तच्च फलं न दृष्टरूपम्, नियमेन मन्त्रजन्यस्यार्थप्रकाशनस्य तत्रोपयोगासम्भवादिति पर्यालोचनया चापूर्वं किञ्चिदस्ति वेति विमर्शावसरः । एवं च सामर्थ्यरूपं लिङ्गमीदृशार्थानुमितिमुत्पाद्यैतदविरोधेन मन्त्रगतप्रयोजनाकांक्षाशान्तये वाचस्तोमविनियोगविधिमिवैतदविरोधेनैव मन्त्रपाठकालोत्पन्नतत्तन्मन्त्रगताकांक्षाशान्तयेऽप्युचितं प्रमाणं ग्रहीतुं प्रवर्तत इति न तद्विरोधो युक्तः । इयांस्तु भेदः , वाचस्तोमेऽर्थप्रकाशनमदृष्टार्थम् , अन्यत्र पुनरनुष्ठानरूपदृष्टार्थमिति । समाख्यानुगृहीतादिति । मन्त्रगतप्रयोजनाकांक्षा स्वशान्तये पूषदेवताप्रकाशनस्यापूर्वसम्बन्धित्वजिज्ञासायाः शान्तिं प्रतीक्ष्य वर्तते । तां जिज्ञासां शमयितुं प्रमाणेऽपेक्ष्यमाणे प्रकरणं तावत् तत्रासमर्थं निवृत्तम् । न हि प्रकरणं तत्रापूर्वसम्बन्धित्वं गमयितुं शक्नोति । एवं तस्मिन्निवृत्ते समाख्या तदर्थे स्वीक्रियते । तया चापेक्षितं निर्वर्त्यत इति । अतः एवं लिङ्गानुग्राहकत्वात् । ननु प्रथमतः प्रकरणेन बाधिता समाख्या कथ-

यद्यपि समाख्यातः प्रकरणं बलीयस्तथाऽपि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात्सैव सामान्यसम्बन्धे प्रमाणं सम्भवति, दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यात् ।

अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबल-

---

मनुगृह्णातीति शङ्कित्वा परिहरति यद्यपीत्यादिना । बाधितत्वात् प्रतिबद्धप्रवृत्तिकत्वात् । स्वयं प्रवर्तितुं शक्तं हि प्रमाणं स्वतो दुर्बलं बाधिष्यते , न पुनरशक्तमिति । नन्वेवं लिङ्गेन प्रकरणबाधे यत्र प्रकरणादन्यस्य सम्बन्धप्रमाणस्याभावः । प्रकरणञ्चान्यादृशम् । तत्रापि प्रकरणमकार्यकरं स्यात् । न स्यात् । अपूर्वसम्बन्धे केनाप्यवगमिते हि लिङ्गावगतं प्रतिष्ठितं भविष्यति । यदा तत्र प्रमाणमन्विष्य लिङ्गं वन्ध्यप्रयत्नं जातम् , तदा स्वकार्ये स्वयमसमर्थमविद्यमानवद्भवति । अतो बाधकाभावात् प्रकरणं प्रवर्तते । स्वानुगुणलिङ्गकल्पनेन च मन्त्रं विनियोजयतीति । यदुक्तं 'समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यादि'ति । तत्र दृष्टान्तं वक्तुं सामान्यन्यायमाह दुर्बलस्यापीति । दुर्बलाया इति पाठे स्त्रीलिङ्गनिर्देशः प्रकृताभिप्रायेण । श्रुत्यपेक्षयेत्यादि । अयमर्थः । वेदं कृत्वा वेदिं करोतीति श्रुत्या वेदिकरणे वेदकरणानन्तर्यरूपः क्रमो विहितः । वेदो दर्भमुष्टिविशेषः । क्षुत आचामेदिति स्मृत्या क्षुते निमित्ते नैमित्तिकमाचमनं विहितम् । तत्र वेदकरणानन्तरं यदा क्षुतमेव निमित्तं न जातं तदा वेदिकरणस्यानन्तर्यं निस्सन्दिग्धम् । यदा तु वेदिकरणारम्भात् प्राक् क्षुतं जातम् । तदा किं स्मृतिमनुसृत्य नैमित्तिकमाचमनं वेदिकरणात् प्रागनुष्ठेयम् । उत श्रुतिमनुरुध्य क्रमो ग्राह्य इति संशये श्रुतिर्हि प्रबलं प्रमाणम् । तामुपजीव्य प्रवृत्ता स्मृतिस्ततो दुर्बला । अतः प्रबलगम्यः क्रम एव ग्राह्य इति पूर्वपक्षे प्रथमतृतीये

उक्तम् 'यद्यपि स्मृतिर्दुर्बला, अथापि तत्प्रतिपादितोऽर्थोऽयमाचमनाख्यो वेदकरणादिवत् कश्चिदनुष्ठेयः पदार्थः । अतश्च स प्रबलः । क्रमः पुनरानन्तर्यं पदार्थोद्देशेन विहितो गुणभूतः । अतः प्रबलपदार्थाश्रिता स्मृतिः प्रबला । तया च श्रुतेर्बाधात् श्रुत्युक्तमपि क्रमं त्यक्त्वा क्षुते जाते आचमनमेव कार्यमिति । ननु यस्माद्यद् दुर्बलं ततः प्रबलमाश्रितस्य तस्य ततः प्राबल्यं प्रागुक्तम् । प्रकरणात् दुर्बलायाः समाख्यायाः प्रकरणात् प्रबलं लिङ्गमाश्रितायाः प्रकरणतः प्राबल्यमिति । इह तु श्रुत्यपेक्षया दुर्बलायाः स्मृतेः श्रुतिप्रतिपादितक्रमापेक्षया प्रबलाचमनरूपपदार्थाश्रितत्वेन प्राबल्यमुच्यत इति कथमेतत् ? उच्यते । क्रमात् पदार्थस्य प्राबल्ये श्रुत्यपेक्षयाऽपि प्राबल्यमस्त्येव । शब्दो ह्यर्थप्रतिपादनार्थः । अतः श्रुतिस्स्मृतिश्च स्वस्वार्थप्रतिपादनार्था स्वस्वार्थोपसर्जनभूतैव । एवञ्च क्रमापेक्षयाऽऽचमनस्य प्राबल्ये क्रमोपसर्जनश्रुत्यपेक्षयाऽपि प्राबल्यं सिद्धमेवेति प्रागुक्ताविशेष एवेति । एतेन यथा दुर्बलायाः स्मृतेः प्रबलपदार्थाश्रितत्वेन प्राबल्यात् श्रुत्यनादरः, तथा दुर्बलस्यापि क्रमस्य प्रबलश्रुत्याश्रितत्वेन प्राबल्यादाचमनस्यैवानादरः कुतो नेति निरस्तम् । अर्थं प्रति शब्दस्यैवोपसर्जनत्वादाचमनात् श्रुतेरप्रबलत्वात्क्रमस्य तदनाश्रितत्वाच्च ।

किं च श्रौतत्वात् क्रमो ग्राह्यः, स्मार्तत्वादाचमनं त्याज्यमिति ज्ञानं श्रुतिस्मृत्योर्बलाबलज्ञानाधीनम् । तच्च ज्ञानं तद्बुभुत्साधीनम् । बुभुत्सा च तयोर्विरोधे ज्ञाते सति भवति । विरोधज्ञानं च तयोः स्वरूपतः विरोधाभावात् प्रतिपाद्यार्थविरोधज्ञानद्वारकं वक्तव्यम् । एवञ्चार्थविरोधज्ञानेन यावत् प्रमाणयोर्बलाबलावगतिस्तावदेवार्थगतबलाबलोपस्थितिरिति तयैव ग्राह्यत्याज्यविभागो वृत्त इति पाश्चात्यश्रौतत्वस्मार्तत्वरूपवैलक्षण्यावगमो न कार्यकर इति ।

पदार्थाश्रितत्वेन प्राबल्यात् पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेद-करणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तम् । यथाहुः—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ इति ॥

यत्तु पूषेति शब्दः कथञ्चिदग्न्याद्यभिधायीति तन्न । तस्याद-न्तको हि स इत्यादिवाक्यशेषेण वैदिकप्रसिद्धया च अर्थविशेषे रू-

---

अथैवं समाधिं परित्यज्य स्मृतिप्राबल्यवर्णनेन समाधिः कुतः कृत इति चेदुच्यते । इह तावत् पूर्वपक्षी प्रकृतप्रमेयज्ञानस्य प्रमाणज्ञानमूल-कतया प्रमाणज्ञाने तद्गतबलाबलोपस्थितिरपि जातेति मत्वा प्रबलप्रमाणार्थ-मेव ग्राह्यममन्यत । तं प्रति प्राबल्ये दौर्बल्यं च तदुक्तमङ्गीकृत्य तदुप-स्थितिविलम्बोपपादनापेक्षया वस्तुगतिमनुरुध्य तदनङ्गीकारेण समाधानमुचि-तमेवेति ।

पदार्थेति । श्रौतस्यापि पदार्थधर्मभूतस्य तद्गुणभूतस्य च क्रम-स्य त्यागेनेत्यर्थः । धर्मेत्यनेन 'धर्मधर्मिविरोधे तु धर्मिणो बलवत्तरा' इति न्यायः स्मारितः । धर्मस्यापि धर्म्यपेक्षया प्राधान्ये प्रमाणप्रतिपन्ने तत्रैत-न्न्यायानवतारात् प्रकृते तत्सम्भवदर्शनाय गुणेति । एवमिह वैदिकदृष्टान्त-मुक्त्वा लौकिकतद्दर्शनाय वार्तिकं प्रवर्तयति यदाहुरिति । यदि पूषपदस्य देवताविशेषप्रकाशन एव सामर्थ्यमिति स्यात् , स्यात्तर्हि प्रकरणबाधः । अवयवव्युत्पत्त्याऽग्न्याद्यभिधायित्वमपि सम्भवतीत्युक्तम् । अतस्तल्लिङ्गमनु-सृत्य प्रकरणं रक्षितव्यमिति शङ्कायां शङ्कितपूर्वमनूद्य निरस्यति यत्त्वित्या-दिना । तस्य पूषेति शब्दस्य । योगातिरिक्तायां रूढ्यां प्रमाणमाह अद-न्तक * इत्यादिवाक्यशेषेणेति अदन्तको हि स इत्यनेन वाक्यशेषेण तत्र स इति कस्याश्चिदेव व्यक्तेर्निर्देशस्वरसात्तत्रादन्तकत्ववचनाच्च नाग्न्यादिः

---

* अदन्तक इत्यादिवाक्यशेषेणेति मूलपाठः ।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**ढत्वात् । रूढेश्चावयवार्थालोचनसव्यपेक्षाद्योगाद्बलीयस्त्वात् । अत एव वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्देन सौधन्वनापर-**

पूषेति भावः । ननु पूषाप्रविष्टभाग इत्यस्यायं वाक्यशेषः । अयं चास्य पुष्णातीति व्युत्पत्त्या सर्वदेवतासाधारण्ये सति दन्तहीनदेवतापरत्वमवगमयतीति युक्तम् । अतो वाक्यशेषो विधिस्थपदस्यार्थविशेषगमकोऽपि नावश्यं रूढिगमकः । न हि वाक्यशेषस्य रूढिगमकत्वमिति नियमोऽस्ति । यवादौ तद्दर्शनेऽपि अक्ताः शर्करा उपदधातीत्यत्र तेजो वै घृतमिति वाक्यशेषस्याञ्जनसाधनद्रव्यविशेषमात्रसमर्पकत्वदर्शनादित्यतो रूढौ गमकं दर्शयति वैदिकेति । **अर्थविशेषे** अग्न्यादिविलक्षणदेवतायाम् । रूढिरस्तु । अवयवार्थस्वीकारे किं साधकमित्यत्राह **रूढेश्चेति** । योगस्य दौर्बल्यहेतुरुच्यते । **अवयवार्थालोचनसव्यपेक्षादिति** । व्यपेक्षया सहितः सव्यपेक्षः । आलोचने सव्यपेक्षस्तस्मात् तद्विषयकापेक्षासहितादित्यर्थः । योगेनार्थग्रहो विलम्बितः । तत्र हि प्रकृतिप्रत्ययरूपावयवार्थालोचनानन्तरमवयवद्वयबोधितार्थद्वयस्य सम्बन्धमपि निश्चित्य विशिष्टार्थोपस्थितिर्वक्तव्या । रूढेस्त्वर्थावगमः शब्दश्रवणसमनन्तरमेव भवति । अतः शीघ्रमर्थोपस्थापकत्वेन समुदायशक्ते रूढेः प्राबल्यम् । विपर्ययाद्योगस्य विपर्यय इति भावः । **अत एव रूढेर्बलीयस्त्वादेव । वर्षास्वित्यादि** । अयमर्थः वर्षासु रथकारोऽग्नीनादधीतेत्यत्र किं रथकारशब्देन द्विजातिग्रहणमुत जातिविशेषस्येति संशये द्विजातेरेव ग्रहणम् । जातिविशेषग्रहणेन तत्कर्तृकस्याधानस्य वाक्येन विधौ तेनाविदुषाधानानुष्ठानासम्भवेन तस्य ज्ञानसम्पादनमाक्षेप्तव्यमिति गौरवात् । द्विजातिग्रहणे तु तस्याध्ययनविधानादेवार्थज्ञानं सिद्धम् । अतो रथकारशब्दोपस्थापितरथकरणे निमित्ते द्विजातिकर्तृकाधानानुवादेन वर्षाकालविधानमिति पूर्वपक्षे प्राप्ते, रथकारशब्देन रूढ्या जातिविशेषस्यैव ग्रहणम् । शीघ्रमुपस्थितत्वात् । न तु रथकर्तुर्द्विजातेः । अवयवार्थोपस्थितेर्विलम्बितत्वात् । ज्ञानाक्षेपस्तु फलमुखत्वाददोष इति सिद्धान्तः कृत इति । एवं युक्तिसिद्धेऽर्थे लिङ्गदर्शनमप्यस्तीति सूचयति **सौधन्वनापरपर्याय इति** । सौधन्व-

पर्यायो वर्णविशेष उच्यते, रूढेः प्राबल्यात्, न तु रथं करोतीति व्युत्पत्त्या द्विजातयः, योगस्य दौर्बल्यादित्युक्तं षष्ठे ।

तस्माद्युक्तं समाख्यया सामान्यसम्बन्धेऽवगते सामर्थ्यात् पूषयागसम्बन्धः पूषानुमन्त्रमन्त्राणामिति । यथाऽऽहुः—

यागानुमन्त्रणानीति समाख्या क्रतुयोजिका ।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्दैवते क्रतौ ॥ इति ।

तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थस्य विनियोजकं लिङ्गमिति ।

---

ना ऋभवः सूरचक्षुषः इति सौधन्वनसामानाधिकरण्येनोपात्तः ऋभुशब्दः ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्याादध्यादिति वाचनिकमन्त्रे प्रयुज्यते । अतो न द्विजातिग्रहणम् । रथकारशब्द उभयत्र रूढः । माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्यात् । माहिष्येण करण्यां तु रथकारः प्रजायते इत्युक्तेः ; तथा व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च इत्युक्तवैश्यन्यूनापशूद्रजातिविशेषे । तत्र द्वितीय एव प्रकृतो रथकार इत्यप्यनेन पदेन विवक्षितम् । वर्णविशेषो जातिविशेषः । द्विजातय इति उच्यन्त इति विपरिणम्यानुषङ्गः । त्रैवर्णिकवाचित्वे ज्ञानाक्षेपो नास्तीति पूर्वपक्ष्यभिमतसूचनाय त्रैवर्णिका इत्यनुक्त्वा द्विजातय इत्युक्तम् । उपनयनं ह्येषां द्वितीयं जन्म । तच्चाध्ययनार्थमिति । बहुवचननिर्देशो वर्णत्रयग्रहणप्रदर्शनाय । निगमयति तस्मादिति । रूढेः प्राबल्येनाग्न्याद्यभिधायकत्वाभावाद्विद्यमानसामर्थ्येन बाधितत्वाच्च प्रकरणस्य सामान्यसम्बन्धबोधकत्वासम्भवादिति तदर्थः । पूषयागसम्बन्धः अवगम्यत इति शेषः । (३-२-१) वार्तिकमत्र प्रमाणयति यदिति । क्रतुयोजिका क्रतुना सामान्यसम्बन्धबोधिका । तस्मात् समाख्यारूपसम्बन्धबोधकसद्भावात् । शक्त्यनुरोधेन लिङ्गानुसारेण । तद्दैवते सा देवता यस्य क्रतोस्तस्मिन् । लिङ्गप्रामाण्यं निगमयति तत्सिद्धमिति । प्रमाणेत्यादि । बहुव्रीहिवृत्तम् । ननु व्रीहीन् प्रोक्षति तण्डुलान् पिन-

**तत्र मन्त्रविनियोजकं लिङ्गं मुख्य एवार्थे विनियोजकं न गौणे। मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्यवसन्नायां**

---

ष्टीत्यादौ व्रीहितण्डुलादिपदेष्वपूर्वसाधनत्वलक्षणायै सामान्यसम्बन्धबोधकप्रमाणापेक्षादर्शनात् श्रुतिं विहाय लिङ्गस्यैवायं विशेष इति कथं स्यात् ? उच्यते । अर्थगतलिङ्गे विशेषाभावाच्छब्दगतलिङ्गमधिकृत्यैव शास्त्रे विचारो वर्तितः । तत्र शास्त्रविचारिते सर्वत्रैतत्प्रमाणापेक्षाऽस्तीत्येवमुक्तम् । अपि च लिङ्गस्थले एतत्प्रमाणाभावे निराकांक्षतया लिङ्गस्य प्रवृत्तिरेव नास्तीति तादृशविशेषसत्त्वादेवमुक्तमिति ।

एवं विनियोजकत्वमुक्तम् । अथ विशेषमाह तत्रेति । तत्र सामान्यतो विनियोजकत्वे सतीति शेषः । अथ वा तत्र लिङ्गसामान्ये । घटकत्वं सप्तम्यर्थो मन्त्रविनियोजकलिङ्गेऽन्वेति । स्रुवाद्यर्थगतलिङ्गे वक्ष्यमाणविशेषाभावात् **मन्त्रविनियोजक**मिति । मन्त्रघटकपदस्य शक्यार्थैकत्वेऽपि लक्ष्यार्थानन्त्यादनेकं सामर्थ्यमस्ति । तथाऽपि तत्र सर्वत्र विनियोजकत्वमस्त्विति न वक्तुं युक्तम् । मन्त्रस्य सामान्यतः क्रतुसम्बन्धस्य प्रतिपन्नत्वेन द्वारविशेषस्यैवेदानीं ज्ञातव्यतया तत्रासम्भवद्द्वारभावेष्वर्थेषु विनियोजकत्वशङ्कायाः प्रसक्त्यभावात् । अतो 'मन्त्रगत'मित्यनुक्त्वा **मन्त्रविनियोजक**मित्युक्तम् । मन्त्रविनियोजकत्वेन शङ्कितुमर्हमिति तदर्थः । ननु मन्त्रविनियोजकं लिङ्गमित्यनेन कस्य लिङ्गस्य परिग्रहः किं गौणार्थप्रकाशनरूपस्य उत मुख्यार्थप्रकाशनरूपस्य ? नाद्यः, तस्य मुख्यार्थविनियोजकत्वाभावात् । नान्त्यः, तस्य गौणार्थविनियोजकत्वाप्रसक्त्या **'न गौण'** इति निषेधासम्भवात् । उच्यते । सामर्थ्यत्वेन रूपेण द्वयस्यापि लिङ्गमित्यनेन ग्रहणम् । तत्रैकस्मिन् मुख्यार्थप्रकाशनरूपे मुख्यार्थविनियोजकत्वमन्वेति । अन्यत्र गौणार्थविनियोजकत्वाभावः यथोत्पलं नीलं रक्तं चेत्यादाविति । एवकारार्थमाह **न गौण** इति । **गौणे** वृत्त्यन्तरोपस्थाप्ये । **प्रथममुपस्थितत्वेने**ति । गौणार्थज्ञानस्य शक्यसम्बन्धज्ञानाधीनत्वेन शक्यो-

पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अत एव बर्हिर्देवसदनं दामीति मन्त्रः सामर्थ्यात् कुशलवनाङ्गम्, तेषां मुख्यत्वात्, न उलपराजिलवनाङ्गमित्युक्तम् ।

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोजकत्वं किं तु लिङ्गं श्रुतिं च कल्पयित्वा । न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना सम्भवतीति सामर्थ्यस्यापि कल्प्य-

---

पस्थितेः प्राथमिकत्वावश्यकत्वात् । तथा च मुख्यत्वमेव हेतुरिति भावः । विनियोगबुद्धौ अङ्गत्वबुद्धौ । पर्यवसन्नायां निष्पन्नायाम् । गौरवप्रसङ्गात् प्रथमोपस्थिताङ्गत्वबोधेनैवाकांक्षाया मन्त्रगतायाः शान्तत्वेनान्याङ्गत्वकल्पने आकांक्षाया अपि कल्पनीयतया मन्त्रेणैव सोऽर्थः स्मर्तव्य इति नियमादृष्टकल्पनया च गौरवप्रसङ्गात् । आकांक्षाकल्पनस्याप्रामाणिकत्वादिति तात्पर्यम् । एवं च यत्र मुख्यार्थे विनियोगासम्भवस्तत्र सामर्थ्यस्य गौणार्थविनियोजकत्वेऽपि तत्सम्भवस्थले तत्कल्पनमयुक्तमिति । तेषां कुशानाम् । नेति । बर्हिषामिवोलपानामपि क्रतूपयुक्तत्वेन द्वारत्वसम्भवेऽपि न तल्लवनाङ्गम् । तेषां बर्हिःपदमुख्यार्थत्वाभावादित्यर्थः ।

अथास्य स्वोत्तरप्रमाणतः प्राबल्यमाह तदिदिति । वाक्यादेर्लिङ्गापेक्षां दर्शयितुं श्रुत्यपेक्षत्वं पूर्वोक्तं स्मरयति तेषां हीति । नेति * विनियोजकशब्दाश्रवणादिति भावः । एतावता तुल्यबलत्वमेवायातम् । अतो वक्तव्यमाह न चेति । असमर्थस्य सामर्थ्यवत्त्वेनाज्ञातस्य । विनियोगेत्यनेनेदमन्वेति । विनियोगकल्पना-अङ्गत्वबोधनम् । यावद्धि अङ्गाङ्गिनोरवगतयोरङ्गाङ्गिभावयोग्यता नावगम्यते, तावत्तयोस्तद्बोधकश्रुतिकल्पना कथं

---

* 'न साक्षाद्विनियोजकत्वं किं तु श्रुतिं कल्पयित्वा' इत्येव पाठः किं तु लिङ्गं श्रुतिं च कल्पयित्वा । इति पाठस्तु न निवेश्यः ।

त्वेनोपजीव्यत्वात् । अतस्तैर्यावत् सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियेत इति तस्य प्राबल्यम् ।

अत एव 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' इत्यस्य सदनाङ्गत्वं लिङ्गात्, न तु वाक्यात् सादनाङ्गत्वम्, तस्य दौर्बल्यादिति ।

---

सम्भवेदिति । उपजीव्यत्वादिति बलवदित्यत्र हेतुः । फलमाह अत एवेति । सदनाङ्गत्वम् सदनकरणाङ्गत्वम् । नन्विह वाक्येनान्याङ्गत्वाबोधनात् विरोध एव न दृश्यते तत्राह न त्विति । अयं भावः—स्योनं ते सदनं कृणोमि । घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीद अमृते प्रतितिष्ठ । 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रः । अस्यार्थः—हे व्रीहीणां मेध सारभूत पुरोडाश ! ते स्योनं सुखहेतुं सदनं करोमि । घृतस्य धारया सुशेवं सुखशयनयोग्यं कल्पयामि । केचित्तु घृतस्य धारया स्योनं श्लक्ष्णं सदनं करोमि सुशेवं कल्पयामीत्यर्थमाहुः । तस्मिन् सदने सुमनस्यमानः शोभनमनस्कः सीद, अमृते शाश्वते तत्र प्रतितिष्ठति । अस्य किं कृत्स्नस्याप्येकस्मिन्नेव कार्ये विनियोगः उत पूर्वार्धस्य सदनकरणे, उत्तरार्धस्य च प्रतिष्ठापन इति विभज्येति विशये वाक्यात् कृत्स्नविनियोगः प्राप्तः । इह हि तस्मिन्निति तच्छब्दार्थबोधनाय पूर्वार्धस्य प्रवृत्तत्वात् सदनकरणस्य च तत्र पुरोडाशप्रतिष्ठापनार्थत्वात् स्योनं ते इति युष्मच्छब्दार्थज्ञानायान्तस्य 'व्रीहीणां मेधे'ति पदस्यापेक्षितत्वाच्चैकवाक्यत्वावगमाद्वाक्यमुख्यप्रतिपाद्यप्रतिष्ठार्थत्वमेवोचितं भातीति । अत्रोच्यते । वाक्येन हि कृत्स्नविनियोगे पूर्वार्धस्य साक्षात् प्रतिष्ठापनप्रकाशकत्वाभावात् प्रतिष्ठापनगतसदनकरणपूर्वकत्वावगमनानुसारेण कथमपि प्रतिष्ठापनार्थत्वे सामर्थ्यं प्रकल्प्य श्रुतिः कल्पनीया । ततः प्रागेव विस्पष्टं विभिन्नकार्यप्रतिपादनसामर्थ्यमनुसृत्य क्रमेण सदनकरणे प्रतिष्ठापने च श्रुतिमात्रकल्पनयाऽङ्गत्वबोधोऽवगम्यत इति । यद्यपि

समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम् ।

---

प्रतितिष्ठेति प्रतिष्ठानमेवोच्यते, न प्रतिष्ठापनम्; अथापि तस्य पुरोडाशगतस्य पुरुषानुष्ठेयत्वाभावात्प्रतिष्ठापनस्यैवोद्देश्यत्वमिति ।

अथ तृतीयं प्रमाणं निरूपयति समभिव्याहार इति । ननु समभिव्याहारस्य सहोच्चारणरूपस्य 'न स पाप'मित्यत्र व्रीहीन् प्रोक्षतीत्यादिश्रुतिस्थले च सत्त्वेनातिव्याप्तिरत आह समभिव्याहारो नामेति । व्रीहीन् प्रोक्षतीत्यादिवारणाय साध्यत्वादिवाचकद्वितीयाद्यभाव इति । सतीति शेषः । यद्यपि श्रुतौ विभक्तिरूपायां साध्यादिवाचकपदसमुदायरूपवाक्यत्वं नास्तीति न तत्रातिव्याप्तिः; अथापि श्रुतिकल्पनेन विनियोजकस्य वाक्यस्यैव प्रकृततया तद्भिन्ने व्रीहीनित्यादिवाक्येऽतिव्याप्तिवारणायेदमिति । प्रथमादिना कारकाणां द्वितीयादिना विभक्तीनां च ग्रहणम् । लक्ष्ये 'प्रयाजविशेषेण हवींष्यभिघारयती'त्यादौ द्वितीयाद्यभावाभावेनाव्याप्तेर्द्वितीयादौ साध्यत्वादिवाचकत्वविशेषणम् । स्वशक्यार्थशाब्दबोधोपधायकविभक्त्यभाव इति विशिष्टार्थः । शक्यसम्बन्धरूपलक्षणाज्ञानाय शक्यार्थोपस्थापकत्वेऽपि तस्य शाब्दबोधे भानाभावान्न तत्र तद्बोधकत्वम् । स्वरूपयोग्यतासत्त्वादुपधायकेति । यद्यपि तात्पर्यानुपपत्त्या लक्षणाङ्गीकारस्थले पर्णमयी जुहूर्भवतीत्यादौ शक्यार्थविषयकोऽपि कश्चिद्बोध इष्टः; अथापि तद्बोधोपधायकत्वत्र तत्तात्पर्यकेति विवक्षणान्न दोषः । शेषत्वेन शेषित्वेन च न तद्वाचित्वं विवक्षितम् । अपि तु तत्तदुपलक्षितधर्मिवाचित्वमेवेति सूचयितुं वस्तुत इति । शेषशेषिणोः अङ्गाङ्गिवाचकपदयोः । तथा च स्वशक्यार्थतात्पर्यकविभक्त्यघटिताङ्गत्वाङ्गित्वोपलक्षितबोधकपदोच्चारणमिति लक्षणार्थः । ननु यजेत-पशुनेत्यादिष्वेकपदश्रुतिष्वतिव्याप्तिः । न च स्वशक्यार्थतात्पर्यकविभक्त्यघटितेति न निवेश्यते; अपि तु तत्तात्पर्यकत्वाभाववद्विभक्तिमदिति । एकपदश्रुतिषु च विभक्त्यभावान्न दोष इति

यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति। अत्र हि न द्वितीयादिविभक्तिः श्रूयते, केवलं पर्णताजुह्वोः समभिव्याहारमात्रम्। तस्मादेव च पर्णताया जुह्वङ्गत्वम्।

न चानर्थक्यम्, जुहूशब्देनापूर्वलक्षणात्। तदयं वाक्यार्थः—

---

वाच्यम्। प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र विधीयमानस्याभिघारणस्य वाचके धातौ तादृशविभक्तिमत्त्वाभावात्। इति चेन्न। पदपदेन सुप्तिङन्तपरेणैवैकपदश्रुतिवारणेन निवेशनीयाभावात्। नव्यमत एकपदश्रुतेरपि लक्ष्यतया पदपदस्य न तत्परत्वमिति ध्येयम्। लक्ष्यं दर्शयति। यथेति। पर्णः पलाशवृक्षः। केवलमिति। शेषत्वशेषित्ववैशिष्ट्येनेत्यर्थः विभक्त्यभावेनेति वाऽर्थः। पर्णताजुह्वोः तद्वाचकपर्णमयीजुहूपदयोः। एवं लक्षणसमन्वयं विधाय तस्याङ्गताग्राहकत्वमाह तस्मादिति। समभिव्याहारादिति तदर्थः। अङ्गत्ववाचकविभक्त्यभावेऽपि तद्भवतीत्येवकाराभिप्रायः। अर्थयोरुपस्थितयोः सामर्थ्यपर्यालोचनया श्रुतिकल्पनादिति भावः। ननु व्रीहीन् प्रोक्षतीत्यादीनां प्रकरणपठितत्वेन व्रीह्यादिपदेषु प्रकृतदर्शपूर्णमासाद्यपूर्वसाधनलक्षणासम्भवादानर्थक्यपरिहार उक्तो युक्तः। अस्य तु वाक्यस्यानारभ्याधीतत्वेन क्रतूपस्थित्यभावेनापूर्वसाधनोद्देश्यकत्वासम्भवात् स्वरूपतश्चोद्देश्यत्वायोगात् पर्णताया आनर्थक्यमिति शङ्कां परिहरति न चेति। परिहारे हेतुमाह जुह्विति। अपूर्वलक्षणादिति। यस्य हि क्रताविवान्यत्रापि सम्भवः, तस्य नियतक्रतुसम्बन्धाभावेन प्रकरणाद्यपेक्ष्यापूर्वसाधनलक्षणा। जुह्वास्तु क्रतुसम्बन्धस्याव्यभिचरितत्वेन विनाऽपि प्रमाणान्तरं तल्लक्षणा युक्तेति भावः। नन्वङ्गत्वं परोद्देशप्रवृत्तकृतिकारकत्वविशिष्टं विहितत्वम्। तत्कथमिह सम्भवति? कृतिविधिकारकत्वोद्देश्यत्ववाचकपदाभावात्। एवं च पर्णताया विधानाभावाज्जुहूगतत्वेन विवक्षिता सा व्यर्थैवेत्यतो विशिष्टवाक्यार्थमाह तदिति। तत् तस्मात् अपूर्वसाधनलक्षणाकरणात्। वाक्यार्थ इति। निष्पद्यत इति शेषः।

पर्णतया अवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति । एवं च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यम् । अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम् , अन्यथा स्रुवादिष्वपि पर्णतापत्तेः । सा चेयं पर्ण-

---

पर्णतयेति भावयेदित्यनेनान्वितम् । तथा च जुह्वाः क्रतुसम्बन्धाव्यभिचारेणापूर्वसाधनत्वेऽवगते तस्या उद्देश्यत्वयोग्यतायां च निर्धारितायां पर्णमयत्वस्य तत्राङ्गत्वयोग्यतामवधार्य तत्तदानुगुण्येन विभक्तिलक्षणामङ्गीकृत्य भवतीति लेडन्तस्य भावयेदित्यर्थं परिकल्प्य वाक्यस्येत्थमर्थो वक्तव्य इति भावः । अन्यथा पर्णतया जुहूकरणे । गम्यत इति । अनेन एवं चेत्येतदन्वेति । पर्णताया विधानाभावे हि एवं न गम्येत , न त्विदानीमिति भावः । ननु वैयर्थ्यपरिहारस्यापूर्वसाधनलक्षणेनैव कृतत्वादवत्तहविर्धारणद्वारेति किमर्थम् ? अपूर्वसाधनत्वापेक्षयाऽपूर्वसाधनयागसाधनावत्तहविर्धारकत्वस्य गुरुत्वादित्यत्राह अवत्तेति । चस्समुच्चये । अपूर्वसाधनत्ववदिदमपि वक्तव्यमिति । अवश्यमिति । जुह्वाः साक्षादपूर्वसाधनत्वाभावेन यया परम्परया तस्यास्तथात्वं, तस्याः परम्पराया अनिवेशासम्भवादिति भावः । विशिष्यानिवेशे दोषोऽप्यस्तीत्याह अन्यथेति । अपूर्वसाधनलक्षणायां कृतायां लाघवाय जुहूत्वस्य विवक्षाऽभावेन लक्ष्यार्थविशेषान्तरेष्वपि प्रसज्येतेति भावः । न च 'यस्य खादिरः स्रुवो भवती' त्यनारभ्याधीतविशेषविधिनैव स्रुवस्य खादिरत्वनिश्चयेन पालाशत्वं न सम्भवतीति वाच्यम् , जुहूशब्दवदपूर्वसाधनलक्षणायास्तत्राप्यावश्यकत्वेनेह विशेषानिवेशे तत्रापि तदभावेन पर्णत्वखादिरत्वयोर्विकल्पस्यैव स्वीकरणप्रसङ्गेन तत्र पर्णतानिवेशस्याक्षतत्वादिति । हविर्धारकत्वमेवालम् । अवत्तपदं किमर्थमिति चेत् कपालादेरपि पुरोडाशादिहविर्धारकत्वसत्त्वेन तद्वारणार्थम् । ननु स्रुवादिनापि जुह्वां निधानात् प्राक् हविरवत्तं ध्रियते । नैवम् । न खलु स्रुवादि धारणार्थम् । अपि तु केवलमवदानार्थमिति । अथ वा अवत्तमिति कार्त्स्न्येनावदानसंस्कृतत्वं विवक्षितम् ।

ताऽनारभ्याधीता न सर्वक्रतुषु गच्छति, विकृतिषु चोदकेनापि प्राप्तिसम्भवेन द्विरुक्तत्वापत्तेः । किं तु प्रकृतिषु । तदुक्तम्—
'प्रकृतौ वा द्विरुक्तत्वात्' इति ।

---

स्रुवादि च न चतुरवत्तादिधारकमिति ।

अपूर्वसाधनलक्षणायां यावति क्रतौ जुहूरस्ति, तावदपूर्वसाधनलक्षणैव प्रतीयते, नैवं तत्त्वत इत्याह सेति । सा वाक्यगम्याङ्गभावा । इयम् जुहूद्वारा क्रतुगामिनी । अनारभ्य कञ्चित्क्रतुविशेषमनधिकृत्य । अधीतेति । अधीताऽपीत्यर्थः । इदं सर्वक्रतुगामित्वगमकम् । नेत्यादि । न सर्वक्रतुजन्यापूर्वसाधनोद्देशेन विधीयत इत्यर्थः । कुत इत्यत्राह विकृतिष्विति । चोदकेनेति । अतिदेशप्रमाणेन, एकाङ्गभावविशिष्टपदार्थविषयकतद्गतोपकारद्वारकतदितराङ्गभावबोधजनकेन 'प्रकृतिवद्विकृतिः कर्तव्ये'त्यादिरूपेण प्रमाणेनेत्यर्थः । अपिना प्रकृतवाक्यसमुच्चयः । यदि पदार्थानां प्रत्येकमेव चोदककल्पनं स्यात् प्रयाजैः कर्तव्याऽनूयाजैः कर्तव्येति, तदा प्रत्यक्षविधिनैव पर्णतायाः प्राप्त्या पर्णतया कर्तव्येति चोदकं कल्प्येत । एवं च न द्विरुक्तिः । लाघवात्तु प्रकृत्यङ्गैर्विकृतिः कर्तव्येत्येकस्यैव चोदकस्य कल्पनादङ्गत्वाविशेषात्पर्णताया अपि प्राप्तिः सम्भवतीति । तदेतत्सूचयितुं प्राप्त्येत्यनुक्त्वा प्राप्तिसम्भवेनेत्युक्तम् । द्विरुक्तत्वापत्तेरिति । विकृतौ जुह्वादिप्रापकप्रमाणान्तराभावेन तदर्थमतिदेशस्य कल्पनीयतयाऽङ्गान्तराणामिव पर्णताया अपि प्राप्तिः सम्भवति । प्रकृते चानारभ्याधीतवाक्ये सर्वापूर्वविवक्षणेऽनेनापि सा प्राप्यत इति द्विरुक्तिः । अनेन सौत्रद्विरुक्तत्वादितिपदस्याप्यर्थ उक्तः । इह सूत्रं प्रमाणयति तदुक्तमित्यादिना । प्रकृताविति जात्यभिप्रायमिति प्रकृतिष्वित्यनेन सूचितम् । वाकार एवकारार्थः । विकृतिष्वित्यध्याहारः । अद्विरुक्तत्वादिति पदच्छेदे प्रकृतावेव गच्छति तदानीमेवाद्विरुक्तत्वसम्भवादित्यर्थः । ननु प्रत्यक्षेणाविशे-

अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्, गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्, न हि गृह-

---

षात्सर्वजुह्वर्थत्वे पर्णताया अवगते सामान्यतः कल्प्यमानस्याप्यतिदेशस्यैतद्व्यतिरिक्तविषयकत्वमेव कल्प्यताम्। यथा शरमयं बर्हिर्भवतीति विशेषविध्यनुसारेणातिदेशस्य कुशातिरिक्तविषयकत्वम्। उच्यते। जुह्वाः विकृत्यङ्गत्वे सिद्ध एव जुहूपदेन तदपूर्वसाधनस्यापि ग्रहणं भवति। विकृत्यङ्गत्वं चातिदेशायत्तम्। अतिदेशश्च प्रकृतेः सर्वाङ्गसम्बन्धानन्तरम्। अतः पर्णतयाऽप्यङ्गभूतया विशिष्टायाः प्रकृतेरातिदेशेन जुह्वाः विकृत्यङ्गत्वं परिकल्प्य तदुद्देशेन पर्णता विधीयत इति वक्तव्यम्। विकृत्यङ्गत्वसिद्ध्यर्थातिदेशौपयिकसर्वाङ्गसम्बन्धसिद्ध्यै च प्रकृत्यङ्गजुहूद्देशेनापि पर्णता ततःप्राग्विधेया। न ह्येवं विधौ सति पुनरपि विकृत्यङ्गजुहूद्देशेन विधिः सम्भवति। न च विधानाभावे विकृतौ पर्णता न प्राप्नोति, अतिदेशादेव प्राप्तेरिति। एवं च सूत्रे द्विरुक्तत्वादित्यस्य पर्णतादेर्द्विर्विधानप्रसङ्गादित्यपेक्षितव्याख्यानं सम्भवतीति ध्येयम्। ननु द्विरुक्तत्वप्रसक्त्या प्रकृतावेव निवेश इति न युक्तं वक्तुम्। अपि तु यत्र यत्र निवेशे द्विरुक्तत्वं नास्ति तत्रेत्येव वक्तव्यम्। न च सा सर्वा प्रकृतिरेव। अप्रकृतेरपि तथात्वदर्शनादिति चेन्न। प्रकृतप्रकृतिशब्देन तत्सर्वानुगतार्थस्यैव विवक्षणात्। तदेतदाह अत्रेति। अत्र सूत्रे। अस्य प्रकृतिशब्देनेत्यनेनान्वयः। विकृतिर्यतोऽङ्गानि गृह्णातीति। यदवधिकाङ्गग्रहणवती विकृतिरित्यर्थः। तथा च विकृतिकर्तृकाङ्गग्रहणावधिः प्रकृतिरिति न महर्षिणाऽभिमतमित्यर्थः। अत्र विकृतित्वमुपलक्षणम्। यत्किञ्चित्कर्तृकेत्येव विवक्षितम्। अन्यथा या प्रकृतेरङ्गानि गृह्णाति सा विकृतिरिति तुल्यन्यायेन विकृत्यर्थवर्णनेऽन्योन्याश्रयणात्, प्रयोजनाभावाच्च। गृहमेधीय इति। 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं निर्वपे'-दिति वाक्यविहिते गृहमेधीययाग इत्यर्थः। अप्राप्तिप्रसङ्गादिति। तस्य निरुक्तप्रकृतित्वाभावादिति भावः। प्रकृतित्वाभावमेवोपपादयति न हीति।

**मेधीयात् काचन विकृतिरङ्गानि गृह्णाति, मानाभावात्, किं तु चोदकाद्यत्राङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम् । यथा दर्शपूर्णमासौ । तत्र हि न चोदकादङ्गप्राप्तिः, प्रकरणपठितैरेवाङ्गैर्नैराकांक्ष्यात् । गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः । क्लृप्तोपकारैरेव आज्यभागादिभिर्नैराकांक्ष्यात् ।**

---

काचनविकृतिरिति । किञ्चित्कर्मेत्यर्थः । मानाभावादिति । समानमितरच्छ्येनेनेत्यादिवत् क्वचिदेतद्विकृतित्वबोधकस्यातिदेशप्रमाणस्याभावात् । इष्टित्वादिसाजात्येन कल्पनीयस्याप्यतिदेशस्य बह्वङ्गविशिष्टदर्शपूर्णमासनिरूपितत्वेन काल्पनिकातिदेशस्याप्यभावाच्चेति भावः । किं तर्हि विवक्षितम् ? तदाह किन्त्विति । चोदकाद्यत्राङ्गप्राप्तिरिति । चोदकाधीनाङ्गप्राप्तिर्यत्र नेत्यर्थः । चोदकगम्याङ्गत्वनिरूपकत्वाभाववद्यदिति यावत् । यद्यपि विकृतिर्यतोऽङ्गानि गृह्णातीति प्रकृतिशब्दार्थासम्भवे उक्तेऽन्यस्मात् कर्मणो यदङ्गानि न गृह्णातीति प्रकृतसम्भवव्यर्थवर्णनं युक्तम् । न पुनश्चोदकादिति ; अथापि पूर्वं पर्णतायाः सर्वक्रतुनिवेशाभावे चोदकेन प्राप्तिसम्भवस्यैव हेतुतया निर्दिष्टत्वाच्चोदकेन यत्र न प्राप्तिस्तत्र निवेश इत्युक्तेरुचिततयैवमर्थकथनम् । एवं च द्विरुक्तत्वमपि चोदकसत्तानिबन्धनमिति स्पष्टं प्रतीयेतेति । उक्तमर्थं प्रसिद्धप्रकृतौ सङ्गमयति यथेति । नैराकांक्ष्यादिति । निर्गमिताकांक्षत्वादित्यर्थः । ईदृशप्रकृतिशब्दार्थत्वं गृहमेधीयेऽप्यस्तीत्याह गृहमेधीयादिष्वपीति । इष्टित्वाविशेषादस्यापि सौर्यादिवद्दर्शपूर्णमासविकृतित्वं कुतो नेत्यत्राह क्लृप्तेति । युक्तं सौर्यादावन्यत्र क्लृप्तोपकाराणामर्थानां सन्निधावपाठात् कथंभावाकांक्षायां सत्यां प्रकृतितः क्लृप्तोपकाराङ्गप्राप्तये चोदककल्पनमिति । इह तु सन्निधिविहितानामाज्यभागादीनां दर्शपूर्णमासयोरपि सत्त्वेन क्लृप्तोपकारकत्वात् कथंभावाकांक्षाकाल एव झटिति सम्बन्ध इति तावतैवाकांक्षोपशमान्न तथाविधाङ्गप्रापकचोदककल्पन-

अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां संनिवेशः । साप्तदश्यं त्वनारभ्याधीतमपि न प्रकृतौ गच्छति प्रकृतेः पाञ्चदश्यावरोधात् । किं तु विकृतिषु गच्छति । तत्रापि न सर्वासु गच्छति, चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात् । किं तु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति । यथाहुः—

---

मिति भावः । एवं प्रकृतिशब्दार्थमुक्त्वा सा चेयमित्यारब्धं सामान्येन निगमयति अत इति । सर्वक्रतुनिवेशे द्विरुक्तत्वापत्तेरतिदेशावधिगामित्वे क्वचिदभावप्रसङ्गाच्चेत्यर्थः ।

अयमुत्सर्गः । अपवादमाह साप्तदश्यन्त्विति । सप्तदश सामिधेनीरनुब्रूयादिति सामिधेन्यनुद्देशेन विधीयमानं साप्तदश्यं त्वित्यर्थः । प्रकृतेः दर्शपूर्णमासयोः । पाञ्चदश्यावरोधात् पाञ्चदश्येनावरोधात् । पञ्चदश सामिधेनीरनुब्रूयादिति प्राकरणिकवाक्येन सामिधेन्युद्देशेन पाञ्चदश्यस्य विहितत्वेन प्रकृतेस्तदवरुद्धत्वादित्यर्थः । वस्तुतस्तु अस्मिन् वाक्ये न पाञ्चदश्यविधिः । अपि तु सामिधेन्यनुवचनस्यैव । पञ्चदशेति तु एकादशानामृचां प्रकरणपठितानां 'त्रिः प्रथमामन्वाह त्रिरुत्तमा' मिति प्रथमोत्तमयोस्त्रिरभ्यासविधानेनैव पाञ्चदश्यस्य सिद्धत्वादनुवाद एव । न चैवं तस्य साक्षाद्विध्यभावेन तेन कथमवरोधः स्यादिति शंक्यम् । प्रकृताविव सप्तदश वैश्यस्येति वैश्यनिमित्तकसाप्तदश्यविधानादेव पाञ्चदश्यसत्तायाः प्रतीतेः, साक्षाद्विध्यभावेऽपि गम्यमानतया तदबाधेन विकृतौ निवेशादप्यनारभ्याधीतस्योपपत्तौ तद्बाधायोगाच्च । अतो गम्यमानतयैव पाञ्चदश्यावरोधो विवक्षित इति । एवं तृतीयषष्ठसिद्धमुक्त्वा तत्रैव दशमाष्टमसिद्धमंशमाह तत्रापीति । विकृतिष्वपीति तदर्थः । चोदकप्राप्तेति । अतिदेशेनैकादशानामृचां प्रथमोत्तमयोस्त्रिरभ्यासस्य च प्राप्तत्वेन सिद्धेरित्यर्थः । विकृतिविशेषनिवेशे गमकं वक्तुं प्रत्यक्षश्रुतसाप्तदश्यास्विति । यदि क्वचिदपि प्रकरणे न साप्तदश्यमश्रोष्यत, तर्हि क्वचिद्विकृतौ चोदकप्राप्त-

एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम् ।
विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः ॥ इति ।

न च वाक्यवैयर्थ्यम् । अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात् । उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम् । यदाहुः—

---

पाञ्चदश्यग्रहणे सर्वत्रैव ग्रहणप्रसङ्गेन साप्तदश्यमनारभ्य विहितं व्यर्थमेव स्यादिति निरवकाशत्वादिदं साप्तदश्यमेव विकृतिसामान्ये न्यवेक्ष्यत । क्वचित् साप्तदश्यश्रवणात्तु नैवम् । यदि तावत् साप्तदश्यं विकृतिसामान्यगामि स्यात्, व्यर्थं तर्हि क्वचित्साप्तदश्यश्रवणम् । अतस्तदेव ज्ञापयति न तत् सर्वत्र गच्छतीति । मित्रविन्दादीत्यादिना अध्वरकल्पापशुबन्धादिग्रहः । यदाहुरिति । यत् साप्तदश्यस्य प्रकृत्यगामित्वं विकृतिविशेषागामित्वं च । एवं चेति । एवं च प्रकृतौ, तथा यत्र साप्तदश्यस्य पुनः पाठो नास्ति तत्र मित्रविन्दादिभिन्नायां विकृतौ च पाञ्चदश्यं प्रतिष्ठितमित्यर्थः । नन्वनारभ्याधीतवाक्येऽपि सामिधेनीनामग्निसमिन्धनप्रकाशिकानां स्वरूप आनर्थक्यप्रसक्तौ क्रतुसम्बन्धाव्यभिचारसत्त्वेन क्रत्वपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकमन्त्रत्वेनोद्देश्यत्वं वक्तव्यम् । तावतैव साप्तदश्यस्य सामिधेनीसम्बन्धस्तद्द्वारा क्रतुसम्बन्धश्च सिद्ध्यतीति मित्रविन्दादिप्रकरणगतवाक्यवैयर्थ्यम् । न च प्राकरणिकवाक्येनैव तद्विधिरिति वाच्यम् । तथा सति तद्वाक्यवैयर्थ्यादित्याशंक्याह न चेति । ननूपसंहारो विशेषवृत्तित्वबोधनम् । तत्सामान्यवृत्तित्वबोधनादेव सिद्धमित्यत्र तदर्थमाह उपेति । नियमनमिमिति । न केवलं विशेषवृत्तित्वबोधनमुपसंहारः । अपि तु तन्मात्रवृत्तित्वबोधनमिति । तथा चानारभ्याधीतवाक्ये सामान्यतः क्रत्वपूर्वसाधनत्वेनोद्देश्यत्वावगतौ विशेषस्यैवानुष्ठेयत्वेन किंक्रत्वपूर्वसाधनतयोद्देश्यत्वमित्यपेक्षायां प्राकरणिकवाक्येन विशेषसम्बन्धित्वावगमे जातेऽर्थात्तावन्मात्रे सङ्कोचः सिद्ध्यतीत्यनारभ्याधीतक्रत्युद्देश्यसम्बन्धित्वबोधनम्,

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । इति

तत्रानारभ्य विधिः सामान्यविधिः, मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत् । प्रकृतमनुसरामः । तत्सिद्धं वाक्यादङ्गत्वम् ।

---

प्राकरणिककृत्यं विशेषनियमनमिति न वाक्यवैयर्थ्यमिति भावः । नन्वेवं सामान्यप्राप्तस्य विशेष उपसंहारे 'न ब्राह्मणं हन्या' दिति सामान्यप्राप्तस्यापि नात्रेयीं हन्यादिति विशेषे उपसंहारापत्तिरित्यत्र सर्वप्रदानाधिकरणवार्तिकं प्रवर्तयति यदाहुरिति । स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भव इत्युत्तरार्धम् । अस्पष्टः अनुष्ठानाय विशेषापेक्ष इति सोमनाथः । विधिर्हि पुरुषं प्रवर्तयन् युगपत् सर्वत्र प्रवृत्त्यसम्भवाद्विशेषमपेक्षत इति सति विशेषे तत्रोपसंहरणीयो भवति । निषेधस्तु तं निवर्तयन् सर्वतोऽपि निषेध्याद्युगपदेव निवृत्तिसम्भवान्न विशेषमपेक्षत इति नोपसंहरणीय इति भावः । एकानुपूर्वीकयोर्वाक्ययोः सामान्यविशेषविवेकमुत्पादयति तत्रेति । अनारभ्य विधित्वात्सामान्यविधित्वम् । प्रकरणस्थत्वाच्च विशेषविधित्वमिति भावः । ननूपसंहारकत्वेनाभ्युपगतेन प्राकरणिकवाक्येनैव सर्वस्यापि सिद्धौ विध्यन्तरं व्यर्थमिति चेन्न । एकैकांशतात्पर्येणैकैकवाक्यप्रवृत्तेरेवोचितत्वात् । ननु विशेषसम्बन्धित्वमेव साप्तदश्यस्यापेक्षितम् न पुनः सामान्ये प्रसञ्जनं तन्निषेधश्च । अतः किमर्थमनारभ्याधीतमिति चेत् न खल्विदमेव वाक्यकृत्यम् यत् सामान्ये प्रसञ्जनं विशेषे नियमनं चेति । अपि-त्वनारभ्याधीतेन सामिधेनीसम्बन्धबोधनम्, प्राकरणिकेन च क्रतुसम्बन्धबोधनमिति । तत्र यो नागानारभ्याधीतेनैव क्रतुसम्बन्धोऽपि बोद्धुं शक्य इति मेने, तस्मा उक्तं न तेन क्रतुविशेषबोधो भवतीति । इदमभिसन्धायाह इत्यास्तां तावदिति । एवमसति बाधकेऽनारभ्याधीतानां प्रकृतिगामित्वमित्युक्तम् । एवंभूतानामपि न सर्वेषां प्रकृतिमात्रगामित्वम् । यत्रानारभ्यविधिपूद्दिश्यस्वरूप आनर्थक्ये सति स्वापूर्वमेव लक्षयितुं न शक्यते ।

तदिदं वाक्यं प्रकरणाद्बलीयः। प्रकरणं हि न साक्षाद्विनियोजकम्। तद्ध्याकांक्षारूपम्। न चाकांक्षा स्वयं प्रमाणं ; किन्तु साकांक्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः—नूनमिदं वाक्यं केन चिद्वाक्येनैकवाक्यभूतमिति । ततश्चाकांक्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम् । एवं च यावत्प्रकरणं वाक्यं कल्पयि-

---

प्रकृत्यादिप्रधानापूर्वमेव लक्षणीयं भवति, तद्वाक्यविहितानामेव प्रकृतिमात्रगामित्वम् । अत एव वारणो यज्ञावचरः वैकङ्कतो यज्ञावचर इत्यादौ यज्ञस्वरूप आनर्थक्ये स्वापूर्वलक्षणासम्भवेन प्रकृतिविकृतितदङ्गसर्वयज्ञार्थत्वमेव वारणादिवृक्षविकाराणां यज्ञपात्राणाम् । इदं विस्तरभिया विसृजन्नाह प्रकृतमनुसराम इति ।

एवमव्यभिचरितक्रतुसम्बन्धसहकृतद्विरुक्तत्वनयेनापूर्वविशेषसाधनत्वेन जुह्वा उद्देश्यत्वस्य सिद्धतया तत्र पर्णताविधेः सम्भवेनेहाङ्गत्वं वाक्यादेवेति वाक्यस्याप्यङ्गताग्राहकत्वं सिद्धमित्युपसंहरति तत्सिद्धमिति ।

अथ तस्य तदुत्तरप्रमाणप्राबल्यमाह तदिदमिति । लक्षितं परीक्षितं चेति तदर्थः । प्रकरणस्य वाक्यसापेक्षत्वमुपपादयति प्रकरणं हीति । साक्षात् वाक्यादिकमद्वारीकृत्य । प्रमाणमिति अङ्गत्व इति शेषः । विहितत्वघटिताङ्गत्वस्य विधिवाक्यरूपशब्दैकगम्यत्वेनाकांक्षाया अशब्दात्मनस्वतस्तत्र प्रमाणत्वं न हि सम्भवतीत्यर्थः । किन्त्विति । एकवाक्यत्वे प्रमाणमित्यत्रान्वयः । वाक्यान्तरैकवाक्यत्वे प्रमाणत्वप्रकारमेव दर्शयति साकांक्षमिति । वाक्यम् समिधो यजतीत्यादिवाक्यम् । केनचिद्वाक्येन दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इत्यादिवाक्येन । तथा चेदं वाक्यं तद्वाक्यैकवाक्यभूतं तद्वाक्यबोध्यार्थविषयकाकांक्षावत्त्वादित्यनुमानप्रकारः । अतश्च एतादृशमत्युत्पादाच्च । वाक्यान्तरैकवाक्यत्वे प्रमाणमिति । वाक्यान्तरैकवाक्यत्वकल्पनेन प्रमाणमिति युक्तोऽर्थः । वाक्यस्य वाक्यान्तरैकवाक्यत्वं नाम तद्वाक्यजन्यशाब्दबोधविषयार्थान्वय्यर्थविषयकशाब्दबोधज-

त्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः।

अत एवेन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताभित्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेक-

नकत्वम्। तथा चाकांक्षायां सत्यामपेक्षितस्याङ्गत्वबोधस्य पदमन्तराऽसम्भवेनाङ्गाङ्गिपदयोरावश्यकत्वे सिद्धे ययोर्वाक्ययोराकांक्षा जाता तयोरेव महावाक्यावयवत्वरूपपदत्वकल्पनया पर्णमयी जुहूरितिवन्मिथः साहित्येन समिधो यजति दर्शपूर्णमासाभ्यां यजेतेति महावाक्यं कल्पयित्वा पश्चात्तदर्थगतां कारकवाचिश्रुतिकल्पनयोग्यतां परामृश्य समिधो यजति इत्थं दर्शपूर्णमासाभ्यां यजेतेति श्रुतिसहितमहावाक्यकल्पनया प्रकरणस्य प्रमाणत्वमिति भावः। भवतीतीति। वाक्यकल्पनानन्तरं लिङ्गश्रुतिकल्पनाया अप्यवश्यम्भावेन तस्य विलम्बितत्वादिति भावः। इन्द्राग्नी इति। 'अग्निरिदं हविरजुषत अवीवृधत महोज्यायोऽकृत। अग्नीषोमाविदं हविरजुषेतां अवीवृधेतां महो ज्यायोक्राताम्' इत्येवं कृत्स्नोपयुक्तदेवताविषयकः सूक्तवाकनिगदोऽयम्। ननु सूक्तवाकेन प्रस्तरं प्रहरतीति तृतीयाश्रुत्या कृत्स्नस्यापि सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वबोधनेन दर्शप्रयोगे पूर्णमासप्रयोगे च कृत्स्नस्यैव प्रयोगात् कथमेकवाक्यतया दर्शाङ्गत्वमित्युच्यत इत्यत्रोक्तं इन्द्राग्निपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्ध इति। कृत्स्नस्यापि सूक्तवाकस्य प्रयोगे एतत्प्रयोगे तद्देवतोद्देशस्य दृष्टार्थत्वासम्भवात् एतद्देवतामात्रोद्देशे च तत्स्मरणरूपदृष्टप्रयोजनसम्भवात्तत्तद्देवताकर्मप्रयोगे तत्तद्देवतावाचिपदप्रयोग इति लिङ्गाद्विभज्यैव विनियोगस्य तृतीयद्वितीये साधितत्वादिति भावः। किञ्चैतदसिद्धौ वाक्यकर्तव्यमितरपदानां तदङ्गत्वमपि न सिद्ध्येदिति तत्सिद्धिरुक्तेति। 'असन्नयत ऐन्द्राग्नमेकादशकपालं निर्वपे'दित्यैन्द्राग्नस्य विहितत्वात्तद्देवताप्रकाशकमिन्द्राग्नी इति। तदेकवाक्यत्वात् इन्द्राग्नीपदैकवाक्यत्वात्।

**वाक्यत्वाद्दर्शाङ्गत्वम्, न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम्, प्रकरणाद्वाक्यस्य बलीयस्त्वादिति।**

---

ननु प्राग्वाक्यैकदेशबोध्यस्यार्थस्यैकदेशान्तरार्थेन सहाङ्गाङ्गिभावो द्वितीयाद्यभावे वाक्यगम्य इत्युक्तम्। यथा पर्णमयी जुहूर्भवतीति। न हि तत्र पर्णमयीशब्दस्य किञ्चिदङ्गत्वं व्युत्पादितम्। अपि तु तदर्थस्य। तत्कथमिहेदंहविरित्यादिपदानां प्रकृतवाक्याश्रुतदर्शाङ्गत्वं वाक्यरूपप्रमाणगम्यमित्युच्यते? उच्यते। सत्यमेकदेशार्थस्यैकदेशान्तरार्थस्य चाङ्गाङ्गिभाव एव वाक्यगम्यः। स च क्वचित् साक्षादङ्गाङ्गिभावरूपः क्वचित् प्रमाणान्तराविरोधेन केवलमुपसर्जनोपसर्जनिभावरूप इत्यन्यदेतत्। इह चेन्द्राग्नी इदं हविरिति वाक्यस्य विशिष्टैकार्थप्रतिपादकत्वमविवादम्। तत्र मन्त्रत्वादस्य कैमर्थ्याकांक्षा तावदस्ति। अतश्च कैमर्थ्याकांक्षायामिन्द्राग्नीपदमिन्द्राग्निरूपदेवताप्रकाशनार्थमित्यवगम्यते। सामान्यसम्बन्धबोधकेन प्रकरणेन दर्शापूर्वसाधनेन्द्राग्निप्रकाशनार्थत्वं च सिद्ध्यति। एवं इदं हविरित्यादीनामपि पदानां कैमर्थ्याकांक्षायां स्वस्वार्थप्रकाशनार्थमवगम्यते। एवं प्रकाश्यमानानामर्थानां परस्परान्वयस्यैकवाक्यताबलात्सिद्धत्वेन वाक्यरूपप्रमाणेनेन्द्राग्न्यर्थत्वमेवेदं हविरित्यादिपदार्थानां सिद्ध्यति। न च हविःपदसामर्थ्यात्सामान्यसम्बन्धबोधकप्रकरणसहकृतात्तस्य प्रधानार्थहविःप्रकाशनार्थत्वेऽवगते इन्द्राग्न्यादीनामपि तदर्थत्वमिति किं न स्यादिति शंक्यम्। तथा सति दर्शपूर्णमासीयसर्वहविरर्थत्वापत्त्या हविःपदेन्द्राग्नीपदस्यान्वयासम्भवात्, प्रतिवाक्यं देवताविशेषश्रवणेन वाक्ये देवताप्राधान्यस्यैवावगमाच्च। अत इन्द्राग्न्यर्थत्वमिदं हविरित्यादिपदार्थानां वाक्येन गम्यते। एवञ्चेन्द्राग्नीपदस्य दर्शसम्बन्धीन्द्राग्निप्रकाशनार्थत्वं प्रकरणसहकृताल्लिङ्गात्; इदं हविरित्यादीनां च वाक्यसहकृताल्लिङ्गाद्दर्शसम्बन्धीन्द्राग्निसम्बन्ध्यर्थप्रकाशना-

उभयाकांक्षा प्रकरणम् । यथा प्रयाजादिषु समिधो यज-

र्थत्वमिति विवेकः । इन्द्राग्निपदस्य किञ्चिद्द्वारा दर्शाङ्गत्वमिव तेषां पदानामपि तत् । अतश्च लिङ्गस्यैवाङ्गताग्राहकत्वेऽपि इन्द्राग्निद्वारा दर्शाङ्गत्वस्य वाक्यकार्यत्वात् वाक्यादङ्गत्वमित्युक्तिः । वाक्यं हि इन्द्राग्नीपदगतप्रकरणसहकृतलिङ्गबलभासितदर्शसम्बन्धीन्द्राग्निशेषत्वं हविःपदार्थे गमयत् लिङ्गबलाद्धविःपदार्थशेषभूतं हविःपदमपि परम्परया दर्शशेषं गमयतीति । किन्चात्र प्रकरणस्याङ्गताग्राहकत्वप्रसक्तिरेव नास्ति । मन्त्रस्य सिद्धरूपत्वेनेतिकर्तव्यतात्वाभावादितिकर्तव्यताऽऽकांक्षालक्षणस्य प्रकरणस्याभावात् । अतोऽधिकाराख्यप्रकरणमेव प्रकरणपदेन विवक्षणीयम् । तस्यापि प्रकृते सामान्यसम्बन्धबोधकत्वमेव । एवं च किं प्रकरणरूपं सामान्यसम्बन्धबोधकमादाय दर्शपूर्णमासार्थहविःप्रकाशनार्थत्वमिदं हविरित्यादीनां किं वा वाक्यमादाय दर्शार्थेन्द्राग्निसम्बन्धिहविःप्रकाशनार्थत्वमिति विचारे वाक्यस्यैव प्राबल्यात्तदेवादायोत्तरमेव ग्राह्यमिति ग्रन्थतात्पर्यमिति ।

तर्हि विनियोजकयोर्वाक्यप्रकरणयोर्वाक्यस्य प्राबल्ये किमुदाहरणमिति चेदत्र नव्याः--संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपेदित्यत्र प्रकरणाद्वैमृधेष्टेर्दर्शपूर्णमासोभयार्थत्वे प्राप्ते वाक्यात् पौर्णमासीमात्रार्थत्वमिति । नन्वत्रापि पौर्णमासीमिति द्वितीयान्तस्य संस्थाप्येत्यनेनान्वयाद्वैमृधभावनायामन्वयासम्भवात् पदान्तरकल्पनया च पौर्णमास्या उद्देश्यत्वेऽङ्गत्वस्य श्रुतपदरूपवाक्यप्रमाणकत्वाभावान्नेदमुदाहरणमिति चेन्न । अन्यत्रान्वितस्यापि शब्दस्य श्रवणेन झटित्यर्थोपस्थितौ लिङ्गतः श्रुतिकल्पनावसरे पदविशिष्टश्रुतेः कल्पनसम्भवान्न वाक्यत्वं हीयत इति ।

अथ चतुर्थं प्रमाणं निरूपयति उभयेति । उभयोराकांक्षा-उभयाकांक्षा । सामान्यत उभयाकांक्षाया अतिप्रसक्तत्वेन कयोरुभयोराकांक्षेति जिज्ञासायां तद्विशेषं लक्ष्ये क्वचिदुपपादनेनैव निरूपयति यथेति । प्रया-

तीत्यत्र इष्टविशेषस्यानिर्देशात्समिद्यागेन भावयेत् किमित्यस्त्युपकार्याकांक्षा । दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्यस्त्युपकारकाकांक्षा । अत उभयाकांक्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिद्ध्यति ।

---

जादिषु प्रयाजादिविधायकवाक्येषु । आदिनाऽनूयाजाज्यभागादिपरिग्रहः । घटकत्वं सप्तम्यर्थोऽत्रेत्यनेनान्वेति । अथवा यथा प्रयाजादिष्वित्येकं पृथग्वाक्यम् । तेन लक्ष्यस्थलं दर्शितम् । अथोपपादयति समिध इत्यादिना । इत्यत्रेति । अस्तीत्यनेनान्वयः । इष्टविशेषस्येति । यद्यपीष्टसामान्यस्यापि न निर्देशः ; अथापि विध्यन्यथाऽनुपपत्त्या सामान्यलाभाच्छाब्दभावनायामन्वयाय तद्वाचकपदमध्याहर्तव्यमिति निर्दिष्टरूपत्वाद्विशेषपदम् । अनिर्देशादिति । निर्देशे तु सा शान्ता स्यात् । अनिर्देशात्त्वस्तीति भावः । यागस्य नोद्देश्यत्वं करणत्वादिति वक्तुं यागेनेति विवरणम् । समिध इति द्वितीयान्तपदश्रवणात्तदर्थस्योद्देश्यत्वमिति शङ्काया वारणाय तस्य यागनामधेयत्वं वक्तुं समिद्यागेनेति । किमिति । किमित्युपकार्याकांक्षाऽस्तीत्यन्वयः । एवमाकांक्षाद्वये एका उपकार्यविषयिणीत्युक्तम् । अथान्यां विवृणोति दर्शेति । दर्शपूर्णमासाभ्यां स्वर्गमिति पदाभ्यां केन किमित्याकांक्षाद्वयमेव वाक्येन शाम्यतीति सूचितम् । उपकारकाकांक्षेति । तथा चोपकार्याकांक्षा उपकारकाकांक्षा च सम्भूय प्रकरणमित्युक्तं भवति । अशब्दगम्येषु लौकिकेष्वपि कर्मस्वेवम्भूताकांक्षाद्वयमस्ति । न तु तत्र प्रकरणव्यपदेशः । अत उभय्यामप्याकांक्षायां वाक्यगतत्वमपि विशेषणं देयमिति मनसिकृत्य च समिधो यजतीत्यत्रेति दर्शपूर्णमासवाक्येऽपीति चोक्तम् । प्रथमाकांक्षामात्रनिवेशे विकृतिसान्निधिस्थापूर्वविधिगतायाः स्थानात्मन आकांक्षायास्तथात्वप्रसङ्गः । द्वितीयाकांक्षामात्रनिवेशे च विकृतिविधिगतायाः प्राकृतपदार्थविषयिण्या उपकारकाकांक्षायास्तथात्वं स्यादित्युभयोर्निवेशः । न चैवमपि प्रकरणपठितानां मन्त्राणामुपका-

र्थाकांक्षावत्त्वात् प्रधानविधीनां चोपकारकाकांक्षावत्तया तादृशाकांक्षाद्वयस्यापि प्रकरणत्वप्रसङ्गः । न चेष्टापत्तिः ; क्रियाया एव प्रकरणग्राह्यत्वस्य वक्ष्यमाणतया सिद्धवस्त्वाकांक्षाघटितसमुदायस्य तत्त्वायोगादिति वाच्यम् । उपकारकत्वेनोपकारकाकांक्षाया अनिवेशात् । कथमिति प्रतीतिविषयेतिकर्तव्यतात्वेनैव तन्निवेशात् । तथा च स्वाश्रयीयोपकार्याकांक्षाविशिष्टत्वस्वप्रकारकत्वोभयसम्बन्धेनेतिकर्तव्यतात्वविशिष्टाकांक्षा प्रकरणमिति । वाक्यजन्यशाब्दोत्तरकालिकाकांक्षायामेव प्रकरणव्यपदेश इत्यालोचने चैतद्घटकमाकांक्षावैशिष्ट्यमेकात्मवृत्तित्वसम्बन्धेनेव स्वप्रयोजकवृत्तिशाब्दत्वजात्याश्रयप्रयोज्यत्वसम्बन्धेनापीति बोध्यम् । ननु ज्योतिष्टोमगतकथम्भावाकांक्षां दर्शाद्यङ्गप्रयाजादिगतोपकार्याकांक्षां चादाय तत्रातिव्याप्तिः स्यादिति सन्निहितविधिस्थत्वमितिकर्तव्यताकांक्षायां निवेश्यम् । एवञ्च प्राकृतपदार्थान्वयौपयिक्या विकृतिगतेतिकर्तव्यताकांक्षायाः प्राकृतपदार्थसन्निहितविधिस्थत्वाभावादेवातिव्याप्तिवारणसम्भवे उपकार्याकांक्षाघटनं किमर्थमिति चेत् न । तादृशाकांक्षाद्वयस्य भिन्नकालिकत्वेनैकक्षणवृत्तित्वाभावात् । किञ्च दध्नेन्द्रियकामस्य जुहुयादिति गुणकामविधिस्थले दध्न इन्द्रियार्थस्येतिकर्तव्यताकांक्षावत्त्वात्तस्या अङ्गविधिसन्निहितविधिस्थत्वेन तत्रापि प्रकरणत्वप्रसङ्ग इति तन्निवेशः । तत्र ह्याश्रयतो धर्मातिदेश एव सिद्धान्तसिद्धः, न त्वाश्रयसमानविधानत्वम् । उपकार्याकांक्षानिवेशे चैवं वारणम् । दध्नो हीतिकर्तव्यताकांक्षा तस्येन्द्रियसम्बन्धज्ञानानन्तरं भविष्यति । इन्द्रियरूपफलवत्ताज्ञानं च तस्य सिद्धरूपत्वेन स्वतः फलसाधनत्वासम्भवेनाश्रयवत्ताज्ञानमपेक्षते । वाक्यान्तरविहितानूदितस्यैवाश्रयत्वेन ततः प्रागेवाश्रयज्ञानमपेक्षितम् । तथा च यदैवाश्रयज्ञानं तद्विधायकवाक्याद्भवति तदैव प्राकरणिकाः पदार्थास्तत्रेतिकर्तव्यतात्वेनान्विता इति, यदा दधिविधेरितिकर्तव्यताकांक्षा तदा

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यताम् । विश्वजिदधिकरणे हि विश्वजिता यजेतेत्यत्र फलस्याश्रवणात्, फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् । तदुक्तम्—

'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति ।

रात्रिसत्रन्यायेन वाऽऽर्थवादिकं फलं कल्प्यताम् । रात्रिसत्रा-

---

प्राकरणिकेतिकर्तव्यतानिष्ठाकांक्षा शान्तेति नोभयोर्यौगपद्यमिति । अतः उपकार्याकांक्षाया उपकारकाकांक्षायाश्च सत्वात् ।

ननु प्रयाजादिविधिर्न दर्शपूर्णमासावेव साक्षादाकांक्षति । अपि त्विष्टम् । तच्चान्यदेव भवितुमर्हतीत्याशङ्कते नन्विति । ननु फले कल्पयितव्ये यस्य यस्य यद्यदिष्टं तत्तत्कल्पयितुं युक्तम् । न स्वर्ग एवेति शङ्कापरिहारेणोपपादयति विश्वजिदधिकरण इति । इदं चतुर्थतृतीये । अश्रवणात् पदतो ग्रहणाभावात् । अनुपपत्तेरिति । प्रवर्तनात्मकस्य विधेरिष्टसाधनताद्वारैव प्रवृत्तिहेतुत्वेन प्रवृत्तिविषये इष्टसाधनत्वस्याक्षेप्यतया इष्टसाधनत्वाभावे विधिश्रुतिर्नोपपद्येतेति । फले कल्पयितव्य इति । अथ तद्विशेषाकांक्षायामिति शेषः । कल्पयितव्य इत्यस्य वा विशेषतो निर्धारयितव्य इत्यर्थः । सर्वाभिलषितत्वेनेति । उत्कटरागरूपस्याभिलाषस्य दुःखासम्भिन्नसुखस्वरूपे स्वर्ग इवान्यत्रासम्भवात् पुत्रपश्वादेः सुखसाधनत्वेनाभिलषितत्वेऽपि स्वतोऽनभिलषितत्वात् सर्वपुरुषानपेक्षितत्वाच्च नेतरस्य भाव्यत्वम् । अतो विनिगमकसत्त्वेन स्वर्गस्य भाव्यत्व एकान्वयेनैवाकांक्षाशान्त्या नान्यस्य प्रसक्तिरिति भावः । अत्र सूत्रं प्रमाणयति तदुक्तमिति । सः कामः । न्यायान्तरमाह रात्रीति । आर्थवादिकम् । अर्थवादोपात्तम् । रात्रिसत्राधिकरण इति । इदमुक्तपूर्वसमनन्तरम् । ज्योतिर्गौरायुरिति वाक्योत्पादितानि ज्योतिरादिनामकानि कर्माणि रात्रयः । ता एव उपेतिचोदना-

धिकरणे हि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्र विध्युद्देशे फलाश्रवणात् फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम् । विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसम्बन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात् । तदुक्तम्—

फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ' इति ।

---

चोदितत्वात्सत्त्रम् । रात्रीरुपयन्तीति । आभिर्यजन्त इत्यर्थः । विध्युद्देशे विधिवाक्ये । फलमिति । तथा च प्रतितिष्ठन्तीत्यस्य प्रतितिष्ठासन्तीति सन्नन्तत्वकल्पनया उपयन्तीत्यस्योपेयुरित्यर्थकतया च ये प्रतिष्ठां कामयन्ते ते रात्रीरुपेयुरित्यर्थाङ्गीकारेणार्थवादतया प्रतीयमानस्यास्य फलसमर्पकत्वमेवेति भावः । प्रतितिष्ठन्तीत्यस्य प्रतिष्ठास्यन्तीति वाऽर्थः । ननु विश्वजिन्न्यायेन सर्वाभिलषितस्वर्गफलकत्वं हि युक्तमित्यत्र स्वोक्ते हेतुमाह विश्वजिदिति । अनुपस्थितेति । स्ववाक्येन स्वकीयवाक्येन वाऽनुपस्थितेत्यर्थः । प्रकृतसम्बन्धकल्पने प्रकृतरात्रिसत्रफलत्वकल्पने । लाघवादिति । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायादुभयकल्पनाभावाच्च लाघवादित्यर्थः । एवं स्वमते साध्यवाचकपदकल्पनमपि नास्ति ; प्रतितिष्ठन्तीत्यस्यैव साध्यसमर्पकत्वस्योक्तत्वात् । अथापि क्वचिदर्थवादेषु स्तावकत्वमेवाङ्गीकृत्य तदुपस्थापितार्थस्य साध्यत्वेनान्वयाय पदान्तरकल्पनं सिद्धान्तिमतमिति स दोषो नोक्तः । इहापि सूत्रं दर्शयति तदुक्तमिति । कार्ष्णाजिनावाचार्ये फलसमर्पकत्वाभावमभिप्रेतवति आत्रेय आचार्य आह अर्थवादे निर्देशात्तदेव फलम् । तर्हि कुत्र विश्वजिन्न्यायः ? उच्यते ; फलस्य श्रवणाभावे ह्यनुमानं स्यात् । एवं चार्थवादतोऽपि फलालाभाद्विश्वजिदादौ स्वर्गकल्पनम् , नैवं प्रकृतेऽपीति । एवं च प्रयाजादिषु यत्रार्थवादतः फलं लभ्यते तत्र तदेवास्तु , अन्यत्र च

तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे सम्भवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियत इति।

मैवम्। स्वतन्त्रफलार्थत्वेऽन्यतराकांक्षया सम्बन्धः स्यात्। न ह्यत्र फलस्य साधनाकांक्षाऽस्ति। श्रूयमाणं हि फलं साधनमाकांक्षति। न चात्र तच्छ्रूयते। एवं च फलस्याकांक्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकांक्षयैव स्वतन्त्रफलार्थत्वं स्यात्। दर्शपूर्णमासार्थत्वे तूभयाकांक्षा प्रमाणम्। प्रयाजानां भाव्याकांक्षाया इतरत्र च कथम्भावाकांक्षायः सत्त्वात्। अन्यतराकांक्षातश्चोभयाकांक्षा बलीयसीति वक्ष्यते। ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति। तदुक्तम्—

'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्।' इति।

---

विश्वजिन्न्यायेन स्वर्गोऽस्तु। सर्वथा न दर्शपूर्णमासाङ्गत्वमित्युपसंहरति तस्मादिति। स्वतन्त्रफलार्थत्व इति। दर्शपूर्णमासौ हि फलान्तराङ्गतया परतन्त्रफलभूतौ। प्रतिष्ठादिकं त्वतथाभूतं स्वतन्त्रमिति। इदमपि किञ्चिन्नियामकम्। किमितीति केन हेतुनेत्यर्थः। न कोऽपि हेतुरिति भावः॥ नन्वेकयैवाकांक्षया फलार्थत्वे सम्भवति तद्द्वयेन तदर्थत्वकल्पनं न युक्तमित्यत्राह अन्यतराकांक्षात इति। न ह्यन्यतराकांक्षा स्वत एव किञ्चिदर्थत्वमवगमयिष्यति, अपि त्वन्यत्राप्याकांक्षां परिकल्प्य। तावत्क्लृप्तयैवाकांक्षयाऽङ्गत्वमुचितमिति भावः। वक्ष्यत इति। अन्यतराकांक्षायाः स्थानरूपप्रमाणत्वादिति भावः। यदुक्तमधिकरणविरोध इति तन्न। तयोरधिकरणयोः साधनाकांक्षफलान्तराभाववत्कर्मविषयत्वादिति द्योतयितुं स्वोक्ते प्रमाणं दर्शयति तदुक्तमिति। द्रव्येति। इदं चतुर्थतृतीयाद्यसूत्रम्। द्रव्ये संस्कारे कर्मणि च फलश्रुतिः फलसमर्पकत्वेन प्रतीयमानं वाक्यमर्थवादः केवलं स्तुतिपरः स्यात्। तेषां परार्थ-

अत्र द्रव्ये फलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न स पापँ श्लोकँ शृणोतीत्येवमाद्या। संस्कारे फलश्रुतिर्यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्त इत्येवमाद्या। कर्मणि फलश्रुतिर्वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्त इत्याद्या। कर्मपदं चारादुपकारककर्मपरं

---

त्वात् क्रत्वर्थत्वादिति तदर्थः। त्रिष्वपि फलश्रुतिं क्रमेण दर्शयति अत्रे-ति। द्रव्यसंस्कारकर्मस्विति तदर्थः। द्रव्ये संस्कारे कर्मणि च तदन्वयः। शृणोतीति। तथा च यथा प्रतिष्ठावाक्ये ये प्रतितिष्ठास-न्ति ते रात्रीरुपेयुरिति विपरिणामेनार्थवर्णनम्, तद्वत् प्रकृतेऽपि यः पाप-श्लोकं न शुश्रूषते स पर्णमयीं जुहूं कुर्यादिति वचनव्यक्तिःकर्तव्येत्यभिप्रायः। एवमाद्येत्याद्यपदेन यस्याऽऽश्वत्थी उपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्तीत्यादिपरिग्रहः। संस्कारे सन्निपत्योपकारके कर्मणि। यदिति। ज्योतिष्टोमे यजमानसंस्कारार्थमञ्जनं विहितम्। आद्येत्यनेन 'केशश्मश्रु वपते। नखानि निकृन्तते। दतो धावते। स्नाति। मृता वा एषा त्वगमेध्यं वास्यैतदात्मनि शमलं तदेवापहते मेध्य एवमेधमुपैतीत्यादिपरिग्रहः। इत्याद्येत्यनेन 'वर्म यजमानस्य भ्रातृव्यस्या-भिभूत्यै' इति प्रकृतवाक्यशेषपरिग्रहः। ननु कर्मपदेन प्रयाजग्रहणवत् यदङ्क्त इत्यादिविहिताञ्जनादेरपि ग्रहणसम्भवात् कथमेतस्यैव ग्रहणमित्यत्राह कर्मपदमिति। ननु द्रव्यकर्मणोरित्येव सूत्रयितुमुचितं लाघवादिति चेत् सत्यम्, तथाऽपि तावत्येव सूत्रिते कदाचित् कश्चिदेवं मन्वीत। द्रव्य-संस्कारविधिषु जुह्वादेरुद्देश्यस्य स्ववाक्य एवोपादानात् तद्विहायार्थवादिकं फलं न कल्पयितव्यमित्येव सूत्रकारहृदयम्। न पुनःप्रयाजादावारादुप-कारकेऽपि। तत्र स्ववाक्यानुपात्तक्रत्वर्थत्वोक्त्यपेक्षयाऽऽर्थवादिकफलार्थत्व-स्यैव युक्तत्वादिति। इमां मतिं परिहर्तुमारादुपकारकाणां पार्थक्यं सूत्र-

द्रष्टव्यम्, संस्कारकर्मणः पृथक्सङ्कीर्तनादित्यास्तां तावत्।

तदिदं प्रकरणं क्रियाया एव विनियोजकम्, न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकम्। कुत इति चेत्। शृणु। यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थभावनाऽभिधीयते भावयेदिति। सा-चांशत्रयमपेक्षते—किं भावयेत्केन भावयेत् कथं भावयेदिति। तत्र भाव्याकांक्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयाऽन्वेति—स्वर्गं भाव-येदिति। करणाकांक्षायां समानपदोपात्तो यागो भावार्थाधिकर-णन्यायेन करणतयाऽन्वेति– यागेन स्वर्गं भावयेदिति। ततः कथमि-ति कथम्भावाकांक्षायां यत्सन्निधौ पठितमश्रूयमाणफलकं च क्रि-याजातं तदेवोपकार्याकांक्षयेतिकर्तव्यतात्वेनान्वयमनुभवितुं योग्यं,

---

कारः कृतवान्। अर्थवादोपात्तमपि फलं कल्प्यम्। क्रतूपकारस्तु क्लृप्त इति तस्यैवोद्देश्यत्वमुचितमिति परिहारप्रकार इति। तदिदम-भिसन्धायाह इत्यास्तामिति।

एवमङ्गताग्राहकं प्रकरणमित्युक्तम्। अथ तत्र विशेषमाह तदि-दमिति। प्रष्टुरवधानं विधत्ते शृण्विति। कथम्भावाकांक्षासद्भावं तस्या वाक्यगतपदार्थान्वयेनाशान्तत्वं च विवृणोति यजेतेत्यादिना। शब्दभा-वनानिरूपणानन्तरं वक्ष्यमाणाया अर्थभावनाया अपेक्षितत्वादिह मात्रया कीर्तनम्। किं भावयेदित्यादिरपेक्षाकारः। भाव्यादयोंशा इतीतो गम्य-मिति। वाक्येन भाव्यं करणमिति द्वयमेव समर्प्यत इति वाक्यार्थमभि-नीय दर्शयति यागेनेति। असन्निहितानां ज्योतिष्टोमाद्यङ्गानामन्वयाभा-वात् सन्निधौ पठितमिति। सन्निधिपठितस्यापि एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येति प्रतिष्ठार्थत्वेन विहितस्य सामिधेन्यनुवचनस्य दर्शपूर्णमा-साङ्गत्वाभावादश्रूयमाणफलकमिति। अन्वयमनुभवितुम् अन्वेतुम्। एवकाराभिप्रेतं क्रियाभिन्नस्य योग्यत्वाभावं क्रियाया योग्यत्वं चोपपादयितुमाह

क्रियाया एवं लोके कथम्भावाकांक्षायामन्वयदर्शनात् । न हि कुठारेण छिन्द्यात्कथमित्याकांक्षायां हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति । किं तर्हि, हस्तेनोद्यम्य निपात्येति उच्चार्यमाणे उद्यमननिपातने एव । हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सर्वजनीनमेतत् ।

किं च कथम्भावाकांक्षा नाम करणगतप्रकाराकांक्षा । थमोः प्रकारवाचित्वात् ।

---

क्रियाया इति । प्रथममुपपादयति न हीति । छिन्द्यादिति । इत्युक्त इति शेषः । केवलमिति क्रियापदाघटनेनेत्यर्थः । नन्वशाब्दत्वादेव हस्तो नेतिकर्तव्यतात्वेनान्वितो न पुनरयोग्यत्वादिति शङ्कापरिहारायोक्तमुच्चार्यमाणोऽपीति । शब्देनोपस्थाप्यमानोपीति तदर्थः । द्वितीयं प्रश्नपूर्वकमुपपादयति किं तर्हीति । तर्हि किमन्वयं प्राप्नोतीति सामान्येन प्रश्नः । उत्तरमाह हस्तेनेति । तयोस्तु क्रियायोगाद्विनियोजकमिति प्रागुक्तमुपपादयितुं हस्तेनेत्यंशस्य घटनम् । उद्यमनम् ऊर्ध्वदेशसंयोगानुकूलः पुंसो व्यापारः । निपातनम् अधोदेशाभिघातानुकूलो व्यापारः । ननूद्यमननिपातने एवेति न युक्तम् । तथा हि सति हस्तेनेति न स्यात् । तत्सत्त्वात्तु तस्याप्यन्वय एष्टव्य इत्यत्राह हस्तोऽपीति । तद्द्वारेणेति । तृतीययोद्यमनादिकरणत्वावगमादिति भावः । सर्वजनीनमिति सर्वजनहितमिति श्रौतोऽर्थः । ननु लोक एव कुतः सिद्धस्येतिकर्तव्यतात्वेनान्वयो नास्ति । न ह्युद्यमनादेरिव हस्तस्याकांक्षा नास्ति । अत्र मिश्रमतेन युक्तिं दर्शयति किं चेत्यादिना । प्रकारवाचित्वादिति । प्रकारवद्वाचित्वादित्यर्थः । तथा च कथम्भाव इत्याकांक्षा प्रकाराकांक्षेत्युक्तं भवति । समभिव्याहारमहिम्ना च करणगतप्रकाराकांक्षेति पर्यवस्यतीति भावः । नन्वेतावता क्रियाया एवाकांक्षेति न सिद्ध्यति । क्रियाभिन्नस्यापि प्रकारत्वदर्शनादिति

सामान्यस्य भेदको विशेषः प्रकारः। सामान्यं च क्रियारूपमेवाख्यातेनोच्यते। यजेत स्वर्गकाम इत्यस्य ह्ययमर्थः—यागेन तथा

---

शङ्कायां क्रियाप्रकाराकांक्षा क्रियैवेति वक्ष्यन् क्रियाभिन्नस्यापि क्रियाप्रकारत्वं कुतो न भवतीति शङ्कावारणाय प्रकारशब्दार्थमाह सामान्यस्येति। साधारणधर्मावच्छिन्नस्येति तदर्थः। भेदक इति तद्व्याप्यधर्मवत्ताज्ञानजनक इत्यर्थः। विशेष इति विशेष्यनिर्देशः। तथा च सामान्यस्य भेदको यो विशेषः स प्रकारशब्दवाच्य इत्यर्थः। ननु प्रकारविषयिणी आकांक्षा सामान्यज्ञाने सत्येव भवितुमलम्। इह च क्रियासामान्यवाचकं पदं न श्रूयते। धातुना क्रियाबोधनेऽपि सामान्यरूपेणाबोधनात्। आख्यातस्य च प्रवृत्तिवाचित्वादित्यत्राह सामान्यं चेति। यद्याख्यातस्य क्रियावाचित्वम्, तर्हि स याग एवेति न तत्र धात्वर्थः करणमिति शङ्कापरिहाराय क्रियावाचित्वद्रढिम्ने च वाक्यार्थमाह यजेतेति। आख्यातस्य भवनानुकूलव्यापाररूपक्रियावाचित्वेन तत्र स्वर्गस्य भाव्यत्वेन यागस्य च करणत्वेनान्वये यागकरणकस्स्वर्गोत्पत्त्यनुकूलव्यापारो विधिविषय इति बोधे सति यागकरणकेन व्यापारेण स्वर्गो भावयितव्य इति सिद्ध्यति। तत्र व्यापारविशेषाकांक्षाया झटिति स्फोरणाय यथातथाशब्दघटनेन वाक्यार्थमभिनयति यागेनेति। यद्यपि कृञ्धातोः सकर्मकत्वात् कर्तव्यमित्यस्य विशेष्याकांक्षायां स्वर्गस्य विशेष्यत्वं न युक्तम्। यथा स्वर्गो भवतीति वक्ष्यमाणत्वात्। अतो यागो विशेष्य इति यागस्तथा कर्तव्य इत्येवाभिनयः कर्तव्यः। अथापि यागस्य करणत्वं वक्तुं यागेनेत्युक्तम्। भावनाया व्यापाररूपत्वस्य पूर्वमुक्तत्वात् कृञो व्यापारवाचित्वेन व्यापर्तव्यमितिवत् कर्माविवक्षया कर्तव्यमिति प्रयुक्तमिति। एवं सामान्यवाचिपदसत्त्वेन तद्ज्ञा-

कर्तव्यं यथा स्वर्गो भवतीति। क्रियासामान्यस्य च विशेषः क्रियैव भवति। न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति। एवं च करणगतक्रियाविशेषाकांक्षाऽपरनामधेयकथम्भावाकांक्षायां क्रियैवान्वेतीति युक्तम्।

स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्त-क्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम्।

---

नाद्विशेषापेक्षा भवतीत्युक्तम्। स प्रकारः क्रियैवेत्याह क्रियासामान्य-स्येति। परिव्राजकादिरित्यादिना गृहस्थादिपरिग्रहः। एवं चेति। क्रियाविशेषस्यापि क्रियात्वे सतीत्यर्थः। क्रियैवेति। अनाकांक्षितत्वेन तद्भिन्नस्यान्वयासम्भवादिति भावः। ननु व्यापारसामान्यस्य विशेषापेक्षा-यां यागानुष्ठानमेव विशेष इति भविष्यति तत्राह स चेति। न ह्यनुष्ठानं व्यापार इति वाक्यादवगम्यते। वाक्यसत्त्वात्स्वयं व्यापारो भवतीति भावः। यागस्य करणत्वान्न व्यापारत्वमिति प्राक्सूचितं द्योतयितुं पुनः करणगतेति। नन्वेक एव क्रियाविशेषस्तदाकांक्षाशामक इति कथं प्रयाजादीनां ग्रहणमि-त्यत्रोक्तमन्वाधानादिब्राह्मणतर्पणान्त इति। विनिगमकाभावात्खले कपोतन्यायेन युगपत् सर्वसम्बन्धादिति भावः। प्रकरणेन ग्रहणमिति।

ननु प्रयाजादिगताकांक्षोपकार्यविषयिणी। इयं तु व्यापारविशेष-विषयिणी। यद्युपकारकविषयिणीयं स्यात् तदा तेषां प्रकरणादभिसम्बन्धः स्यात्। न च विशेषाकांक्षायां तदन्वये तद्गतोपकार्याकांक्षा शाम्यतु। अपि च प्रयाजादेर्विशेषाकांक्षाशान्त्यर्थमन्वये स्वर्गकर्मको यागकरणकः प्रया-जादिरूपो व्यापार इत्यर्थो भवति। न ह्येतावता प्रयाजादेः किञ्चिदङ्ग-त्वमुक्तं भवति। अतोऽङ्गतावाचकश्रुतिकल्पनेन प्रकरणस्याङ्गताग्राहकत्वं यदिष्टं, तन्न सिद्ध्यतीति। उच्यते। कुठारेण च्छिन्द्यादित्यत्र हि छेदने द्वैधीभावानुकूलव्यापारे कुठारः करणम्। द्वैधीभावश्च फलमित्यवगम्यते। तत्र यद्यपि व्यापारे द्वैधीभावस्य साध्यत्वेनान्वयः; अथापि न तस्य प्राधा-

**तस्य च करणगतत्वं तदुपकारकत्वमेव, तेन विना यागेनापूर्वाजननात्। न ह्युद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते। तत्सिद्धं कथम्भावाकांक्षायां क्रियैवान्वेतीति।**

---

न्यम्। अपि तु कुठारे करणभूते स व्यापारो द्वैधीभावजननसामर्थ्यरूपमभिघातमुत्पाद्य निवर्तते। अभिहन्यमानश्च कुठारः करणं भवतीति करणानुग्राहकत्वमेव। एवंभूतस्य व्यापारस्य विशेषापेक्षायामुद्यमनादि विशेषत्वेन सम्बध्यत इत्यानुभविकम्। तथा प्रकृतेऽपि यजेत स्वर्गकाम इत्यादावाख्यातार्थे व्यापारसामान्ये स्वर्गस्य भाव्यत्वेनान्वये सामान्यत उपस्थितस्य व्यापारस्य करणे किञ्चित्काराधानमुखेनैव फलप्रयोजकत्वदर्शनेन करणाकांक्षायां सत्यां यागस्य करणत्वेनान्वये च सति कोऽसौ करणानुग्राहको व्यापार इति विशेषबुभुत्सा भवति। तदा प्रयाजादीन्युपतिष्ठन्ते। यदि तावत् करणोपकारकत्वानादरेण विशेषापेक्षा कथंभावाकांक्षा स्यात् तदा न प्रयाजादिगतोपकार्याकांक्षासाहचर्येणास्यास्तद्ग्राहकत्वमित्युच्येत। करणोपकारकविशेषत्वेनैवाकांक्षणात्तु न तत्साहचर्यासम्भवः। एवं च प्रयाजादीनां व्यापारसामान्यरूपायां भावनायां नाभेदेनैवान्वयः, अपि त्वपेक्षितत्वात्करणानुग्राहकत्वेनापि। अतश्च प्रकरणस्याङ्गताग्राहकत्वं नास्तीति दोषोऽपि न। करणानुग्राहकत्वस्यैवाङ्गतारूपत्वात् तद्ग्राहकत्वस्य चोक्तत्वादिति। इदमेव सूचयितुमभ्यासेन प्रकारे करणगतत्वोक्तिरिति।

ननु किमिदं करणगतत्वम्? न तावत् करणवृत्तित्वम्। क्रियायाः क्रियावृत्तित्वाभावात्। नापि करणजन्यत्वम्। प्रयाजादेर्यागजन्यत्वाभावात्। नापि तज्जनकत्वम्; यागस्य द्रव्यदेवतादिमात्रजन्यत्वादित्यत्राह तस्येति। अपूर्वाजननात् अपूर्वानुत्पादनात्। तथा च तदुत्पत्त्यनुकूला यागगता योग्यतैवोपकार इति भावः। ननु करणत्वेनान्वितेन यागेनोत्पादनीयमपूर्वं तेन विना न भवतीति कथमिति शङ्कां परिहर्तुमाह न हीति। जन्यते

अत एव द्रव्यदेवतयोर्यागसम्पादनद्वाराऽन्वयः साम्प्रदायिकैरुक्तः। विकृतौ च कथम्भावाकांक्षायामुपकारसम्पादनमातिदिश्यत इत्युक्तम् । यदि च कथंभावाकांक्षायां सिद्धं वस्त्वन्वययोग्यं स्यात् तदा सम्पादनपर्यन्तं धावनं ग्रन्थकृतामनर्थकं स्यात् । अतश्च क्रि-

---

उत्पाद्यते । यथा करणभूतः कुठार उद्यमनाद्यभाव द्वैधीभावं न जनयति तद्वदेव यागोऽपि प्रयाजाद्यभावेऽपूर्वमिति भावः ।

एवमाकांक्षाकारपरिशीलने क्रियाया एवान्वयो युक्तिसिद्ध इत्युपसंहरति तदिति । उक्तेऽर्थे साम्प्रदायिकान् प्रमाणयति अत एवेति । उक्त इति । भावनाया अंशत्रयाकांक्षाया एव सत्त्वात्फलधात्वर्थयोः साध्यसाधनभावाभ्यामन्वये जाते कथम्भावाकांक्षाया एवावशिष्टत्वात् तया द्रव्यदेवतयोः सिद्धरूपयोः स्वीकारासम्भवे प्रसक्ते तयोः साक्षादस्वीकारेऽपि तज्जनितयागसम्पादनस्य तया ग्रहणसम्भवात् तद्द्वारा तयोरपि ग्रहणमित्युक्तमित्यर्थः । यथा शास्त्रदीपिकायां 'समिदादिभिरदृष्टद्वारमवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारं द्रव्यदेवतेन च स्वरूपसम्पादनेन यागे व्याप्रियेत' इति । उपकारसम्पादनमिति । प्राकृतपदार्थजनितोपकारसम्पादनमित्यर्थः । ननु किं विकृतौ कथम्भावाकांक्षायां प्राकृतपदार्थानां सर्वेषामातिदेशात् येषां पदार्थानां विकृतौ प्रकृतिकृतकार्यकरत्वं न सम्भवति तेषामप्यदृष्टार्थतयाऽनुष्ठानमावश्यकमिति शङ्कायां, न हि पदार्थाः स्वरूपतोऽतिदिश्यन्ते । अपि तु विकृत्या स्वयं योग्यतां लब्धुमुपकारस्यैवापेक्षितत्वात्पदार्थकृतोपकारसम्पादनमेवातिदिश्यते । अतश्च यदुपकारसम्पादनं प्रकृतौ क्लृप्तं तदेवातिदिश्यत इति क्लृप्तोपकारकाणां पदार्थानामेवातिदेशो नान्येषामित्युक्तम् । तावता प्रकृते किमुच्यते ? उपकारसम्पादनातिदेशे वा पदार्थातिदेशे वा क्रियातिदेशक्षत्यभावादित्यत्राऽऽशयमाविष्करोति । यदि चेति । अनर्थकं स्यादिति ।

याया एव इतिकर्तव्यतात्वम्, कथंभावाकांक्षागृहीतस्येतिकर्तव्यतात्वात्, इतिशब्दस्य च प्रकारवाचित्वात्। 'कर्तव्यस्य' 'इति' प्रकार 'इतिकर्तव्यता'। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम्। कर्तव्यस्य च विशेषः कर्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्तव्यतात्वम्, किं तु क्रियाया एव। सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम्। तदपि श्रुत्यादिना, न तु प्रकरणात्। यथाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति।

---

उपकारोऽतिदिश्यत इत्येतावदेवोच्येत न तु तत्सम्पादनमितीति भावः। सिद्धस्येतिकर्तव्यतात्वेन कुतो नान्वय इति शङ्कापरिहारायेतिकर्तव्यतात्वाभावं तत्र साधयितुं कथम्भावाकांक्षाविषयत्वाभावं हेतुमभिप्रेत्यैतावता हेतुसत्त्वमत्रबोधितम्। अथ साधयति अतश्चेति। अप्रयोजकत्वशङ्कां परिहरति कथमित्यादिना। कथम्भावाकांक्षागृहीतस्य– तस्यैव। या इतिकर्तव्यता सा कथम्भावविषय एव; इतिकर्तव्यताशब्दस्य तद्विषयवाचित्वात्। तदुपपादयति इतीति। कर्तव्यस्येति। कर्तव्यताया इत्यर्थः। कर्तव्यो व्यापारविषयः विषयतया व्यापारविशिष्टः। अतः कर्तव्यता व्यापारविशिष्टता व्यापार इति फलति। एवं च कर्तव्यताया इति व्यापारप्रकार इति पूर्वपदार्थप्राधान्येनेतिकर्तव्यताशब्दो व्याख्येय इति भावः। यदि त्वितिशब्दार्थस्य प्रकारस्य सामान्यविशेषणतयैव प्रतीतिः, न पुनस्तद्विशेष्यतया; घट इति द्रव्यमित्येव प्रयोगात्, द्रव्यस्येति घट इत्यप्रयोगात्। तथा षष्ठ्यन्तविग्रहोऽपि न दृष्ट इत्यालोच्यते, तर्हि इतिकर्तव्यतेत्यस्यैतत्प्रकारको व्यापार इत्यर्थोऽस्तु। अन्ततस्तु पूर्वोक्तार्थे पर्यवसानमित्येवमुक्तम्।

ननु तर्हि मन्त्रस्य प्रकरणपठितस्य केन प्रमाणेनाङ्गताग्रह इति शङ्कां

अत एव बर्हिर्देवसदनं दामीत्यादिमन्त्राणां लिङ्गादङ्गत्वम्, न तु प्रकरणादित्युक्तमर्थवादाधिकरणपूर्वपक्षसमाप्तौ राणके । क्वचित् द्रव्यस्येतिकर्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम् । बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति । तत्सिद्धं प्रकरणं क्रियाया एव विनियोजकमिति ।

तच्च प्रकरणं द्विविधम् । महाप्रकरणमवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्रां-

---

प्रमाणदर्शनमुखेन परिहरति अत एवेति । उक्तमिति । अर्थवादानामपि मन्त्रवदनुष्ठानकालोपयोगित्वं स्यादिति शङ्कामनुष्ठेयार्थप्रकाशनसामर्थ्याभावात् परिहृत्य 'न हि मन्त्राणां पाठमात्राद्विनियोगः। किं तर्हि। तत्सामर्थ्यात् । न चात्र तदस्ती'ति वार्तिकस्य भावं वर्णयता सोमेश्वरेण "अव्यापाररूपत्वेन मन्त्राणां व्यापारग्राहिणा प्रकरणेन साक्षाद्ग्रहणायोगात् उच्चारणद्वारा तद्ग्रहणम् । तद्ग्रहणाच्चोच्चारणार्थतेत्यन्योन्याश्रयापत्तेर्न प्रकरणपाठमात्रेण विनियोगो युक्तः । सामर्थ्यात्त्वभिधानक्रियार्थत्वावगमे तद्द्वारा प्रकरणग्रहणोपपत्तेरनुच्चारितस्याभिधानाशक्तेः कर्मकालोच्चरण सिद्धि' रिति ग्रन्थेनोक्तमित्यर्थः । राणके न्यायसुधायाम् । एवं प्रकरणस्य विनियोजकत्वं तद्विनियोगस्य क्रियाविषयकत्वं च साधितमुपसंहरति तत्सिद्धमिति ।

अथ तद्विभजते तच्चेति । तत्र महाप्रकरणावान्तरप्रकरणयोः । फलभावनायाः फलोद्देश्यकभावनायाः । तथा च उपकार्याकांक्षाघटिता फलभावनागतेतिकर्तव्यताकांक्षा महाप्रकरणपदार्थ इत्यर्थः । ननु किमिदं फलत्वम्? न तावत् उद्देश्यत्वम्, प्रयाजादिभावनाया अपि दर्शपूर्णमासाद्युद्देश्यकत्वेन फलपदस्याव्यावर्तकत्वप्रसङ्गात् । नापि स्वयंप्रार्थितत्वरूपम् । आहवनीयादिरूपापूर्वार्थभावनाया आधानीयायाः तथाविधोद्देश्यकत्वाभावेन तत्प्रकरणस्य महाप्रकरणत्वानापत्तेः । उच्यते । किञ्चिन्निरूपितप्रयोज्यता-

ह्युक्तम् । तच्च प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादिः । तत्र चोभयाकांक्षारूपं प्रकरणं सम्भवति, आकांक्षानुपरमात् ।

विकृतौ तु प्रकरणं सम्भवति । यत्र न समग्राङ्गोपदेशः सा विकृतिः, यथा सौर्यादिः ।

---

शून्यत्वं फलत्वम् । स्वर्गादिप्रयोज्यत्वाद्दर्शपूर्णमासादेर्न तद्ग्रहणम् । आहवनीयादेश्च परप्रयोज्यत्वाभावान्नाव्याप्तिरिति । यत् प्रयाजादीनां ग्राहकं प्रकरणमुक्तम्, तदिदं महाप्रकरणमेवेत्याह तच्चेति । यत्र तत्र फलभावना तत्र तत्रेदं प्रकरणमिति न नियम इति बोधयति तच्चेति । प्रकृतावेवेति । प्रकृतौ नियतमित्यर्थः । अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति स्वरसार्थो न गृह्यते । किं त्वन्य एव स्वोक्त इत्यभिप्रायेणाह यत्रेति । तत्र चोदकाद्यत्राङ्गाप्राप्तिः सा प्रकृतिरिति फलमादाय प्रकृतिशब्दार्थ उक्तः । कुतस्तत्र चोदकादङ्गानि न प्राप्नुवन्तीत्यत्र वक्तव्यो हेतुरेवेह तदर्थत्वेनोक्त इति विवेकः । समग्राङ्गोपदेश इति । अपेक्षितयावदङ्गविषयकबोधजनकवाक्यसद्भाव इत्यर्थः । यद्यदङ्गं, तत्तद्रूपेण तत्तदसाधारणधर्मपुरस्कारेण तस्य तस्य बोधकं वाक्यं यत्र सा प्रकृतिरिति यावत् । अन्यथा नामातिदेशादिस्थलेऽग्निहोत्रादिपदानामेवाग्निहोत्रीयधर्मविशिष्टकर्मान्तरादिवाचित्वेन तद्बोधकवाक्यसद्भावेन तत्रापि प्रकृतित्वापत्तेः । आकांक्षानुपरमात् प्रधानभावनागताया इतिकर्तव्यताकांक्षायाः पदार्थान्तरान्वयाभावेनाशान्तत्वात् । तथाङ्गभावनागताया अप्युपकार्याकांक्षायास्तेषामन्यत्रान्वयाभावनाशान्तत्वात् । प्रकृतावेवेति ह्युक्तम्; अतो विकृतौ तदसंभवं दर्शयति विकृतौ चेति । सौर्यादिरिति । सौर्यं चरुं निर्वपेद्ब्रह्मवर्च-

तत्र च यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम्। तत्र यद्यपि तेषां किं भावयेदित्यस्त्याकांक्षा तथाऽपि प्रधानस्य न कथंभावाकांक्षाऽस्ति, प्राकृतैरेवाङ्गैर्निराकांक्षत्वात्।

---

सकाम इत्यादिविहितो दर्शादिविकृतिः सौर्येष्ट्यादिः। आदिना सोमादिविकृत्युद्भिदादिपरिग्रहः। प्रकरणेन सम्भवता तत्रोपदिष्टाङ्गविषये वा भवितव्यम्। अतिदिष्टाङ्गविषये वा? नाद्य इत्याह तत्र चेति। अपूर्वाणि विकृतिज्ञानात्पूर्वमज्ञातानि। तानि हि विकृतिविषये पूर्वाणि यानि प्राकृतानीति। पठ्यन्ते - उपदिश्यन्ते। उपहोमादीनीति। यान्युपहोमादीन्यङ्गानीत्यन्वयः। 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति विहितनक्षत्रेष्टिसन्निधौ 'सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा 'अम्बायै स्वाहे'त्येवं समाम्नाता उपहोमाः। आदिना साङ्ग्रहणीष्ट्यङ्गभूतामनहोमादिपरिग्रहः। तेषामिति। तेषां विनियोजकं न प्रकरणमित्यन्वयः। ननु कुतो न प्रकरणम्, प्रकृताविव विकृतावपि अङ्गप्रधानयोराकांक्षाया अक्षतत्वादित्यत्राह तत्रेति। ननु यथा प्राकृताङ्गेष्वनेकेष्वेकान्वयमात्रेण न नैराकांक्ष्यम्, अपि तु सर्वान्वयपर्यन्तं सैवाकांक्षाऽवतिष्ठते; तथा प्राकृतान्वयेऽपि अपूर्वाङ्गान्वयपर्यन्तमवस्थास्यत इति न प्रकरणासम्भव इत्यतः प्राकृतैरेवेत्येवकारः। निराकांक्षत्वादिति। आकांक्षायाः शान्तत्वादित्यर्थः। तथा चेहाकांक्षैव नोत्पन्नेति नोच्यते, असम्भवात्। अपि तूत्पन्नाप्यपूर्वाङ्गान्वयात् प्राक् प्राकृतान्वयेन नष्टेति; तस्मादेवाकांक्षाया अभाव इति भावः। ननु यद्यपूर्वाङ्गावगतेः प्रागेव प्राकृताङ्गावगतिरिति स्यात् स्यात्तर्हि तस्याः शान्तिः। तदेव न। प्राकृतानां सन्निधौ पाठाभावात् वैकृतानां तत्सत्त्वात्। अत एषामवगतिः पूर्वेत्येषामन्वयं यावत् कथंभा-

न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकांक्षोपशम इति वाच्यम् । तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकांक्षोपशमनेऽसामर्थ्यात्, प्राकृतानां तु क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात् । न चात्र तेषामुपस्थापका-

---

वाकांक्षा न क्षतेति प्रकरणं विनियोजकमित्याशंक्याह न चेति । अत्रापठितत्वेन एतद्विकृतिविधायकवाक्यसन्निहितवाक्यबोद्धव्यत्वाभावेन । अप्रत्यक्षत्वात् शीघ्रमनुपस्थितत्वात् । वैकृतानाम् विकृतिमात्राङ्गभूतानाम् । तैरेवाकांक्षोपशम इति । एवं सन्निहिताङ्गावगतेरेव पूर्वभावित्वेन प्रकरणादेषामङ्गभावे गृहीते, यथा प्रकृतेः सन्निहितातिरिक्तग्रहणार्थमाकांक्षा नैव भवति, एवं विकृतेरपि प्राकृताङ्गग्रहणार्थमित्याकांक्षोपरतैव भवति न पुनरुत्थाप्यतेऽपीति भावः । कर्म हि विनोपकारं फलं प्रति करणं भवितुमसमर्थमुपकारमपेक्षमाणं कारणाभावे तदुत्पादासम्भवेन स्वस्य सामर्थ्यनिर्वाहाय तदौपयिकोपकारजनकमर्थं कथम्भावेन ग्रहीतुमारभते । एवमुपकारजनकस्यैवापेक्षणाद्यस्योपकारजनकत्वं पूर्वमेव निश्चितम्, स एवार्थः प्रथमतरं धियमधिरोहति । अतः सन्निहितानामप्येषामुपकारकत्वस्याविज्ञातत्वेन नैषामुपकारकाकांक्षायां झटित्युपस्थितिसम्भवः । अतः प्राकृतानामेव प्रागन्वय इति नैतदन्वयं यावदाकांक्षेत्याह तेषामिति । तेषां वैकृतानाम् । ननूपकारकाकांक्षायां क्लृप्तोपकारकत्वादङ्गोपस्थितिरीति चेत् प्रकृतप्रकृतित्वेनासम्मतप्रकृतिगताङ्गानामप्युपस्थितिरिति सर्वेषामङ्गत्वं प्रसजति । यदि न तदुपस्थितिः तुल्यमत्रापीत्याशंक्याह न चेति । अत्र तेषामित्यनेनोभयोर्मिथो विप्रकर्षो दर्शितः । उपमितिलक्षणप्रमाणेन उपमितिरूपोपस्थापकेन । उपपादयति सौर्येति । इत्थमुपमानविषये मीमांसकानां मर्यादा । प्रथमतो गां दृष्टवतः पश्चाद्गवये सन्निकृष्टे यद्गवयगतं गोसादृश्यं तद्विशिष्टे धर्मिणीन्द्रियेण गृहीते गोरुपस्थितिर्भवति । अथानेन गवोप-

भावः, उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात् । सौर्यवाक्ये हि दृष्टे औषधद्रव्यत्वेन एकदैवत्यत्वेन सादृश्येन आग्नेयवाक्यमुप-

---

स्थितिसहितगवयदर्शनेन गवयसदृशो गौरित्युपमितिर्भवतीति । तन्न्यायेन प्रकृतेऽपि सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति वाक्ये तद्गतैकदेवताप्रतिपादकत्वौषधद्रव्यप्रतिपादकत्वरूपधर्मविशिष्टे दृष्टेऽस्य पुंसो दृष्टाग्नेयवाक्यतया तदुपस्थितिर्भवति । अथैतद्वाक्यसदृशमाग्नेयवाक्यमित्युपमितिर्भवतीति । औषधद्रव्यकत्वेनेति । चरुर्हि ओदनविशेषस्तण्डुलादिप्रकृतिकः । तथा पुरोडाशोऽपि । अत उभयत्रौषधिनिष्पन्नं द्रव्यम् । कर्मणि तद्द्रव्यप्रतिपादकत्वेनेत्यर्थः । एकदैवत्यत्वेनेति । कर्मणो देवतात्वाधिष्ठानैकव्यक्तिमत्त्वप्रतिपादकत्वेनेत्यर्थः । औषधद्रव्यकत्वमात्रस्य 'अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छादि'ति वाक्येऽपि सत्त्वादाग्नेयमात्रस्य नोपमेयत्वमित्येकदेवत्यत्वेनेति । एकदेवत्यत्वमात्रस्य ऐन्द्रं दधीत्यादावपि सत्त्वादाद्यम् । तत्र द्रव्यघटितसादृश्यस्य प्रथममुक्तिस्तु यत्र द्रव्यघटितसादृश्याङ्गीकारेऽन्यविकृतित्वं देवताघटितसादृश्याङ्गीकारे च तद्भिन्नविकृतित्वम्; यथा 'यदग्नीषोमीयं पशुमालभेते'ति पशुयागे पशुप्रभवत्वरूपद्रव्यसादृश्यग्रहणे सान्नाय्यविकृतित्वम्, देवतासादृश्यग्रहणे चाग्नीषोमीयविकारत्वम्, तत्र यागस्य देवतोद्देशविशिष्टद्रव्यत्यागरूपतया प्रधानभूतत्यागांशे साक्षाद्विशेषणतया द्रव्यस्यैव प्राबल्येन द्रव्यघटितसादृश्यमेवोपजीव्यम् । तदसम्भव एव देवताघटितमिति ज्ञापनाय । गवयदर्शनादित्यनन्तरं गोसादृश्येनेति शेषः । गोरुपमानवदिति । गोवदित्येव युक्तम् । उपमीयत इति धात्वर्थस्य उपमानवदित्युपमानस्य च सादृश्यं वा वतिप्रत्ययविवक्षितम् । नन्वाग्नेयवाक्योपमितिः किमर्था ? अङ्गोपस्थापकं खल्वद्य वक्तव्यमित्यत्र यथेदमुपस्थि-

मीयते गवयदर्शनाद्गोरुपमानवत् । तस्मिश्चोपमिते तेन तदर्थो ज्ञायते । सा त्र्यंशा भावना । तत्र सौर्यवाक्ये भावनायाः भाव्यकरणयोः सत्त्वादितिकर्तव्यताकांक्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्तव्यताऽतिदिश्यते,—सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदुपकृत्येति । तथा च तयैवाकांक्षोपशमान्न विकृतेः प्रकरणमस्ति । अन्यतराकां-

---

तमङ्गोपस्थापकं भवेत् तदाह तस्मिश्चेति । तेन । तदर्थ इत्यर्थः । त्र्यंशा भावनेति । तथा च वाक्योपमितौ भाव्यकरणेतिकर्तव्यतारूपांशत्रयविशिष्टभावनायां वाक्यतः प्रतिपन्नायां प्रकृतोपकारकेतिकर्तव्यतारूपांशोपस्थितिरप्यस्तीत्युपमितिरेवोपस्थापिकेति भावः । ननु तत्र त्रयाणामप्यंशानामविशेषेण प्रतिपन्नत्वात् इह च भावनाया अंशत्रयाकांक्षाया आवश्यकत्वात्सर्व एवातिदिश्येरन् तत्राह तत्रेति । तत्र त्रिष्वंशेषु । सत्त्वादिति । तथा चाकांक्षाशामकयोर्भाव्यकरणयोर्वाक्य एव लब्धत्वेन नातिदेश इति भावः । यत्र विकृतौ फलं न श्रूयते तत्रापि विश्वजिदादौ फलाकांक्षायां सर्वाभिलषितफलस्य स्वर्गस्य ग्रहणसम्भवान्न फलातिदेशकल्पनम् । इतिकर्तव्यतायास्तु क्लृप्तोपकारकत्वादतिदेश इति ध्येयम् । एवमितिकर्तव्यताऽपि न सर्वाऽतिदिश्यते । अपि तु या प्रकृतौ स्वकृतमुपकारमिहापि कर्तुं शक्नोति सैव । तदेतत्सूचयितुमुपकारपृष्ठभावेनेत्युक्तम् । उपकार एव हि प्रथमतोऽपेक्षितः । तन्निष्पादनाय पुनः पदार्थोऽपि । अत उपकारातिदेशात् पश्चात् पदार्थातिदेश इति । यदा तूपकारकतज्जनकयोर्युगपदेवातिदेश इति मतम् । तदोपकारपृष्ठभावेनेत्यस्य तत्साहचर्येणेत्यत्र तात्पर्यम् । एवमतिदेशाय च न प्रकृतिवद्विकृतिः कर्तव्येति पृथग्वाक्यकल्पना । अपि तु श्रूयमाण एव वाक्ये आग्नेयवदित्येवमेकं पदमध्याहर्तव्यम् ; लाघवादिति दर्शयितुमाकारमाह सौर्येति । तथा चेति ।

क्षारूपस्थानादेव चापूर्वाङ्गग्रहणम् ।

न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम् । तेषामपि प्रकृत्युपकारकतयाऽऽकांक्षोपशमात् । ननु प्राकृतानामङ्गानामाकांक्षाभावे तेषां विकृतौ सम्बन्धः केवलं स्थानात् स्यात्, अपूर्वाणां त्वाकांक्षासत्त्वाद्विकृतेरप्याकांक्षावत्त्वाच्चेषां तत्सम्बन्धः प्रकरणात्स्यात्, प्रकरणं च स्थानात् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमं सम्बन्धः स्यात्, न प्राकृतानामिति ।

अत्रोच्यते । सत्यं प्रकरणं झटिति विनियोजकम् । तथाऽपि प्रमाणबलाबलात् प्रमेयबलाबलस्य ज्यायस्त्वादुक्तविषयोपस्थितानां

---

विकृतौ उपमितिलक्षणप्रमाणोपस्थितातिदिष्टप्राकृतेतिकर्तव्यताऽन्वयवत्यां च सत्यामित्यर्थः । त्वयैव प्राकृतेतिकर्तव्यतयैव । प्रकरणमिति । अपूर्वाङ्गविषय इति शेषः । एवं तर्हि अपूर्वाङ्गानां विकृत्यङ्गत्वं न स्यात् अनाकांक्षितत्वादित्यत्र प्रकरणादग्रहणेऽपि प्रमाणान्तरमस्तीत्याह अन्यतरेति । ग्रहणमिति । तथा च स्थानरूपप्रमाणेन विकृतेराकांक्षामुत्थाप्य श्रुतिपर्यन्तकल्पनया तद्ग्रहणमिति भावः । एवमुपदिष्टविषये प्रकरणाभाव उपपादितः । अथातिदिष्टविषये तदाशंक्य परिहरति न चेति । किं न स्यात् कुतो न स्यात् । विकृतेः कथम्भावाकांक्षाया विद्यमानत्वात् तेषामप्यङ्गत्वादेव साध्याकांक्षासम्भवात्स्यादेवेति भावः । प्रकृत्युपकारकतयेति । साध्याकांक्षायां सन्निहितत्वेन प्रकृत्यन्वयस्यैव युक्तत्वादिति भावः । एतावत् प्राकृताङ्गानां साध्याकांक्षासद्भावमेव मन्वानः पूर्वपक्षी प्रत्यक्षत्वाप्रत्यक्षत्वरूपवैषम्यमात्रेण ततः प्रागेवापूर्वाङ्गान्वयं प्राक् पर्यनुक्तवान् । अत्र तु प्राकृतानां तदभावे सिद्धान्तिनोपपादिते स्वस्य प्रबलप्रमाणमभिलक्ष्य पूर्वोक्तः परिहारो न युक्त इति पुनराक्षिपति नन्विति । प्राकृताङ्गानामाकांक्षाभावे प्राकृताङ्गगतायाः साध्याकांक्षाया विकृत्यन्वयवेलायामभावे सति । तेषां तत्सम्बन्धः अपूर्वाणां विकृतिसम्बन्धः

प्राकृतानामेव सम्बन्धो युक्तः स्यात्, क्लृप्तोपकारकत्वात्, न वैकृतानां, कल्प्योपकारत्वात्। विकृतेश्चोपकारकपदार्थाकांक्षा न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृताङ्गसम्बन्धः। ततश्च न विकृतौ प्रकरणं विनियोजकम्।

यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते यथा—'औदुम्बरो यूपो भवति' इति यूपानुवादेन औदुम्बरत्वम्—तत्प्रकरणात् गृह्यते। ननु न तत्प्रकरणात् गृह्यते, अक्रियात्वात्। क्रियाया एव प्रकरणग्रा-

---

न प्राकृतानामिति। प्राकृतानां न प्रथमं स्यात्, नापि पश्चात्, अन्यतराकांक्षाया अपि शमितत्वादिति भावः। ज्यायस्त्वादिति। इदं च वेदकरणानन्तर्यरूपश्रौतक्रमत्यागेन स्मार्ताचमनपरिग्रहनिरूपणेन लिङ्गनिरूपणावसर एवोक्तप्रायम्। प्रमेयबलाबलमेव विभज्य निरूपयति क्लृप्तेत्यादिना। ननु क्लृप्तोपकारकत्वं स्यात् कल्प्योपकारकत्वं वा। इतिकर्तव्यतारूपः पदार्थ एव हीदानीमपेक्षितः। न हि मनुष्यमात्रेऽपेक्षिते सन्निहितमपि परिहृत्य स्थूलगात्रो दूरस्थ एवाहूयत इति शङ्कायां वक्तव्यं स्फुटयति विकृतेश्चेति। इतीत्यनेन तथाऽपीत्यादेरेतावतो हेतुत्वमभिप्रेतम्। ततश्चेति। अपूर्वाङ्गविषये प्राकृताङ्गविषये च प्रकरणासम्भवादित्यर्थः। तच्च प्रकृतावेवेत्युक्त्वा विकृतौ तदभाव एतावत् प्रतिपादितः। अथ प्रकृतावेवेत्यनेन नियमतः प्रकृतौ भवति विकृतौ त्वनियमेनेत्येव विवक्षितमिति मनसिकृत्य क्वचित् तत्सद्भावमपि निरूपयति यत्त्विति। उदाहरति यथेति। सोमापौष्णं त्रैतमालभेत पशुकाम इति पशुयाग इदम्। औदुम्बरत्वं उदुम्बरमयत्वं तद्विकारत्वम्। ननु विरुद्धमेतदित्याशङ्कते नन्विति। सत्यमित्यक्रियारूपत्वाङ्गीकारः। क्रियारूपमन्यद्धेत्यन्यदेतत्। यदि क्रियारूपं, साक्षाग्रहीष्यते। यद्यक्रियारूपं तर्हि क्रि-

ह्यत्वादिति चेत्—सत्यम् । तथाऽपि तु तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवाकांक्षा—किं भावयेदिति । न च यूपानुवादेन तस्य

---

याद्वारेति न कश्चिद्दोषः । अत आकांक्षाद्वयमस्ति न वेत्येतावदेव परामर्शनीयमित्याशयेनाह तथाऽपीति । किञ्चिदनुद्दिश्य विधानासम्भवात् विध्यङ्गीकारे उद्देश्याकांक्षाऽऽवश्यकीति बोधयितुं विधीयमानस्येति । सत्यमस्ति किं भावयेदित्याकांक्षा , अथापि सा न स्वशान्तये प्रधानगतकथम्भावाकांक्षां प्रतीक्षते । यो हि पदार्थस्साध्यमाकांक्षन् साक्षात् प्रधानेन सम्बन्धुं शक्नोति, यश्चान्येन सम्बध्यमानोऽपि तस्य स्वरूपेणोद्देश्यत्वायोगेन प्रधानापूर्वसम्बन्धित्वेनैवोद्देश्यभूतेन तेन सम्बध्नाति, स सर्वोऽपि प्रधानापूर्वार्थस्सन् प्रधानगतकथम्भावाकांक्षया गृह्यत इति युक्तम् । यस्तु प्रधानाकांक्षामप्रतीक्ष्य स्ववाक्योपात्तार्थान्वयेनैव शान्ताकांक्षः, न तस्य प्रकरणग्राह्यत्वम् । प्रकृतं चौदुम्बरत्वं यूपानुवादेन विधीयमानं तथाविधम् । यूपो ह्यलौकिकः पदार्थः । न हि लौकिके दारुणि यूपशब्दः प्रयुज्यते, किं तु छेदनतक्षणाञ्जनादिविहितजन्यसंस्कारविशिष्ट एव दारुणि । तत्रापि नागृहीतविशेषणान्यायेन संस्कारमात्रमेव तच्छब्दवाच्यम् । तच्चादृष्टरूपमेव । तस्य च स्वरूपे आनर्थक्याभावेन तदनुवादेन विधीयमानमौदुम्बरत्वं शान्ताकांक्षमेव । न चाञ्जनादिजन्यानां संस्काराणामदृष्टरूपत्वेऽपि छेदनादिजन्यानां तेषां श्लक्ष्णीभावादिरूपतया नैकान्ततोऽदृष्टरूपत्वमेवेति वाच्यम् । श्लक्ष्णीभावादिविशिष्टे दार्वन्तरे तत्प्रयोगाभावात् अदृष्टसंस्कारान्तरानुगुण्याच्च छेदनादिजन्यनियमादृष्टानामेव दृष्टस्थाने ग्रहणेनादृष्टमात्रस्यैव यूपशब्दार्थत्वात् । अत औदुम्बरत्वं न प्रकरणग्राह्यमित्याशंक्याह न चेति । ननु यूपशब्दार्थभूतानामदृष्टानां छेदनादिजन्यत्वेनौदुम्बरत्वजन्यत्वाभावात् तदुद्देश्यकत्वे स्वरूपे आनर्थक्यमस्त्येवेति चेन्न । छेदननियमादिभिरिवौदुम्बरत्वनियमेनापि यददृष्टं जन्यते सोऽपि यूपशब्दार्थ इति पूर्वपक्ष्याशयात् । अतोऽन्यत्रेवेहापि य-

विधीयमानत्वात् यूपस्य चादृष्टरूपत्वात्तेनैवौदुम्बरत्वस्य नैराकांक्ष्यम् , आहवनीयेनेवाधानस्येति वाच्यम् ।

यूपस्य केवलादृष्टरूपत्वाभावात् । तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात् । न च तत्सम्भवति । तथा सति खादिराभावे प्रतिनिधित्वेन कदरोपादानं न स्यात् , अदृष्टार्थस्य प्रतिनिध्यभावात्, न हि खादिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति । अत एव नादृष्टार्थानां प्रतिनिधिः । तदुक्तम्—

'न देवताग्निशब्दक्रियमन्यार्थत्वात्' इति ।

---

दौदुम्बरत्वेन भावयेत् स यूप इति वचनव्यक्त्यङ्गीकरणमिति । आहवनीयेनेवाधानस्येति । 'वसन्ते ब्राह्मणोऽग्नीनन्वादधीते'ति वाक्यविहितस्याधानस्याग्नीनिति शब्दोपात्ताधानजन्यापूर्वविशेषरूपाहवनीयाद्युद्देश्यकत्वेन तेनैव नैराकांक्ष्यम् । न पुनराहवनीयस्य सर्वक्रत्वङ्गत्वात् तत्तत्क्रत्वपूर्वसाधनाहवनीयत्वेन तत्रोद्देश्यता; तद्वदित्यर्थः । कुतो न वाच्यमित्यत्राह यूपस्येति । ननु दृष्टसंस्कारस्थलेऽपि नियमादृष्टलाभाददृष्टार्थत्वमेव । अत्र दोषमाह तस्येति । खादिरत्वेति । इदं च प्रकृतौ विहितम् । केवलादृष्टार्थमिति । नियमादृष्टस्यैव यूपशब्दवाच्यत्वे तदेवोद्देश्यं स्यात् । दृष्टं त्वानुषङ्गिकं स्यात् । तत्र केवलादृष्टार्थत्वम् । प्रमाणमस्तीति । अदृष्टस्य लौकिकोपायसाध्यत्वाभावेन शास्त्रीयोपायस्यैवापेक्षितत्वात् , उपायान्तरजन्यादृष्टस्य उपायान्तरेण साधनविधायिनः शास्त्रस्य चानुपलम्भादिति भावः । अत एव प्रमाणाभावादेव । अदृष्टार्थानां तथाविधानां सर्वेषाम् । तत्र सूत्रं प्रमाणयति तदुक्तमिति । देवताग्निशब्दक्रियाणां समाहारो देवताग्निशब्दक्रियम् । देवता अग्न्यादिः । अग्निर्वैदिकलौकिकवह्निरूपः । शब्दः मन्त्रादिः । क्रिया प्रयाजप्रोक्षणादिः । प्रतिनिधेयमिति शेषः । अन्यार्थत्वादिति पदं

अन्यार्थत्वादिति अदृष्टार्थत्वात् । प्रतिनिधित्वेन चोपादानं क-

---

व्याचष्टे अन्यार्थत्वादिति । अदृष्टार्थत्वादिति । प्रतिनिधिनाऽपि क्रियमाणतया यत् प्रमाणतो दृष्टं तदन्यार्थत्वादित्यर्थः । न पुनरपूर्वरूपादृष्टार्थत्वादित्यर्थः । तथा सति देवताया यागनिष्पत्तिरूपदृष्टप्रयोजनकरत्वेन तत्र हेत्वसिद्धिप्रसङ्गात् । नन्वेवं देवताया दृष्टार्थत्वात् प्रतिनिधिरपि स्यात् । न स्यात् । न हि उद्देश्यत्वमात्रं देवतात्वम्; किं तर्हि ? उद्देश्यत्वविशिष्टं तत्तद्विधिगतशब्दत्वम् । न चैतच्छब्दान्तरे भवितुमर्हति । तत् कस्य प्रतिनिधित्वमिति । अग्नीनां पुनरदृष्टार्थत्वादेव न प्रतिनिधिः । न च होमाधिकरणत्वेन दृष्टविधयैव तेषामुपयोग इति वाच्यम् । होमस्य किञ्चिद्देशविभागानुकूलव्यापारात्मकप्रक्षेपरूपस्याधिकरणानपेक्षणात् । तथा प्रयोगकालीनार्थस्मृतिजनकानां मन्त्राणामपि न शब्दान्तरं प्रतिनिधिः । शब्दान्तरकल्पनातः प्रागेवार्थस्य स्मर्तव्यत्वेन ततः स्मारकाकांक्षाविरहात् । मन्त्रपाठावैयर्थ्याय पुनस्तत्सत्त्वे तेनैवार्थः स्मर्तव्य इति नियमकल्पनम् । प्रयाजप्रोक्षणादिविषये पुनर्नैव संशय इति । अत्र 'अन्यार्थसंयोगा'दित्येव सर्वसम्मतः सूत्रपाठः । ननु कदरोपादानं न स्यादितीष्टमेवापादितम्; तत्राह प्रतिनिधित्वेनेति । नन्वदृष्टार्थत्वेऽपि प्रतिनिधिः सम्भवति, यूपे पशुं नियुञ्जीतेति वचनेन पशुनियोजनाधिकरणत्वेन यूपस्य विहितत्वात् । खादिराभावेऽपि पशुनियोजनरूपप्रधानलोपस्यान्याय्यत्वेन यस्य कस्यचित् द्रव्यस्य प्रतिनिधितया ग्रहणस्यावश्यकत्वात् । यूपे पशुं नियुञ्जीतेत्यत्रापि यूपशब्दार्थादृष्टविशेषस्यामूर्तस्याधिकरणत्वासम्भवेन द्रव्यलक्षणाया आवश्यकत्वात् । न च प्रतिनिधिसम्भवेऽपि तस्यादृष्टविशेषावच्छिन्नत्वं न सम्भवतीति वाच्यम्, व्रीहिप्रतिनिधिषु नीवारेषु प्रोक्षणादिवदिहापि छेदनादेः सम्भवात् । न हि यूपं छिनत्तीत्यादौ विवक्षितो वाक्यार्थः 'यत् पशुनि-

22 N*

दरादेरुक्तं ग्रन्थेषु । तस्मान्न यूपस्य केवलादृष्टरूपत्वम्, अपि तु दृष्टादृष्टसंस्कारगणो यूप इति साम्प्रदायिकाः । एवं चौदुम्बरत्वस्य न यूपमात्रेण नैराकांक्ष्यम्, दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात् ।

---

योजनद्रव्यं छिनत्ति स यूप' इत्येवंरूप एतन्न विषयीकरोति । एवं च खदिरजन्यादृष्टस्यैकस्याभावेऽपि छेदनादेरक्षतत्वात् तावतैव प्रतिनिधिसद्भाव-तत्संस्कारादिप्रतिपादकानां ग्रन्थानामविरोध इति चेत्——सत्यं पशुनियोज-नार्थद्रव्यमाक्षेप्तव्यम् । तथाऽपि न तत्र संस्कारा भवेयुः । यूपशब्दस्य हि संस्कारसमुदायोऽर्थः । अत एषां संस्काराणां मिलित्वैव कार्यकरत्वम् न पृथग्भूतानाम् । तद्यदि खदिरजन्यमदृष्टं नास्ति तत्र समुदाय-हान्याऽन्येषां तत्कार्यकरत्वस्य निर्मूलत्वेन छेदनादीनामप्यनुष्ठानं न स्यात् । अतः संस्कारार्हतया प्रतिनिधित्वेन कदरोपादानमुक्तं विरुद्ध्येतेति । तस्मात् प्रतिनिधेयत्वात् । दृष्टेति । पशुनियोजनं यावत् अनुष्ठीयमानेषु संस्का-रकेषु यानि दृष्टार्थानि, तज्जन्यानां दृष्टानामेव वाच्यत्वमुपगम्यते, न पुन-स्तन्नियमादृष्टानाम् । अन्यत्र पुनर्दृष्टाभावाददृष्टानामेव ग्रहणमिति दृष्टा-दृष्टसमुदायो यूपशब्दवाच्य इत्यर्थः । अत्र दृष्टादृष्टसंस्कारेष्वनेकेषु शक्तिक-ल्पने गौरवात् तावत्संस्कारजन्यमतिशयमेकं यूपदारुनिष्ठं परिकल्प्य तत्र शक्तिकल्पना युक्ता, अतः परिहारप्रकारोऽयं साम्प्रदायिकानुसारेणेति साम्प्र-दायिका इत्यनेन सूच्यते । ननु किं समुदायो यूपशब्दार्थ उत प्रत्येकम् ? आद्ये समुदायस्यैवैककार्यकरतया एकाभावे इतरस्य व्यर्थतया दशमद्वितीये 'खलेवाली यूपो भवती'ति विहितयूपस्थानापन्नखलेवाल्यां प्रोक्षणादेरदृष्टा-र्थस्य पर्यूहणादेर्दृष्टार्थस्य च सद्भावसिद्धान्तकरणविरोधः । अन्त्ये खदिर-जन्यादृष्टाभावेऽपि छेदनादिजन्यादृष्टस्यावश्यकत्वेनैव प्रतिनिधित्वेन कदरोपा-दानमुक्तं नायुक्तमिति चेत्——उच्यते । दीक्षाकालकर्तव्ययूपाहुत्याद्यङ्गकछे-

अतश्चास्ति औदुम्बरत्वस्याकांक्षा । विकृतेरप्यस्ति कथम्भावाकांक्षा । सा च तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था

---

दनतक्षणादिजन्यदृष्टादृष्टसंस्कारगणस्यैव यूपशब्दवाच्यता । खलेवाल्यां तूत्पन्नयूपसंस्कारकाणां यूपशब्दावाच्यानां सम्पादनं सिद्धान्तितामिति न दोषः । तथा चादृष्टमात्रस्य यूपत्वे प्रतिनिधिर्न स्यादेवेति । इदमत्रावधेयम् । अदृष्टमात्रस्य यूपत्वेऽपि न खदिरजन्यादृष्टस्यापि तथात्वम् । किं तु छेदनादिसंस्कारकक्रियाजन्यानामेव । अतश्च पशुनियोजनार्थमपेक्षितस्य द्रव्यस्य छेदनादिजन्यसंस्कारविशिष्टत्वे यूपं छिनत्तीति वाक्यबोधिते तत्र प्रकृतिद्रव्यापेक्षायां 'खादिरो यूपो भवती'ति खदिरो नियम्यते । तस्य च छेदनादिजन्ययूपशब्दार्थसंस्कारोपयोगित्वाभावात् स्वरूपे आनर्थक्यप्रसक्तौ, दर्शपूर्णमासयोराहवनीयोद्देशेन विहितस्याग्निसम्मार्गस्याधानजन्यापूर्वार्थत्वाभावेन दर्शपूर्णमासापूर्वार्थत्वमिव, प्रधानापूर्वसाधनीभूतयूपार्थत्वमेव वक्तव्यम् । तथा चौदुम्बरत्वस्य प्रकरणेनैव ग्रहणमिति । इत्थं परिहर्तव्येऽपि पूर्वपक्षे वस्तुतः केवलादृष्टरूपत्वस्य सिद्धान्त्यनभिमतत्वात् तावतैव परिहारः सम्भवतीत्येवमुक्तम् । तदेतदपि संस्कारपदेन ध्वनितम् । क्रियाया एव संस्कारकत्वं दृष्टम् । न खदिरादिद्रव्यस्येति । नन्वदृष्टसंस्कारस्य समुदायघटकत्वात्कुतो न नैराकांक्ष्यम् । तत्राह दृष्टेति । स्यादेव नैराकांक्ष्यम्, यद्यौदुम्बरत्वमदृष्टांशोपयोगि स्यात् । तत्तु द्रव्यपरिच्छेदकतया दृष्टविधयैवोपयुज्यत इत्यपूर्वसंबन्धं यावदाकाङ्क्षास्त्येवेति भावः ।

एवमक्रियात्वात् प्रकरणं न सम्भवतीत्याशङ्कायां तत्सद्भावज्ञापनायाक्रियाया अपि क्रियाद्वारा प्रधानापूर्वसम्बन्धं यावत् किं भावयेदित्याकांक्षासद्भाव उक्तः । अथ कथम्भावाकांक्षासद्भावमाह विकृतेरिति । अथाक्रियाभूतौदुम्बरत्वग्रहणपर्यन्तं तत्सत्त्वं दर्शयति सा चेत्यादिना । अयं भावः—

अन्वीयन्ते । न तूपकारमात्रान्वयेन शाम्यति । अतश्च यथेन्द्रियभावनायाः करणाकांक्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वयं यावदनुवर्तते न तु दध्यन्वयमात्रेण निवर्तते, आश्रयत्वेन च गृह्यमाणो होमः करणाकांक्षयैव गृह्यत इत्युच्यते, न त्वाश्रयाकांक्षा नाम चतुर्थ्यस्ति ; एवं

---

कर्मणो भावनायां करणत्वेनान्वये सति करणगतफलोत्पादनयोग्यतासम्पत्तये तज्जनकापेक्षायां प्रकृतौ प्रदेशविहिताः क्रियाः साध्याकांक्षिण्यस्तत्वेनान्विताः। तासां च तज्जनकत्वं साक्षादसम्भवादुपकारद्वारेति तत्रैव निश्चितमासीत् । अथ विकृतौ कथम्भावाकांक्षायां करणगतयोग्यताजनकापेक्षारूपायां सत्यां पूर्वं प्रकृतौ साक्षाज्जनकत्वेनावधृता उपकारा एवोपतिष्ठन्ते । अतस्तेषामेव योग्यताजनकप्रकाराणामन्वयो भवति । एवमन्वितानामुपकाराणां सम्पादनायैव प्राकृतपदार्थानां विकृतौ सम्बन्धो भवति । एवं च विकृतौ कथम्भावाकांक्षयोपकाराणामेव ग्रहणमिति क्रियारूपपदार्थानामपि कथम्भावाकांक्षया ग्रहणं न स्यात् । यदि वक्ष्यमाणदृष्टान्तन्यायानुसारेण तेषां तया ग्रहणमुपपाद्यते । तर्हि तादृशक्रियाजनकानामौदुम्बरत्वादिद्रव्यादीनामपि तेनैव न्यायेन तया ग्रहणं भवतीति । नन्विति । उपकारजनकाभावे उपकारस्यैवालब्धत्वादिति भावः । अतश्च पदार्थान्वयात् प्रागेव शान्त्यभावात् । अस्य गृह्यन्त इत्यत्र वा तदनन्तरं 'इति वक्तुमुचितम्' इत्यध्याहृत्य तत्र वाऽन्वयः । अध्याहारश्च यथापदघटितवाक्ये इत्युच्यत इति विद्यमानतयाऽत्रापि युक्तः । इन्द्रियभावनायाः दध्नेन्द्रियकामस्य जुहुयादितीन्द्रियोद्देश्यकदधिकरणकभावनायाः । अन्वयं यावत् अन्वयमवधीकृत्य अन्वयपर्यन्तमिति यावत् । चतुर्थी साध्यसाधनेत्थंभावाकांक्षाऽतिरिक्ता । एवमित्यस्याप्यध्याहर्तव्ये 'वक्तुमुचित'मित्यत्रान्वयः ।

विकृतेः कथम्भावाकांक्षा नोपकारान्वयमात्रेण निवर्तते, उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्तते। अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथम्भावाकांक्षयैव गृह्यन्ते। तत्र प्राकृताः पदार्थाः कथम्भावाकांक्षया गृह्यमाणा अपि न प्रकरणग्राह्याः, प्रकृत्युपकारकतया तेषामाकांक्षाभावात्। औदुम्बरत्वादयस्तु अन्यानुपकारकतया साकांक्षाः पशुनियोजनयूपपृष्ठभावेन यावत्खादिरत्वमायाति तावद्विधीयन्त इति युक्तं तेषां प्रकरणात् ग्रहणमुभयाकांक्षासत्त्वात्। यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात्ततो विकृतेराकांक्षाभावादौदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। न चैतदस्ति। चोदकस्य खादिरत्वाविषयत्वात्।

---

एवमाकांक्षाद्वयसद्भावं साधयित्वा कथम्भावेन गृह्यमाणेषु प्राकृतपदार्थवैलक्षण्यमौदुम्बरत्वादिषु दर्शयंस्तेषां प्रकरणग्राह्यत्वं निगमयति तत्रेत्यादिदिना। तत्र कथम्भावेन गृह्यमाणेषु पदार्थेषु। प्रकृत्युपकारकतया प्रकृतौ कृतोपकारतया। औदुम्बरत्वादय इत्यादिना विकृतौ प्राकृतयूपानुवादेन विधीयमानानामन्येषां ग्रहणम्। अन्यानुपकारकतयेति। विकृतिसन्निधौ पठितत्वादिति भावः। ननु यूपेऽतिदिश्यमाने खादिरत्वमप्यतिदिश्यत इति नौदुम्बरत्वादिग्रहणमित्यत्राह यावदिति। आयाति आगच्छेत्। ननु प्रकृतिवदित्येकेनैव पदेन सर्वातिदेशात् खादिरत्वमायात्येव। अथ तन्मा भूदिति प्रकृतिवदिति न कल्प्यते, यूपादिकमपि नायास्यतीत्यत्राह यदि हीति। एतत् खादिरत्वस्यापि विहितत्वम्। खादिरत्वाविषयत्वादिति। यूपादिसमर्पकश्चोदकः सामान्यतोऽस्त्येव। परन्तु तस्य खादिरत्वविषयकत्वं नोपगम्यते, औदुम्बरत्वादिश्रवणादिति भावः।

ननु यदि यावत्खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात्, तार्तीयबाधवत्। तथा हि बाधो द्विविधः—अप्राप्तबाधः प्राप्तबाधश्चेति। तत्र तार्तीयो बाधोऽप्राप्तबाधः। तत्र हि यावत् दुर्बलेन विनियोगः कर्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियत इति तद्बाधितेनेतरबाधोऽप्राप्तबाधः, दुर्बलप्रमाणस्याप्रवृत्तत्वात्।

प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानादर्थलोपात् प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः।

---

चोदकस्य खादिरत्वविषयकत्वमप्यावश्यकमिति शङ्कते नन्विति। तेन औदुम्बरत्वेन। तार्तीयबाधवत् तृतीयाध्यायोक्तबाधवत्। ननु कोऽयमप्राप्तबाधः? कीदृशबाधत्वं च प्रकृते वक्तव्यम्, येनेदमनिष्टमापाद्यत इत्यत्रोपपादयति तथा हीति। तत्र तयोः। तत्राप्राप्तबाधस्तार्तीयो बाध इत्यन्वयः। कुत इत्यत्राह तत्र हीति। तत्र तार्तीयबाधस्थले। मन्त्रादिरूपाङ्गमेव स्थलम्। दुर्बलेन लिङ्गादिना। विनियोगः कर्तुमारभ्यते किञ्चिन्निरूपिताङ्गत्वबोधौपयिकी श्रुतिः कल्प्यते। प्रबलप्रमाणेन श्रुत्यादिना। विनियोगः क्रियते अन्यनिरूपिताङ्गत्वबोध उत्पाद्यते। इतीति। अत इत्यर्थः। तद्बाधितेन प्रबलप्रमाणबाधितेनान्यनिरूपिताङ्गत्वेन। इतरबाधः दुर्बलबोधनीयाङ्गत्वस्य बाधः प्रमेयत्वप्रतिबन्धः। नन्वेकाङ्गत्वनिश्चयेऽन्याङ्गत्वप्रमितिः कुतो नोत्पद्यतेत्यत्राह दुर्बलेति। अप्रवृत्तत्वादिति। मन्त्राद्यङ्गगतसाध्याकांक्षारूपसहकारिवैकल्येन कल्पितश्रुतिकस्यापि बोधजननौन्मुख्यरूपशक्तिविरहादित्यर्थः। तथा च तत्र न प्रमाणप्रतिपन्नस्याङ्गभावस्य निवर्तनम्। किं त्वप्रतिपन्नस्यैव प्रतिपत्तिविषयत्वानुत्पाद एव। स एवाप्राप्तबाध इत्युच्यत इति भावः। अथ प्राप्तबाधमाह प्राकृतस्य त्विति। तुः प्राप्तबाध इत्यनेनान्वेति। प्राप्तबाधस्तु स इत्यन्वयः। बाधे हेतुत्रयं दर्शयति प्रतीति। प्रत्याम्नानात् प्रतिकूलाम्नानात्; बाधिष्यमाणाङ्गविरोध्यङ्गबोधनात्। अर्थलोपात् अर्थस्य प्रयोजनस्य लोपादसम्भवात्।

यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात्, यथा वाऽवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात्, यथा वा पित्र्येष्टौ होतृवरणस्य न होतारं वृणीत इति प्रतिषेधात्। औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः, शरकुशन्यायेन । चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति ।

उच्यते । तार्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्रा-

---

प्रतिषेधान्न नास्तीति शब्दतो बाधनात्। बाधः विकृत्यङ्गत्वाभावनिश्चयः। श्रुत्यादौ दर्शितत्वात्तार्तीयत्राघोदाहरणं न दर्शितम्। दाशमिके त्वस्मिन् प्राप्तबाधे हेतुत्रयस्य क्रमेण स्थलं दर्शयति यथेति । प्राकृतानां दर्शपूर्णमासीयानाम्। कुशानामिति । षष्ठ्यन्तविशेष्यत्रयेऽपि बाध इत्यनुवर्तते । प्रतिकूलशराम्नानात् 'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्'निति विहितायामिष्टौ 'शरमयं बर्हि'रिति कुशरूपबर्हिःकार्यत्तरणोद्देशेन शरविधानात्। कृष्णलेषु प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति विहितेषु कृष्णलेषु सुवर्णशकलरूपेषु । पित्र्येष्टौ महापितृयज्ञे। एवं बाधद्वयं निरूप्य प्रकृते स्वीकर्तव्यं बाधमाह औदुम्बरत्वेनेति। शरकुशन्यायेन शरकुशविषयकयुक्त्या शरेण कुशबाधस्य प्राप्तबाधत्वसाधकयुक्त्या । एवञ्च प्राप्तबाधत्वनिर्वाहाय चोदकस्यापि खादिरत्वविषयकत्वमावश्यकमित्याह चोदकेति। इतरस्य उपदेशतोऽतिदेशतो वा प्रसक्तप्राप्तिकस्य दुर्बलप्रमाणविनियोजनीयसामान्यस्य । ननु यस्य प्रबलप्रमाणेन विनियोगस्तस्यैव दुर्बलेनान्यत्र विनियोगो बाध्यते । इह त्वौदुम्बरत्वं प्रबलप्रमाणविनियुक्तम् । दुर्बलेन विनियोज्यं तु खादिरत्वम् । तत्कथमस्य बाधः ? न हि व्रीहिभिर्यजेतेति श्रुत्या व्रीहीणामङ्गत्वे सति प्रकरणविनियोज्यं प्रयाजादिकं बाध्यते । श्रूयताम् । प्रबलेन विनियुक्तस्य दुर्बलेन

स्वबाधनम् । प्रकरणं च तार्तीयम् । तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव । न हि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्मः ।

वस्तुतस्तु प्राप्तबाध एवायम् । न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः, तद्विषयत्वे वा तेनैव नैराकांक्ष्यान्नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम् । न हि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते । तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात् । किं तर्हि, तानेव पदार्थान् वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते । ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्त

---

विनियोगः कुतो नास्ति ? प्रबलकृताद्विनियोगात्तदीयसाध्याकांक्षायाः शान्तत्वात् । तद्वदेव प्रबलेन क्वचित्कार्ये कस्मिंश्चिद्विनियुक्ते कार्यगतायास्साधनाकांक्षाया नष्टतया न तत्कार्यसाधनतया दुर्बलेन किञ्चित् ग्रहीतुं शक्यते । खादिरत्वौदुम्बरत्वयोः पशुनियोजनयूप प्रकृतिद्रव्यविधयोपयोगात्पूर्वमुत्तरेण बाध्यते । व्रीहिप्रयाजादिकन्तु विभिन्नकार्यकरमिति । तेन तस्मात् । इतरस्य खादिरत्वस्य अतिदेष्टव्यस्य स्थानरूपदुर्बलप्रमाणविनियोज्यस्य । कुलधर्म इति । स हि विना हेतुचिन्तनं यथोक्तं ग्राह्यः । इदं तु युक्तिसाध्यमन्यथा भवन्न दुष्यतीति भावः । नन्वेवं कुशादिबाधः प्राप्तबाध इति सिद्धान्तविरोधः । वैषम्यादर्शनादित्यत्र वास्तवं पक्षमाह वस्तुतस्त्विति । नन्वेवं वृश्चिकभिया पलायमानस्याशीविषमुखे निपात इत्याशंक्य परिहरति न चेति । हेतुमाह न हीति । तथा सति पदार्थानां चोदकप्राप्तत्वे सति । शास्त्रेति । चोदकस्यापि श्रुत्यधीनक्लृप्तिकत्वेन शास्त्रत्वादिति भावः । किं तर्हीति । चोदकस्य प्रापकत्वाभावे किं तर्हि प्रापकमिति प्रश्नः । प्राप्तबाधत्वनिर्वाहाय कस्यापि प्रापकत्वमावश्यकमिति भावः । प्रापयतीति । चोदकः कर्ता । ते च ये विकृतौ बाध्यन्ते तेऽपि । यथा यदाहवनीये जुहोतीति

इति भवति पुरुषस्य भ्रान्तिः—यथा प्रकृतौ कृतं तथा विकृतौ कर्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्तव्या इति ।

अतश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्त इति भवति तद्बाधः प्राप्तबाधः । न च भ्रान्तिप्रतिपन्नेन वैधी आकांक्षा निवर्तयितुं शक्यते । तस्माद्युक्तमुक्तमुभयाकांक्षारूपप्रकरणसम्भवाद्विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति ।

---

वाक्ये जुहोतेस्सर्वसाधारणत्वेन पदे जुहोतीति पदाधिकरणकत्वेनावगतहोमस्याप्याहवनीयाधिकरणकत्वभ्रान्तिः तथा प्रकृतेऽपि ; चोदकस्य प्रकृतिवच्छब्दस्य साधारणत्वात् । तथा च भ्रान्तिहेतुरेव प्रापको न चोदक इति भावः । एवं प्राप्तिमुपपाद्य प्राप्तबाधत्वमुपपादयति अतश्चेति । भ्रान्तिहेतुरूपप्रापकसत्त्वाच्चेति तदर्थः । भ्रान्तिप्राप्ताः भ्रान्तिविषयीकृताः । नन्वेवं तार्तीयबाधेऽपि यदा श्रुतिमनालोक्य लिङ्गमात्रेण श्रुतिकल्पनयाऽङ्गतां बुध्यते तदा भ्रान्तिप्राप्तिः सम्भवति । सत्यम् । अथापि तत्र विद्यमानश्रुतिदर्शने सति भ्रान्तिहेतुभूताया लिङ्गकल्पितश्रुतेर्मिथ्यात्वं प्रतिपद्यते । इह तु नैवम् । प्रकृतिवच्छब्दस्य मिथ्यात्वकल्पनेऽङ्गान्तराणामप्यप्राप्तिप्रसङ्गात् । अतो मिथ्याभूतप्रमाणप्राप्तमप्राप्तम् । सत्यभूतप्रमाणप्रापितत्वाच्च प्राप्तमितीत्थं भेद इति । ननु भ्रान्तिप्राप्तत्वे परं कथं बाधः कथं च तेनाकांक्षा न शाम्यतीत्यत्राह न चेति । भ्रान्तिप्राप्तस्याकांक्षानिवर्तकत्वे विधेर्भ्रमात्मकबोधहेतुत्वेनाप्रामाण्यं स्यादिति भावः । एवं चोदकस्य खादिरत्वाविषयकत्वस्थापनेनौदुम्बरत्वग्रहणे कथम्भावाकांक्षासद्भावः साधितः । उपसंहरति तस्मादिति । तस्मात् आकांक्षाद्वयशामकस्यान्यस्याभावात् ।

केचिदाहुः यत्र प्राकृतक्रियानुवादेनाङ्गविधिः यथाऽहीनात्मकद्वाद-

एवं पृषदाज्येनानुयाजान् यजतीति प्राकृतानुयाजानुवादेन

---

शाहे द्वादशदीक्षा द्वादशोपसद इति द्वादशत्वविधिः, तत्र प्रकरणात् ग्रहणम् । यत्र तु प्राकृतद्रव्याद्युद्देशेन विधिः, यथा प्रकृत एव, यूपस्याक्रियात्वात् तत्र न प्रकरणेन ग्रहणम् , नावान्तरेति वार्तिकादिति । तन्न; द्वादशोपसद इत्यत्रोपसत्स्वरूप आनर्थक्ये वक्ष्यमाणरीत्या दीक्षणीयावाङ्नियमन्यायेन स्वापूर्वलक्षणाया युक्तत्वेन तदर्थत्वेनोपपन्नस्य द्वादशत्वस्याहीनापूर्वार्थत्वस्याबोधनीयत्वात् । न च कथम्भावेन तस्याहीनाङ्गत्वाभावेऽपि तत्रोपसदन्वयात्पश्चादनेकेषां प्राकृताङ्गानामन्वयायाकांक्षाशान्त्यभावो वाच्य इति कथमपि तावदेव द्वादशत्वस्योपसदन्वयात्प्रकरणात् ग्रहणमित्युच्यत इति वाच्यम् । एवंविधोक्तेरौदुम्बरो यूप इत्यत्रापि तुल्यत्वात् । नावान्तरेति वार्तिकस्य क्रियामद्वारीकृत्य न सिद्धवस्तुनः प्रकरणेन ग्रहणमित्येव तात्पर्यात् । प्रकृते च यूपस्य पशुनियोजनरूपक्रियार्थत्वेन तादृशयूपोद्देशेनैवौदुम्बरत्वविधानेन प्रकरणग्रहणसम्भवात् । अन्यथा प्राकृतद्रव्याङ्गप्राकृतद्रव्यादिग्रहणात्प्रागेव वैकृतकथम्भावनिवृत्तिप्रसङ्गश्च । द्रव्योद्देशेन विधीयमानगुणादेर्द्रव्यपरिच्छेदार्थत्वस्य वक्तव्यत्वेन परिच्छेदक्रियायोगोपपादनेन प्रकरणोक्तिसम्भवाच्च । वस्तुतस्त्विहोपक्रमस्थौदुम्बरशब्दस्यौदुम्बरत्वे लक्षणाया अयुक्तत्वेन यूपकार्यपशुनियोजनरूपार्थे यूपपदस्य शरमयं बर्हिर्भवतीत्यत्र शरपदस्येव लक्षणाया आवश्यकत्वेन प्रकृतविधौ क्रियोद्देशेनैव विधानमिति ।

एवं प्राकृताङ्गानुवादेन विधीयमानस्य प्रकरणं विनियोजकमित्यत्र कैश्चिदन्यस्योदाहरणं तेषां तत्रानवधानं दर्शयितुमनुवदति एवमिति । इतीति । इत्यनेन चातुर्मास्यगतेन वाक्येन । इह पृषदाज्यमाज्यतोऽ

विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्याः। अस्मत्तातचरणास्त्वेवमाहुः। पृषदाज्यं हि अनुयाजानुवादेन विधीयते। तत्स्वरूपे चानर्थक्यप्राप्तौ तैर्न विकृत्यपूर्वं लक्षयितुं युक्तं विप्रकर्षात्, किन्तु दीक्षणीयावाङ्नियमन्यायेन स्वापूर्वमेव लक्षयितुं युक्तं सन्निकर्षात्। अत एवोत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे। अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नानुयाजापूर्वेणैव नैराकांक्ष्यान्न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति।

---

तिरिक्तमनतिरिक्तं वेति वस्तुगतिमविचार्य तातचरणोक्तमाह अस्मदिति। आनर्थक्येति। तेषां द्रव्यमात्रापेक्षत्वेन विशेषविहितस्य स्वरूपनिष्पत्तिमात्रफलकत्वाभावादिति भावः। ननु प्रधानसम्बन्धि फलवच्च यदपूर्वं तत्प्रयुक्तत्वमेव युक्तं तत्राह दीक्षणीयेति। आग्नावैष्णवमेकादशकपालं निर्वपेदिति विहिता दीक्षार्थेष्टिर्दीक्षणीया। यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयादिति विहितस्वरनियमः। तथा च येन हेतुना वाङ्नियमस्य दीक्षणीयापूर्वार्थत्वमेव न तु ज्योतिष्टोमरूपप्रधानापूर्वार्थत्वम्, तेन हेतुनेत्यर्थः। सन्निकर्षादिति। स्वापूर्वेणैव सन्निकर्षस्य साक्षात्सम्बन्धस्य विद्यमानत्वेन तदेव शीघ्रोपस्थितिकम्। प्रधानापूर्वं तु तद्द्वारा पश्चादेव। अतः प्रथमोपस्थितेनैव नैरर्थक्ये परिहृते न दूरमध्वानं गन्तुं युक्तमिति। न च प्रथमोपस्थितस्यापि न फलवत्त्वमिति वाच्यम्। अस्य प्रधानोत्पत्त्यपूर्वेऽपि तुल्यत्वात्। परमापूर्वस्यैव फलवत्त्वात्। परम्परया तथात्वं पुनरस्यापि न क्षतमिति। उक्तन्यायसिद्धिस्थलमेव दर्शयति अत एवेति। प्रोक्षणेति। उत्पवनसंस्कृतानां प्रोक्षणीनामपां पात्रप्रोक्षणे विनियुक्तत्वादिति भावः। नवमे द्वितीयाधिकरणे। न च यावदनूयाजार्थत्वावगमस्तावदेव विकृत्यर्थत्वावगम इति युक्तम्। अनूयाजानामेव स्ववाक्यप्रतिपन्नत्वेन वैपरीत्यस्यैव सिद्धेरिति बोधयन्नुपसंहरति अतश्चेति।

वयं त्वङ्गीकृत्यापि विकृत्यर्थत्वं ब्रूमः । भवतु वा विकृत्यर्थत्वं पृषदाज्यस्य । तथाऽपि न प्रकरणं विनियोजकं भवति । यूपपृष्ठभावेन हि यावत्खादिरत्वमायाति तावदौदुम्बरत्वविधानादुभयाकांक्षासम्भवाद्युक्तः प्रकरणविनियोगः । एवं यावदनुयाजपृष्ठभावेन आज्यमायाति तावदेव यदि पृषदाज्यं विधीयेत तदोभयाकांक्षासम्भवात्प्रकरणविनियोगो भवेत् । न त्वेतदस्ति । न हि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति यदाज्यस्थानापन्नं विधीयेत, औदुम्बरत्वमिव खादिरत्वस्थानापन्नम् । पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात्, पृषदाज्यशब्दस्य चित्राज्यवाचित्वात् ।

---

इत्थं प्राकृतानामारादुपकारकाणामदृष्टार्थसन्निपत्योपकारकाणां चाङ्गानि विकृतौ प्रत्याम्नातानि न प्रकरणात् गृह्यन्त इति तातचरणाशयं प्रदर्श्याथ स्वयं तैरदृष्टार्थकर्माङ्गानामपि प्रकरणग्राह्यत्वमाशयानैर्न पृषदाज्यमुदाहर्तुं युक्तमिति निरूपयितुमारभते वयन्त्विति । वयं तु विकृत्यर्थत्वमङ्गीकृत्य ब्रूम इत्यन्वयः । भवतु वेत्यारभ्य पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीत्यन्तार्थस्येतिशब्दनिर्दिष्टस्य ब्रूङ्कर्मत्वम् । अङ्गीकृत्येति । अदृष्टार्थप्राकृताङ्गभूतप्राकृतपदार्थग्रहणपर्यन्तमिव तादृशपदार्थप्रत्याम्नातापूर्वपदार्थग्रहणपर्यन्तमपि तत्सद्भावोक्तेरुचितत्वादिति भावः । एवम् एतद्वत् । एतत् तावदेव पृषदाज्यविधानम् । ननु खादिरत्वविलक्षणमौदुम्बरत्वमिवाज्यविलक्षणं पृषदाज्यं श्रूयत इति किमत्र वैषम्यमित्यत्राह न हीति । अस्ति भवति । यदित्यस्य द्रव्यान्तरपरामर्शकत्वे प्रथमान्तता, द्रव्यान्तरभावरूपवाक्यार्थपरामर्शकत्वे यस्मादित्यर्थेऽव्ययत्वम् । नन्विहानुयाजेषु दध्न आज्यस्य च मिश्रणाद्दध्याज्यकार्यं द्रव्यान्तरमेव पृषदाज्यपदवाच्यमित्यत्राह पृषदिति । अवयवार्थमादायैवोपपत्तौ रूढिकल्पनस्यान्याय्यत्वाच्चित्रत्वविशिष्टाज्यं तदर्थः । न चेदमतिरिक्तम् । आमिक्षावत्तदुत्पत्तौ प्रमाणाभावा-

अत एव निगमेषु आज्यपानित्येव वक्तव्यम् न तु पृषदाज्यपानित्युक्तम्।

न च यावत् प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणविनियोगः सम्भवतीति वाच्यम् । न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते । विशिष्टविधाने गौरवापत्तेः, किन्तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते, लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवत् । तदुक्तं दशमचतुर्थचरणान्ते—

'न वा गुणशास्त्रत्वात्' इति ।

---

दिति । ननु पृषदाज्यशब्दो बहुव्रीहिसमासाद्दधिपर एवेत्याज्यातिरिक्तमेवेदमिति शङ्कां परिहर्तुं पूर्वोक्तार्थद्रढिम्ने चाह अत एवेति । चित्रत्वगुणविशिष्टाज्यमात्रवाचित्वादेवेति तदर्थः । निगदेषु देवानाज्यपानावहेत्याद्यर्थेषु मन्त्रेषु । न तु पृषदाज्यपानिति । अनुयाजविषये आज्यपदस्थाने पृषदाज्यपदं न प्रयोक्तव्यमित्येतावद्विवक्षित्वैवमुक्तम् ; 'न त्वाज्यपृषदाज्यपा'नित्येव तु वक्तव्यम्, अनुयाजार्थमाज्यपदत्यागप्रसक्तावपि प्रयाजार्थं तदावश्यकत्वेनात्यन्तत्यागायोगात् । इत्युक्तम् इतीत्युक्तम् । तथा च लक्षणाभिया न बहुव्रीहिः । आज्यद्रव्यस्य पृषत्तारूपगुणसम्पत्तये दधि गृह्यत इति भावः । नन्वाज्यपृषदाज्ययोरैक्येऽपि न प्राकृताज्यमतिदिश्य तदनुवादेन पृषत्ताविधिः सम्भवति, एकप्रसरताभङ्गप्रसङ्गात् । अतोऽनुयाजानुवादेन पृषदाज्यमेव विधेयमिति प्रकरणं भवतीत्याशंक्य परिहरति न चेति । लोहितेति । तथा च यथा तत्रातिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण लौहित्यविशिष्टोष्णीषस्य विधिः, एवमेकप्रसरताभङ्गाभावाय विध्यङ्गीकारेऽप्युष्णीषोद्देशेन लौहित्यविधान एव तात्पर्यम् ; तद्वत्प्रकृतेऽपीति भावः । गुणेति । गुणः पृषत्त्वं चित्रत्वम् । ननु 'अपि वाऽऽख्याविकारत्वात्तेन स्यादुपलक्षण'मिति पूर्वसूत्रेण दध्न आज्यस्य च संसर्गेण निष्पद्यमानस्य द्रव्या-

'प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधान'मिति च शास्त्रदीपिका। एवं च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैर्नैराकांक्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गवन्न प्रकरणं विनियोजकं सम्भवति।

यदि हि प्राकृतस्य कस्यचित् गुणस्य स्थाने चित्रता गुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकांक्ष्याभावात् चित्रतागुणस्य च तावदेव विधानादुभयाकांक्षासम्भवात् प्रकरणविनियोगो भवेत्। न च तादृशः प्राकृतो गुणोऽस्ति। आज्यस्यानुयाजानां च चित्रतागुणात् प्रागेव विधानात्, तस्य तत्स्थानापन्नत्वाभावात्।

---

न्तरस्यायमाख्याविशेषः पृषदाज्यमिति। अतस्तेन निगदेषूपलक्षणं कर्तव्यमिति पूर्वपक्षं कृत्वा सोऽनेन परिह्रियते, आज्यशब्दवाच्यं यत्सर्पिस्तद्गुणचित्रत्ववाची हि पृषच्छब्द इति। अतो द्रव्यान्तरपरत्वाभावे केवलाज्यपदप्रयोगे च सूत्राभिप्रेतेऽपि 'आज्यानुवादेन पृषत्तैव विधीयते, न विशिष्टाज्यमनुयाजानुवादेने'त्यत्रापि सूत्रतात्पर्यमिति कुत इत्याशङ्कायां शास्त्रशब्दात्तथा जानीम इति समाधिमभिसन्धाय विस्रम्भाय संवादं दर्शयति प्राकृतेति। तथा च पृषदाज्यस्योक्तदोषपरिहाराय करणत्वेनान्वयेऽपि तत्र नाज्यस्य प्रकरणेन ग्रहणम्, तस्य क्लृप्तोपकारत्वेन स्वतः साध्याकांक्षाविरहात्; नापि पृषत्तायाः, अपूर्वाङ्गत्वादित्याह एवं चेति। अपूर्वस्याप्यौदुम्बरत्वस्य प्रकरणग्राह्यत्वं युक्तम्। न तु प्रकृतस्य, वैषम्यादित्याह यदि हीति। तादृशः विधीयमानचित्रत्वस्थानित्वार्हः। आज्यादिकं तु न तादृशमित्याहाज्यस्येति। प्रागेवेति। अन्यथा तत्प्रासङ्गभावेन तदनुवादेन चित्रत्वविधानं न स्यादिति भावः। ननु निर्गुणत्वमेव गुणं आज्यपृष्ठभावेनाया-

न च आज्यपृष्ठभावेन यावत् प्राकृतं निर्गुणत्वमायाति ताव-देवास्य विधानात्प्रकरणसम्भव इति वाच्यम् । निर्गुणत्वस्यावि-हितत्वेन पाणिकण्डूयनवदनङ्गत्वाद्विकृतेस्तदाकांक्षाभावात्। तथा हि

---

स्यतीत्याशङ्कां क्षिपति न चेति । निर्गुणत्वं अङ्गाभावः । दृष्टान्तस्याङ्गत्वप्र-सक्तिं तदभावं चोपपादयन् दार्ष्टान्तिके सङ्गमयति तथा हीत्यादिना । पञ्चदिनसाध्ये ज्योतिष्टोमे पञ्चमं दिनं सुत्याहः । तत्र माध्यन्दिने सवने दक्षिणा दीयते । ततः, 'कृष्णविषाणया दीक्षयती'ति दीक्षाभिव्यञ्जक-त्वेन श्रुतस्य 'कृष्णविषाणया कण्डूयती'ति विहितकण्डूयनाङ्गत्वेन विनियु-क्तस्य कृष्णविषाणस्य 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यती'ति चात्वालाधिकरणकप्रासनरूपा प्रतिपत्तिः क्रियते । एवं प्रतिपत्तिश्रव-णात् दक्षिणादानपर्यन्तभाविपदार्थाङ्गत्वं कण्डूयनस्यावगतम् । अस्य ज्योतिष्टोमस्य द्वादशाहो विकृतिः । तस्मिन्नहीनात्मके सौमिकी दक्षिणा ऽतिदिश्यते । सा च सोमे तत्प्रयोगीयकर्त्रानतिसम्पादिकेत्येकस्मिन्न-हनि क्रियमाणाया एव द्वादशाहप्रयोगीयकर्त्रानतिसम्पादकत्वेन द्वितीयादौ सुत्याहे तदभावप्रसक्तौ 'अन्वहं द्वादशशतं ददाती'ति प्रत्यहं दक्षिणा विभ-ज्य दातव्यत्वेन श्रूयते । द्वादशाहविकृतिभूताश्च द्विरात्रादयोऽहीनाः । अहीनो नाम यजतिचोदनाचोदितोऽनियतयजमानसंख्याको यागः । स चैकादशरात्रपर्यन्तः । त्रयोदशरात्रादयस्तु सत्रशब्दव्यपदेश्या आसनोपा-यिचोदनाचोदिता बहुयजमानकाश्च । द्वादशाह उभयात्मकः । तेषु द्विरा-त्रादिषु यथाद्वादशाहं प्रत्यहं दक्षिणा विभज्य दीयते । तत्र विषाणक-ण्डूयनस्य दक्षिणादानान्तकर्माङ्गतया द्वितीयादिदिनेष्वपि दक्षिणाया दीय-मानत्वेन तत्पर्यन्तकर्मभिरपि तदपेक्षणात् प्रथमादौ दिने सा प्रतिपत्तिर्नानु-ष्ठीयते । प्रास्ते विषाणे कण्डूयनस्य तत्साधनकत्वभङ्गप्रसङ्गात् । न च

ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणत्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्नि अननुष्ठानम् । उत्तरेऽह्नि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणकण्डूयनस्य शास्त्रविहितत्वेनापेक्षितत्वात् । ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽह्नि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालीनैः पदार्थैर्नापेक्ष्यते, तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति ।

---

सोमे सुत्याहस्यैकत्वेन दक्षिणादानोत्तरमस्याः प्रतिपत्तेरनुष्ठानात्तदुत्तरं कण्डूयनं पाणिनैव क्रियत इति तत्पाणिकण्डूयनं तदातनकर्माङ्गमवसीयते । ते च पदार्था द्विरात्रादिषु प्रथमेऽप्यह्नि कर्तव्याः । तैश्च पाणिकण्डूयनमपेक्षितमिति कथं कृष्णविषाणं न प्रास्यत इति शंक्यम् । कण्डूतौ सत्यां तत्र कण्डूयनस्य पाणेश्च रागप्राप्तत्वेन विध्यदर्शनात् । न ह्यविहितमङ्गं भवति । अतो न तद्दक्षिणोत्तरकर्मभिरपेक्ष्यते । अनङ्गस्य चानपेक्षितस्य नातिदेशः । विषाणकण्डूयनं पुनः कृष्णविषाणया कण्डूयत इति विहितमपेक्ष्यते चातिदिश्यते चेति । विहितकृष्णविषाणत्यागस्य विहितस्य कृष्णविषाणप्रासनस्य । द्विरात्रादिष्विति । न च साक्षाद्विकृतिभूतो द्वादशाह एव कुतो न साक्षादुक्त इति वाच्यम् ; सुत्याहद्वयग्रहणेनैव वक्तव्योक्तिसम्भवेऽधिकानावश्यकत्वादिति । अशास्त्रीयत्वात् शास्त्रविहितत्वाभावात्, अतिदेशशास्त्राविषयत्वादिति वाऽर्थः । ननु द्विरात्रादिषु सर्वाहदीयमानपदार्थसमुदायस्यैव दक्षिणापदार्थत्वात्तद्दाननिष्पत्तिरन्त्येऽहन्येवेति कथं पूर्वं पाणिकण्डूयनप्रसक्तिः । उच्यते ; 'नीतासु दक्षिणास्वि'ति वाक्येन यो वस्तुगत्या दक्षिणादानकालस्तदा प्रासनं विधीयते । अक्रियमाणेऽपि दक्षिणादाने स कालो दक्षिणादानकाल एवेति प्रथमाह एव प्रासनप्रसक्तिरस्तीति । अत एव सत्रे ऋत्विगभावाद्दक्षिणारहितेऽपि प्रा-

एवं निर्गुणत्वस्याविहितत्वेन प्रकृतेस्तदपेक्षा नास्तीति । तस्मादुभयाकांक्षाया असम्भवात्पृषदाज्यस्य न प्रकरणविनियोगः सम्भवतीत्यलमतिविस्तरेण ।

तत्सिद्धं महाप्रकरणं प्रकृतावेव विनियोजकम् । विकृतौ तु यत्प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकं न तु केवलं विधीयमानस्यापूर्वाङ्गस्येति । यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तरालेऽपूर्वमप्यङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते ।

यद्यपि विकृतेः कथम्भावाकांक्षा प्राकृतैरेवाङ्गैः शाम्यति तथाऽपि यत्र प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत् कथम्भावाकांक्षा न निवर्तते । अतो विकृतेराकांक्षावत्त्वा-

---

सनानुष्ठानम् । उपसंहरति तस्मादिति । अत्र पृषत्त्वमपि न विधेयम्, बर्हिषी अन्तर्धाय दधि गृह्णातीति वाक्यबलेन दधिसंसर्गसिद्धावर्थादेव चित्रया यजेतेत्यत्रेव चित्रत्वप्राप्तेरित्यपि विमृश्यमस्तीत्याशयेनाहाऽलमिति । सिद्धमित्यस्य इतीत्यन्तेन विशेष्यसमर्पणम् । प्राकृतदृष्टार्थाङ्गानुवादेन प्राकृतकार्यार्थमिति यावत् ।

तत्रापवादमाह यत्त्विति । अपूर्वमित्यपिर्विरोधे । तदपीत्यपिः प्राकृतकार्यार्थधर्मसमुच्चये । तथापीति । प्राकृतग्रहणपर्यन्तं तावत्कथंभावसत्त्वमावश्यकम् । एवं च यत्र प्रथमं प्राकृतकार्यापन्नं मध्येऽपूर्वाणि अथ चान्यत्प्रकृतकार्यापन्नम्; तत्र प्रथमं गृहीत्वा द्वितीयग्रहणे व्याप्रियमाणो मध्यगतान्यपूर्वाणि गृहीत्वैव द्वितीयसविधमागच्छतीति सिद्धमपूर्वाणामपि कथम्भावेन ग्रहणम् । सिद्धं च तेषामुपकार्याकांक्षावत्त्वेन प्रकरण-

दन्तराले विहितस्याप्यपूर्वाङ्गस्य भाव्याकांक्षासत्त्वाद्युक्तं तस्य प्रकरणाद्विकृत्यर्थत्वम् । यथाऽऽमनहोमेषु । ते हि प्राकृताङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विधीयन्त इत्युक्तं तन्त्ररत्नादावित्यास्तां तावत् ।

---

मिति । यत्र यस्यां विकृतौ । विहितस्यापीत्यापराकांक्षासत्त्वादित्यनेनान्वयी समुच्चयार्थः । आमनहोमेष्विति । विकृत्यर्थत्वमित्यनुषज्यते । वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकाम इति विहितसांग्रहणीष्टिसन्निधौ 'आमनमस्यामनस्य देवा' इति तिस्र आहुतीर्जुहोतीत्यामनहोमाः । एषामीदृशत्वे प्रमाणमाह ते हीति । इदमत्रावधेयम् । किमत्र 'यत्प्रयाजानां पुरस्ताज्जुहुयाद्बहिरात्मानं सजातानां दध्यात्, यद्यनूयाजानां परस्ताज्जुहुयात्स्वर्गं लोकमपक्रामेत् मध्ये जुहोति मध्यत एव सजातानात्मन्धत्ते' इति प्रयाजानुयाजमध्यवर्तित्वश्रवणात् प्रयाजानुयाजानां च प्राकृतत्वात् प्राकृतमध्यपातित्वेन प्रकरणात् ग्रहणमित्युच्यते किं वा सांग्रहण्यङ्गप्राकृतपरिधानमुद्दिश्य मन्त्रविशेषविधायकवाक्यस्य यत्प्रयाजानामिति पूर्वोक्तवाक्यस्य च मध्ये आमनमस्येत्युत्पत्तिवाक्यसद्भावेन प्रकरणग्राह्यत्वम् ? उभयमपि न सम्भवति, प्रयाजादीनां दृष्टार्थाङ्गत्वाभावात्, यत्प्रयाजानामिति वाक्ये प्राकृताङ्गकीर्तनेऽपि तदुद्देशेन कस्य चिदविधानेन प्रकृतहोमानामेव तन्मध्यदेशविधानेनाकांक्षाया अभावाच्च । अत आमनहोमानां सन्निधिनैव ग्रहणम् । इदमभिप्रेत्याह आस्तां तावदिति । अत्रेदं बोध्यम्—प्राकृतानुवादेन विकृत्यनुवादेन वा विधीयमानधर्मेण विकृत्या च सन्दष्टस्य, विकृत्यनुवादेन विधीयमानधर्ममात्रसन्दष्टस्य, प्राकृतानुवादेन विकृत्यनुवादेन च विधीयमानसन्दष्टस्य च प्रकरणग्राह्यत्वं सम्भवतीति । इदमप्यास्तामित्यत्र निगूढम् ।

फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । तच्च सन्दंशेन ज्ञायते । तदभावेऽविशेषात्सर्वेषां फलभावनाकथम्भावेन ग्रहणात् ।

सन्दंशो नाम एकांगानुवादेन विधीयमानयोरंगयोरन्तराले

---

उक्तं महाप्रकरणम् । अवान्तरप्रकरणं निरूपयति फलेति । अन्तरालेऽधिकारमध्ये । एतावत् स्वरूपकीर्तनम् । अथ वा अत्राङ्गभावनाया इत्यस्य यथाश्रुत एवार्थः न तु फलार्थकर्माङ्गभावनाया इत्यर्थः । अवान्तरप्रकरणमध्येऽपि किञ्चिदवान्तरप्रकरणमस्ति चेत्तस्यासंग्रहापत्तेः । एवं च प्रधानस्यापि फलं प्रत्यङ्गत्वेन तद्भावनाया अप्यङ्गभावनात्वान्महाप्रकरणस्याप्यवान्तरप्रकरणत्वापत्तिः । अतोऽन्तराल इत्युक्तम् । तथा च फलानिरूपिताङ्गत्वाश्रयसम्बन्धिभावनागतेतिकर्तव्यताकांक्षा उपकार्याकांक्षाविशिष्टा अवान्तरप्रकरणमित्यर्थः । लक्ष्यं दर्शयति तच्चेति । प्रथमादिना जाघन्यादेः द्वितीयादिना पत्नीसंयाजादिकर्मणश्च परिग्रहः । तत्तदङ्गकथंभावाकांक्षया तत्तदनन्तरविहितग्रहणमित्येवमवान्तरप्रकरणमिति न मन्तव्यमिति । तत्र गमकं वक्ति तच्चेति । अविशेषादिति । बहुषु वक्तव्येषु कस्याप्यानन्तर्यस्यावर्जनीयतया प्रधानान्वयस्याभ्यर्हितत्वेन च तत्कथम्भावाकांक्षया खले कपोतन्यायेन सर्वग्रहणसम्भवेन कस्यचिदेव तदङ्गत्वमित्यत्र गमकविशेषाभावादित्यर्थः । कोऽयं सन्दंशः तमाह सन्दंश इति । विकृतौ प्रकरणसद्भावज्ञानोपयोग्यपि कश्चित्सन्देशः पूर्वोक्तरीत्या भवति । तत्र न सन्दंशप्रसिद्धिरितीह नामग्रहणम् । प्रथमं यदङ्गानुवादेनाङ्गं विहितम्, तद्भिन्नाङ्गानुवादेन चेत्पश्चादङ्गं विधीयते, तर्हि तत्रानूद्यमानाङ्गस्य कथम्भावानुवृत्तौ प्रमाणाभावादेकेति । एकप्रधानानुवादेन विहितमध्यपातिविषये महाप्रकरणस्य विकृतावुक्तत्वेन तस्य सन्दंशस्यावान्तरप्रकरणग्राहकत्वाभावादङ्गेति । अङ्गयोरिति तत्त्वकथनम् । स्वोद्देश्यकधर्मविधायकवाक्योत्तरत्व-

विहितत्वम्, यथाऽभिक्रमणम् । तद्धि 'समानयते (जुह्वाम्) उपभृतः' इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधाय विधीयते । पश्चादपि प्रयाजानुवादेन यो वै प्रयाजानां मिथुनं वेदेत्यादिना

---

स्वोद्देश्यकधर्मविधायकवाक्यपूर्वत्व-रूपसम्बन्धद्वयेनाङ्गविशिष्टवाक्यविहितत्व-मिति पिण्डितार्थः । उक्तस्थले सन्दंशं दर्शयितुमाह यथेति । यादृश-सन्दंशविशिष्टमित्यर्थः । समानयत इति । तिस्रः स्रुचो भवन्ति जुहूरुप-भृद्ध्रुवा चेति । तासु चत्वार्याज्यचतुर्गृहीतानि सन्ति, 'चतुर्जुह्वां गृह्णाति प्र-याजेभ्यस्तत् । अष्टावुपभृति प्रयाजानूयाजेभ्यस्तत् । सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्य' मिति वचनात् । तत्र प्रयाजार्थचतुर्गृहीतस्योपभृति सत्त्वात् तत्पात्राज्जुह्वामाज्यस्य समानयनमिह विधीयमानं प्रयाजार्थमिति । नन्वनुयाजार्थमपि तत्र चतुर्गृहीतसत्त्वात्तदर्थमिदं समानयनमिति किं न स्यात् । किं च प्रयाजत्रयानन्तरकाले विधीयमानमिदं समानयनं न प्रया-जार्थं भवति, तत्समानयनस्य सर्वप्रयाजोपक्रम एव कर्तव्यत्वादित्यत्राहेत्या-दिनेति । अयं भावः—उपरि बर्हिस्स्वाहाकाररूपप्रयाजद्वयवचनात्तदर्थमेवे-दम् । नानुयाजार्थम्, तथात्वे तेषामिहाकरणेन तत्समानयनस्यादृष्टार्थत्वा-पत्तेः । न च प्रयाजार्थत्वे सर्वोपक्रमे समानयनप्रसक्तिः । जौहवाज्य-सत्त्वेनौपभृताज्यस्य सर्वप्रयाजार्थत्वाभावात् । उभयोराज्ययोः सर्वार्थत्वे वि-कल्पप्रसङ्गात् । प्रयाजानुयाजेभ्य इत्यत्र प्रयाजाभ्यामनुयाजेभ्यश्चेति वि-ग्रहसम्भवाच्चेति । यद्यपि जुह्वा जुहोतीति सर्वहोमस्य जुहूसाध्यत्वावगते-रौपभृताज्यसमानयनं जुह्वां स्वत एव प्राप्तं न विधेयम् । अतः समानयनो-द्देशेन 'अतिहायेडो बर्हिः प्रतीति बर्हिःप्रयाजोपक्रमकाल एव विधीयेत ; अथापि विधीयमानस्य कालस्य परम्परया प्रयाजाङ्गत्वान्नाकांक्षाविरह इति । विधीयत इति । अभिक्रामं जुहोतीति वाक्येनेति शेषः । अत्र 'यो वै प्रया-जाना'मिति वाक्ये न किञ्चिद्विधीयते, तस्यार्थवादत्वादत आहेत्यादिनेति ।

किञ्चिदङ्गं विधीयते । अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति, तत्कथंभावाकांक्षाया अशान्तेः । यथाहुः—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः ।
ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते ॥ इति ।

---

तेन प्रयाजानिष्ट्वा हवींष्यभिघारयतीति वाक्यमभिप्रेतम् । तत्र हविरभिघारणरूपाङ्गविधानात् । अत्रैतदर्थवादे प्रयाजानां पितृत्वस्यानुयाजानां पुत्रत्वस्य च कीर्तनेन प्रयाजीयरिक्थभागित्वौचित्यस्यानुयाजेषु वर्णनेन सर्वस्यापि हविषोऽभिघारणमिदं प्रयाजशेषेण कर्तव्यमित्यौचित्यबलेनावगम्यमानत्वात्प्रयाजशेषप्रतिपत्तिरूपस्यास्याभिघारणस्य प्रयाजार्थत्वावसायः । अतः पूर्वं पश्चाच्चाङ्गविधानात् । नन्वेवमपि साक्षात्तदनुवादेन विहितधर्मेणैव कथम्भावस्य शान्तत्वादस्य कथं तदङ्गत्वम् ? तत्राह तदिति । तदिति प्रयाजेत्यर्थः । अशान्तेरिति । प्रथमतः प्रयाजानुवादेन यदङ्गं तदन्वयमात्रेण तत्कथम्भावो न शाम्यति, तथात्वे उत्तरं विधीयमानस्याग्रहणप्रसङ्गात् । तदर्थं पुनराकांक्षोत्थापने च गौरवम् । अत उत्तराङ्गान्वयपर्यन्तमाकांक्षानुवृत्त्या मध्ये विहितमपि तयैव गृह्यत इति भावः । अत्राभिक्रमणस्य नावान्तरप्रकरणात्प्रयाजाङ्गत्वम्; किन्त्वभिक्रामं जुहोतीति वाक्यादेव, जुहोतीति प्रयाजीयहोमस्य निर्दिष्टत्वात् । अतो जुहोतेः सर्वहोमपरत्वं प्रधानहोमपरत्वं वा परित्यज्य प्रयाजापूर्वसाधनहोममात्रपरत्वे तात्पर्यग्राहकमत्रावान्तरप्रकरणम् । ततश्च वाक्यात्तावन्मात्राङ्गत्वसिद्धिरित्यत्र ग्रन्थतात्पर्यम् । परप्रकरणस्थानां प्रकरणादन्याङ्गभूतानां तेषु किञ्चित्प्रतीति यावत् । श्रुत्यादिभिस्त्रिभिः श्रुत्या लिङ्गेन, वाक्येन वा कस्मिंश्चिदङ्गे ज्ञाते, पुनश्च तैरेव श्रुत्यादिभिस्तदेव प्रत्यन्यस्मिन्नङ्गे ज्ञाते सति निष्पद्यमानेन संदंशेन तत् अवान्तरप्रकरणमिष्यते । ननु यत्करणं तस्यैव कथंभावः । दर्शपूर्ण

न चाङ्गभावनायाः कथंभावाकांक्षाभावात् कथं प्रयाजभावनाकथंभावेनाभिक्रमणं गृह्यते इति वाच्यम् । भावनासाम्येन सर्वत्र कथंभावाकांक्षायाः सत्त्वात् । प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्यास्त्येव कथंभावाकांक्षा—कथमेभिरपूर्वं कर्तव्यमिति । सा च संदंशपतितैर्वाचनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति । तदभावे च स्वरूपनिष्पा-

---

मासयोश्च फलकरणत्वात्कथम्भावसत्त्वाद्युक्तं प्रयाजादीनामितिकर्तव्यतात्वम् । न हीतिकर्तव्यता कथमित्याकांक्षति। अतः कथमङ्गभावनायाः कथम्भावः । कथंतरां च तदशान्तिवर्णनेनाभिक्रमणस्य तदङ्गभाव इत्याशंक्याह न चेति । प्रयाजभावनाकथम्भावेनाभिक्रमणं गृह्यत इति कथम्, अङ्गभावनायाः कथम्भावाकांक्षाभावादित्यर्थः । यथा फलं प्रति दर्शपूर्णमासौ करणम् , तथा तदुपकारं प्रति प्रयाजादिकं करणमेवेति सम्भवति करणभूतस्यास्य कथम्भाव इति वक्तुमाह भावनेति । भावनासाम्येन भावनात्वाविशेषेण । सर्वत्र सर्वासु भावनासु उपपादयति प्रयाजैरिति । यागोपकारं यागस्यापूर्वजननयोग्यताम् । इत्युक्ते इत्यस्मिन्नुक्ते, इत्युक्तौ सत्यामिति वाऽर्थः । अस्मिन्नर्थे भावे क्तः । अज्ञातुः प्रसिद्धत्वान्नामग्रहणम् । त्वर्थे वा । तस्यास्त्येवेति । तद्गतैवाकांक्षाभावनागतत्वेनोपचर्यत इति भावः । फलवत्सन्निधिगतानां सर्वेषामपि प्रधानार्थत्वेन सा कथं शाम्यतु तत्राह सा चेति । संदंशपतितैः संदष्टैः । वाचनिकैः श्रुतिवाक्यविनियुक्तैः । स्मार्तैः स्मृतिविहितैः । चकारेण लिङ्गस्थानादिविनियुक्तान्यतिदिष्टानि च समुच्चिनोति । आचमनादिभिरित्यस्य स्मार्तैरिति विशेषणम् । आदिना शुचिना कर्तव्यमुपवीतिना कर्तव्यमित्युक्तशुचित्वादिपरिग्रहः । तदभावे चेति । उक्तविधेष्वङ्गेषु कस्याप्यभावेऽत्वित्यर्थः । स्वरूपनिष्पादनेन यस्याङ्गस्य कथम्भा-

दनेन दर्विहोमन्यायेन निवर्तते । दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथाव्यापारो न श्रूयते । नाप्यतिदेशेन तत्प्राप्तिः । यागीयानां धर्माणां तावन्नातिदेशो यागत्वेन होमत्वेन वैलक्षण्यात् । नापि होमीयानां, कस्य होमस्य धर्मः कस्मिन् होमे प्रवर्तत इति विशेषनिर्णये प्रमाणाभावात् । अतो धर्मप्राप्त्यभावाद्दर्विहोमैरिष्टं भावयेत्

---

वस्तत्स्वरूपसंपादनरूपेतिकर्तव्यतालाभेन । पचतीत्यत्र हि जायमाना कथम्भावाकांक्षा काष्ठेन्धनस्थाल्यधिश्रयणादिपाकस्वरूपनिष्पादनप्रकारलाभादपि शाम्यति । दर्विहोमन्यायेनेति । (८. ४. २) दर्विहोम इति, स्मार्तेषु स्थालीपाकादिषु श्रौतेषु च क्वचिद्दर्वीसद्भावात्तद्भिन्नजुहूस्रुवादेरन्यत्र सद्भावेऽपि दर्वीशब्दस्य तदुपलक्षणत्वात्तत्तत्पात्रसाध्यहोमसामान्यनामधेयम् । अत्र सम्भवन्नित्थंभावः किमुपदेशादाहो अतिदेशात् द्वितीयेऽपि किं यागादतिदेशादुत होमादिति विकल्पमभिप्रेत्य प्रथमं निरस्यति स्वरूपेति । तथा अन्यत्रेव । नेति । इदं च वाचनिकाङ्गरहितदर्विहोमाभिप्रायेण विकृतित्वाभावस्याविशिष्टत्वेऽपि क्वचिदङ्गश्रवणात् । द्वितीयं निरस्यति नापीति । तत्प्राप्तिः व्यापारप्राप्तिः । ननूत्पत्तिवाक्ये देवताऽश्रवणसाजात्यात्सोमोपांशुयाजविकृतित्वं स्यादित्यत्र द्वितीयाद्यं निरस्यति यागीयानामिति । तावदित्यवधारणे । यागत्वेन सोमादेः । होमत्वेन दर्विहोमानाम् । ननु वैलक्षण्येऽप्युक्तसाजात्यसत्त्वात्स्यादतिदेशः । न स्यात् ; धात्वर्थसालक्षण्ये सति तद्विशेषापेक्षायामेव साजात्यन्तरग्रहणस्यावसरात् । धात्वर्थसाजात्यस्थितिमालोच्यान्त्यं क्षिपति नापीति । कस्येति । किमग्निहोत्रात् किं नारिष्टहोमेभ्यः किं वा पिष्टलेपफलीकरणहोमादित इति विचारे विशेषावधारणे कारणाभावादित्यर्थः । अतः धर्मप्रापकाभावात् । दर्विहोमैरित्यादि । कथमनेनेष्टं भावयेदिति तत्तद्विधिवाक्य उत्पन्नेत्यर्थः । उक्तं न्यायमति-

कथमित्युत्पन्नाप्याकांक्षा स्वरूपनिष्पादनेनैव शाम्यति । एवं येष्वङ्गेषु संदंशाद्यभावस्तत्रोत्पन्नाप्याकांक्षा तेनैव निवर्तते, न तु सर्वथा तदभावः । तस्माद्युक्तमुक्तमभिक्रमणं प्रयाजाङ्गमिति ।

तच्चेदमवान्तरप्रकरणं महाकरणाद्बलीयः, संदंशपतितानां धर्माणां कैमर्थ्याकांक्षायां प्रधानापूर्वात्प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति । प्रकृतमनुसरामः । तत्सिद्धमुभयविधस्य प्रकरणस्य विनियोजकत्वम् ।

तदिदं स्थानादिप्रमाणाद्बलवत् । यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकारान्तरेण निराकांक्षत्वम् । न च साकांक्षं निराकांक्षेण

---

दिशति एवमिति । आदिना वचनस्मृत्यादिपरिग्रहः । तेन स्वरूपनिष्पादनेन । एवं कथम्भावस्थापनेन संदंशमुपपाद्यावान्तरप्रकरणं साधितम् । अथोपसंहरति तस्मादिति । अवान्तरप्रकरणसद्भावादित्यर्थः । नन्ववान्तरप्रकरणसत्त्वेऽपि न तेन सन्दष्टग्रहणम्, अङ्गप्रकरणरूपादस्मान्महाप्रकरणस्य बलीयस्त्वादिति शङ्कायां द्वयोर्बलाबलं विवेचयति तदिति । तत् लक्षितम् । इदं परीक्षितम् । झटितीति सन्निहिततरत्वादिति भावः । नन्वेवं पूर्ववाक्यविहिताङ्गस्य प्रधानापेक्षया सन्निहिततरत्वेनोत्तरवाक्यविहितस्य तदङ्गत्वं स्यादिति चेन्न ; आनन्तर्यस्यावर्जनीयत्वेन सर्वेषामपि प्रधानान्वयात् । इह तु नैवम् । सन्दष्टस्याङ्गाङ्गत्वे श्रुतितात्पर्याभावे उत्तरवाक्यविहिताङ्गानन्तरमस्य पाठसम्भवादित्यलम् । इदमब्रुवन्नाह प्रकृतमिति । विना बलीयस्त्वं सिद्ध्यतोऽप्यवान्तरप्रकरणस्य व्यर्थतया बलीयस्त्वविचारात्प्रागनुक्त्वेदानीमाह तत्सिद्धमिति ।

स्थानादीत्यादिना समाख्याग्रहणम् । यत्र यादृशोपकार्योपकारकविषये । अन्यतरस्य उपकार्यस्योपकारकस्य वा । प्रकारान्तरेण कल्प्तो-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संबन्धुं योग्यं विनाकांक्षोत्थापनेन । अतश्चान्यतराकांक्षया यावदुभयाकांक्षारूपप्रकरणकल्पनद्वारा वाक्यादि कल्पयितुमारभ्यते, झटिति तावत्प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वम् ।

अत एव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि

---

प्रकारकपदार्थलाभेन प्रकृतावन्वितत्वेन वा । ननु स्थानादङ्गत्वेऽप्यन्यतरस्य क्वचिन्न निराकांक्षत्वम् , यथा मन्त्रस्याङ्गत्वे । तस्य प्रकरणे पाठादेव साकांक्षत्वात् प्रधानकथम्भावस्य च भावात् । अक्रियात्वेनात्र प्रकरणाभावाच्च । उच्येत, स्थानप्रकरणयोर्हि तत्र बलाबलं निरूप्यते । तच्च , यत्र स्थानादपि विनियोगस्सम्भवति प्रकरणादपि, तत्र निरूपयितव्यम् । अतस्तादृशक्रियाविषयेऽन्यतराकांक्षैवेति न दोषः । वस्तुतो मन्त्रस्यार्थाभिधानरूपेतिकर्तव्यताकल्पनया विलम्बेन प्रधानेऽन्वयान्मन्त्रस्य साक्षाद्ग्रहणाभावात्प्रधानकथम्भाव एतद्विषयेऽविद्यमानप्राय इति युक्तमत्रापि प्रकारान्तरेण निराकांक्षत्वम् ; प्रकारान्तरेण इतिकर्तव्यतापेक्षत्वेन । निराकांक्षत्वं मन्त्रविषयकापेक्षारहितत्वमिति । एवं कल्पयितव्यत्वायाकांक्षाभाव उक्तः । अथ कल्पने हेतुमाह न चेति । साकांक्षं स्वयं साकांक्षमपि । फलमाहात एवेति । विदेवनादय इति । दिशोऽभ्ययं राजाऽभूदिति पञ्चाक्षान् प्रयच्छतीति विहितमक्षदेवनं विदेवनम् । आदिना शौनःशेफमाख्यापयति राजन्यं जिनातीति विहितपरिग्रहः । अभिषेचनीयेति । अभिषेचनीयो नाम सोमयागविशेषो राजसूयान्तर्गतः । पठिता इति पाठसादेश्यरूपस्थानमस्तीत्युक्तम् । अङ्गमिति वचनमविवक्षितम् । ननु दर्शपूर्णमाससन्निधौ पठितानां प्रयाजादीनामिव विदेवनादीनामप्यभिषेचनीयाङ्गत्वं प्रकरणादेव किं न स्यात् । न चाभिषेचनीयस्य फलवत्त्वाभावः राजसूयघटकतया स्वाराज्यफलवत्त्वादित्यत्राह

नाभिषेचनीयस्याङ्गम् । तेषां तदङ्गत्वं भवत् स्थानाद्भवेत्, न तु प्रकरणात् अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेनज्योतिष्टोमविकारत्वात् प्राकृतैरेव धर्मैर्निराकांक्षत्वात्। किं तु प्रकरणाद्राजसूयाङ्गम् ।

ननु 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजसूयशब्दस्तावन्नामधेयत्वादाख्यातपरतन्त्रः । यत्राख्यातं तत्रैव प्रवर्तते । न च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रम् । तत्र हि यजेतेत्याख्यातमविशेषात्

---

तेषामिति । भवदिति यदि भवेदिति यावत् । अव्यक्तचोदना अविधीयमानदेवताकं विधायकवाक्यम् यद्वाऽव्यक्तस्य देवताङ्गकत्वाभाववतः कर्मणश्चोदना । विकारत्वात् विकृतित्वात् ।

नन्वभिषेचनीयस्येव कृत्स्नस्यापि राजसूयस्येष्टिपशुसोमात्मकत्वेनान्यविकृतित्वात्कृत्स्नोऽपि प्राकृतैरेवाङ्गैर्निराकांक्षीकृत इति न कथमपि विदेवनादेः प्रकरणं भविष्यति । अतस्सन्निधिरेव प्रमाणम् । स चाभिषेचनीयस्येवेति नेदं प्रकृतोदाहरणमिति शङ्कते नन्विति । विलक्षणोऽयं राजसूयात्मका यागः । सन्निधिगताश्चेष्टिपशुसोमा एतदङ्गमेव । अतो नास्य न प्रकरणमिति मतिं व्युदसितुमाह राजसूयेति । आख्यातं धातुः । किमिदं पारतन्त्र्यं तदाह यत्रेति । यत्र यस्मिन्नर्थे । तथा च तत्पारतन्त्र्यं तज्जन्यार्थोपस्थितिमुपजीव्यार्थोपस्थितिजनकत्वम् । राजसूयशब्दस्य हि तृतीयान्ततया फलकरणवाचित्वं निश्चीयते । फलस्य च स्वाराज्यस्य पृथगुपात्तत्वाद्यजिरपीह करणमित्यवगम्यते। अतो विधेयवाचिनो यजेर्विलक्षणयागपरत्वमध्यवसाय तत्सामानाधिकरण्याद्राजसूयशब्दस्तदर्थकोऽवगम्यत इति तत्पारतन्त्र्यम् । ननु नामधेयत्वहेतुनाऽऽख्यातपारतन्त्र्यं न सिद्ध्यति हेतोर्विरुद्धत्वाद्व्यभिचारित्वाद्वेत्याशंक्याह न चेति । वाच्यमिति परेणान्वयः । कुत इत्यत्राह तत्र हीति । अविशेषात्

सर्वानेव प्रकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थम् । दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति न सर्वान् । अतश्च न तदाख्यातपरतन्त्रम् । तथा राजसूयपदमपि किं न स्यादिति वाच्यम् । प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते । यदाहुः—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥ इति ।

दर्शपूर्णमासपदं च कालनिमित्तम्, तद्योगश्चाग्नेयादिषूत्पत्ति-

---

धात्वर्थतावच्छेदकयागत्वस्य प्रयाजादितो व्यावृत्त्यभावात् । सोमयागादौ प्रवृत्तिनिमित्तसम्भवेऽपि अनुवादस्य सन्निहितगामित्वान्न वाच्यत्वमित्यभिप्रेत्य प्रकृतानिति । सर्वान् प्रयाजादीनपि । अतश्च आख्याताभिधेययावदभिधेयकत्वाभावात्। तथेति यथेत्यस्य प्रतिसंबन्धि । दर्शपूर्णमासपदमिवाख्यातपरतन्त्रभिन्नमित्यर्थः । नामधेयत्वादित्यनेन न केवलनामत्वं विवक्षितम् ; अपि त्वप्रसिद्धार्थकनामत्वम् । अतो न दोष इत्याशयेनाह प्रसिद्धेनेति । प्रसिद्धेन इदमेतदर्थवाचकमिति निश्चितेन । अप्रसिद्धं तथाऽनिश्चितम् । निर्णीयते इदमेतदर्थबोधकमिति निर्णयविषयीक्रियते । प्रसिद्धपदसमभिव्याहारेणाप्रसिद्धार्थकस्यार्थो निश्चीयत इत्यर्थः । अत्र वार्तिकं प्रमाणयति यदिति । अज्ञातं कस्विदस्यार्थ इत्यन्ताज्ञातं एवं सन्दिग्धं किमयमस्यार्थः किं वाऽयमिति सन्देहविषयीभूतार्थकम् । अपृथक्छ्रुति सहश्रुतं समभिव्याहृतं सत् । निरूढं निश्चितार्थकं पदम् । नापनीयते नान्यत्र नीयते । ततः किमित्यत्राह दर्शेति । कालनिमित्तं दर्शपौर्णमासीरूपकालप्रवृत्तिनिमित्तकम् । ननु कालनिमित्तकत्वे आग्नेयादिष्विव प्रयाजादिष्वपि दर्शपूर्णमासपदवृत्तिः सम्भवतीति नाग्नेयादिमात्रार्थकत्वम् । न च प्रयाजादीनामाग्नेयाद्यङ्गत्वसिद्धान्ते हि प्रधानकालस्याङ्गेष्वपि सम्भवेन तत्कालयोगः शक्यवचनः । न तु तेषां फलवत्त्वेन प्रधानत्वे इति वाच्यम् ।

**वाक्यैरवगतः। अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम्। न च आग्नेयादीनां बहुत्वात् द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः।**

---

यजिना सर्वानुपस्थाप्याग्नेयादिभिः समुच्चित्यैकस्मिन् फले विनियोगेन प्रयोगैक्यावगतौ अङ्गत्व इव प्राधान्येऽप्याग्नेयादिसाहित्यसम्पत्तय तत्कालिकत्वलाभादित्यत्राह तद्योगश्चेति। यथा ह्याग्नेयादीनां वाक्यतः कालसम्बन्धोऽवगम्यते नैवं प्रयाजादीनामिति श्रुतकालसम्बन्धानामेव कर्मणां झटित्युपस्थितिरिति भावः। अतः तद्योगस्योत्पत्तिवाक्यावगतत्वात्। तद्वाचित्वेन अवगतकालसम्बन्धविशिष्टवाचित्वेन। नन्वाग्नेयादिषु प्रातिपदिकमात्रप्रसिद्धिसम्भवेऽपि द्विवचनान्तस्य तस्य तत्र न प्रसिद्धत्वम्। तेषां षट्त्वेन बहुत्वात्। अतो द्विवचनान्ताप्रसिद्ध्या यजिपरतन्त्रमेवेदम्। न च यजिपारतन्त्र्येऽपि यजिनाऽऽग्नेयप्रयाजादिसर्वोक्त्या द्विवचनमन्यथैव नेयमिति वाच्यम्, तस्य फलमुखत्वेन तदानीं सोढव्यत्वादित्याशंक्याह न चेति। विद्वदिति। विद्वत्पदघटितयोः य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इति वाक्ययोर्द्वयेन सिद्धं यत् आग्नेयाग्नीषोमीयोपांशुयाजत्रिकाग्नैयैन्द्रदधिपयोयागत्रिकरूपसमुदायद्वयं तदभिप्रायेणेत्यर्थः। अयं भावः। दर्शपूर्णमासपदेनाग्नेयादीनां षण्णां पार्थक्येनोपादाने हि द्विवचनमनुपपन्नं स्यात्। षट्सु त्रयाणां त्रयाणामेकैकस्य समुदायस्य प्रसिद्धत्वात्तु तादृशसमुदायद्वयाभिप्रायेण द्विवचनं प्रयुज्यमानं नासङ्गतं भवतीति। कथं विद्वद्वाक्यद्वये समुदायद्वयावगतिरिति चेत् केचिदाहुः—यजत इति त्रयाणां यागानां तन्त्रेण ग्रहणात्सिद्ध्यन्समुदायः पौर्णमासीमिति पदेनानूद्यते। तद्गतैकत्ववाचि च तत्रैकवचनम्। एवममावास्यामित्यत्रापि। एनयोश्च समुदाययोर्दर्शपूर्णमासाभ्यामित्यत्र ग्रहणमिति। अन्ये तु पौर्णमास्यादिपदस्य

समुदायपरत्वे तस्य यजिसामानाधिकरण्यं नोपपद्यते, धातोस्समुदायार्थकत्वाभावात् । अतः पौर्णमास्यादिपदं समुदायिव्यक्तिपरमेव । एकवचनस्य च बहुत्वे लक्षणा। सा हि शक्यसम्बन्धः । स चेह स्वशक्यैकत्वाश्रयसमुदायघटकसमुदायिवृत्तित्वरूपो बहुत्वनिष्ठः । स्वमेकवचनम् । एवं संबन्धघटकतया सिद्धं समुदायमभिप्रेत्यैवैकवचनं फलवाक्ये द्विवचनं चोपात्तमिति वदन्ति । अत्र समुदायैकदेशस्य समुदायाभेदान्वयासम्भवेऽपि 'पञ्च ब्राह्मणाः परिषत्' इत्येवं कृत्स्नसमुदाय्युपादाने तत्र समुदायाभेदो भवितुमर्हति, समुदायस्य समुदाय्यनतिरिक्तत्वादिति प्राचामाशयः । सर्वथा सिद्धं समुदायद्वयमत्र ।

ननु यजि परतन्त्रत्वेऽपि द्विवचनानुपपत्तेरविशिष्टत्वाद्दर्शपूर्णमासपदतस्स्वरसतः कालसम्बन्धबलेन प्रथमजातषड्यागमात्रप्रतीतिबाधस्यायुक्तत्वाद्विनैव विद्वद्वाक्यं षण्णां फलसम्बन्धसिद्धिरिति चेदत्राहुः—न विद्वद्वाक्याभावे षण्णां फलसिद्धिः । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीत्येकवाक्यविहितत्वेनाग्नेयत्वेन च सजातीययोर्द्वयोरेव दर्शपूर्णमासपदेन ग्रहणसम्भवात् । न च कालस्य प्रयोगान्वयिगुणतया प्रयोगभेद एवात्र सिद्ध्यति, न कर्मभेद इति वाच्यम् , एकस्यां प्रयोगव्यक्तौ कालद्वयान्वयासम्भवेन प्रयोगव्यक्तिद्वयभानस्येव प्रयोगयोरपि द्वयोरेकव्यक्तिविषयकत्वासम्भवेन कर्मव्यक्तिद्वयभानस्यावश्यकत्वे द्वित्वविशिष्टयोस्तयोर्विध्यन्वयाद्विधेयकर्मभेदसिद्धेः स्वरसत्वात् । अत एतद्बाधेन षण्णां फलसम्बन्धसम्पादनं विद्ववाक्यफलमिति ।

इदं तु भाति—नात्र समुदायकल्पनमावश्यकम् , दर्शादिशब्दानां तत्तत्कालावच्छिन्नतया त्रयस्त्रय एव यागा अर्थः । एकवचनद्विवचनोपात्तैकत्वादिकं पुनः, वेदाः प्रमाणम् , शतं ब्राह्मणा इत्यादावेकत्वमिव प्रवृत्ति-

एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेतेत्याख्या-

---

निमित्तान्वयि प्रातिपदिकार्थविशेषणीभूतकालनिष्ठम्। युक्तश्च पौर्णमास्यादि-पदस्य कालशक्तत्वेन तद्गतैकत्वाविवक्षयैकवचनप्रयोगः । यथा समिधो यजति इडो यजतीत्यत्र बहुवचनप्रयोगस्तद्वत् । यदि तु प्रातिपदिकार्थ-गतसंख्यावाचित्वलोभेन बहुत्वलक्षकत्वमिष्यते, तथाऽपि स्वाश्रयकालसम्ब-न्धियागवृत्तित्वमेव बहुत्वे शक्यसम्बन्धः । स्वाश्रयसमुदायघटकवृत्तित्वस्य झडित्यग्रहणाच्च । नाप्यत्र विद्वद्वाक्यापेक्षा ; आग्नेयद्वयमात्रग्रहणेऽग्नीषो-मीयाद्युत्पत्तिवाक्येषु कालश्रवणस्य वैयर्थ्यप्रसङ्गात् । तस्य विद्वद्वाक्ये त्रिकग्रहणतात्पर्यग्राहकत्ववत् फलवाक्ये तद्ग्राहकत्वस्यैव साक्षात् सम्भवाच्च । एवं दर्शपूर्णमासपदस्याग्नेयद्वयमात्रपरत्वे, 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेते'ति वाक्यद्वयं व्यर्थम् । कालस्योत्पत्ति-वाक्य एव सिद्धत्वात् । सर्वपरत्वे त्वाग्नेयाग्नीषोमीयादिप्रधानानां स्व-स्वाङ्गैः सह पृथक्पृथक्करणप्रसक्तौ तद्वारणाय त्रयसम्बन्ध्येकैकप्रयोगविधा-यकतया सार्थकम् । अतः श्रुतकालानां षण्णां ग्रहणेन फलसम्बन्धोपप-त्तिः । विद्वद्वाक्यं पुनः ' य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनो-पाप्नोति तावदुपाप्नोति ; य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपा-प्नोति तावदुपाप्नोति।' (तै. सं. १. ६. ९) इति गुरुतरकर्मसमानफलकत्व-निश्चायनेन, जातेष्टौ यदष्टाकपालो भवतीत्यादिवाक्यमिवैकदेशस्यापि फलजननसामर्थ्यारोपेण, दर्शपूर्णमासयोः परमकाष्ठाभूतफलजनकत्वौचित्य-समर्पणेनार्थवादतया सार्थम्, नावश्यं समुदायद्वयानुवादार्थमिति ।

नन्वेवं यजेः प्रयाजादिसर्ववाचित्वस्योक्तत्वात्कथं धातुनाम्नोः सामाना-धिकरण्यमित्यत्राह एवं चेति । कालयोगरूपनिमित्तावगतौ द्विवचनोपपत्तौ च सत्योरित्यर्थः । नन्वेवं प्रतीतप्रयाजादिपरित्यागे स्वार्थत्यागस्तत्राह

त्तमपि तानेव वदति । न हि तदुक्तौ स्वार्थत्यागो भवति । राजसूयपदं त्वनिर्णीतार्थम् , अतस्तदाख्यातपरतन्त्रमेव । तच्चाविशेषात् सर्वेषु इष्टिपशुसोमेषु विद्यते तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति ।

न च राजसूयशब्दस्य राजा सूयते यत्रेति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात्तस्य च सोममभिषिणोतीति वाक्येन सोमयागेऽन्वगतत्वात्तद्वाचित्वमेव नेष्टिपशुवाचित्वमिति वाच्यम् । न ह्यभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति तद्वाक्यस्य

---

न हीति । तदुक्तौ आग्नेयादिमात्रोक्तौ । अयं भावः—यजेर्यागत्वरूपजातिवाचित्वेन तद्द्वारा सर्वा अपि व्यक्तय उपस्थाप्यन्त इति प्रयाजादय इव सोमपशुयागा अप्युपस्थाप्यन्ताम् । अथेह केषांचित्सन्निधिस्सोमाद्युपास्थितिं प्रतिबध्नातीति चेत् तर्हि स्ववाक्ये दर्शपूर्णमासपदश्रवणस्यापि यजितः प्रयाजाद्युपस्थितिप्रतिबन्धकत्वामित्युपस्थितेरेवाभावान्नोपस्थितत्यागरूपदोष इति । एवं दृष्टान्तमुपपाद्य प्रकृते तद्वैषम्यं दर्शयति राजेति । तच्च आख्यातं तु । अविशेषात् सन्निधानाविशेषात् । सर्वेषु सन्निहितेषु सर्वेषु । इष्टिपशुसोमेषु 'अनुमत्यै पुरोडाशमष्टाकपाल'मित्यनुमत्यादीष्टिषु आदित्यां मल्हां गर्भिणीमालभत' इत्यादिपशुयागेषु आग्निष्टोममग्र आहरतीति पवित्राख्याग्निष्टोमादिसोमयागेषु । इष्टिपशुसोमात्मकसर्ववाचित्वमुक्तमयुक्तमित्याशंक्याह न चेति । राजा सोमलता । सूयते अभिषूयते निष्पीड्यते । यत्र कर्मणि । व्युत्पत्त्या अर्थवदवयवकतया । सोमाभिषवनिमित्तत्वात् सोमाभिषवत्वदर्थकत्वात् । तस्य निमित्तस्य सोमाभिषवस्य । तदिति । सन्निहितसोमयागेत्यर्थः । यदितावदधिकारवाक्यशाब्दबोधात् प्रागेवायमर्थो ज्ञातुं शक्यते तदैतन्मात्रनामधेयं स्यात् । न च तत् सम्भवतीत्याह न हीति । आदिना पवित्रादिपरिग्रहः । प्रत्यक्षेण वाक्येन अभिषेचनीययागा-

ज्योतिष्टोमे सत्त्वात् । अतिदेशात्तत्सम्बन्धोऽवगत इति चेन्न । अतिदेशस्य फलसम्बन्धोत्तरकालीनत्वेन राजसूयेन स्वाराज्यकामो यजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् । अनेन हि वाक्येन फलसम्बन्धे बोधिते पश्चात्कथम्भावाकांक्षायामतिदेशकल्पनात् । अतस्ततः प्रागेव एतद्वाक्यार्थो वर्णनीयः । तथा चाभिषवस्यानवगतत्वाद्राजसूयपदमप्रसिद्धार्थमेव । अत एव राजसूयपदमव्युत्पन्नमश्वकर्णशब्दवदित्युक्तं सांप्रदायिकैः ।

---

व्युत्पत्तिवाक्येनेति तात्पर्यम् । एतेन कथम्भावाकांक्षायाः फलसम्बन्धोत्तरकालत्वेऽतिदेश इव प्रत्यक्षवाक्येऽपि विशेषाभावादिदमनुपपन्नमिति शङ्का परिहृता । भिन्नवाक्यश्रुतानां फलान्वयानन्तरं प्रवृत्तावप्युत्पत्तिवाक्यश्रुतानां ततः प्रागेवान्वयात् । तद्वाक्यशाब्दबोधाभावे तद्विहितस्य फलसम्बन्धकरणासम्भवादिति हृदयम् । अतिदेशस्यैतद्वाक्यार्थसापेक्षत्वं कथमित्यत्रातिदेशस्य कथम्भावाधीनत्वात् तस्य च साध्यविशेषविज्ञानानन्तरत्वादित्याह अनेनेति । हीति हेत्वर्थे, कल्पनाद्धेतोरित्यन्वयः । प्रसिद्ध्यर्थे वा । अतः अतिदेशस्य फलसम्बन्धोत्तरकालिककथम्भावाकांक्षोत्तरत्वेन फलसम्बन्धोत्तरत्वात् । ततः अतिदेशात् । अस्त्विदानीमप्रसिद्धार्थकत्वम् । अथ प्रसिद्धपदसमभिव्याहारेणार्थनिर्णयकाले कस्यावयवस्य कोऽर्थो निर्णीयते तत्राह अत एवेति । अश्वकर्णशब्दवदिति । वृक्षविशेषवाचिनोऽश्वकर्णशब्दस्यावयवार्थासम्भवादिति भावः । प्रथमतोऽवयवार्थाप्रतीतावप्यतिदेशात् पश्चादवयवार्थालोचनया राजसूयपदं व्युत्पन्नं छत्रिन्यायेन लिङ्गसमवायेन सर्वपरं च स्वीकर्तुं युक्तम् । एवं राजा क्षत्रियः सुनोति स्नाति यत्र, राज्ञा सूयते उत्पाद्यत इतिवेष्टिपशुसोमसामान्यपरतया व्युत्पत्तिरपि सुलभेति नाव्युत्पन्नत्वमित्याशयेनाह साम्प्रदायिकैरिति । एतेन 'अग्निहोत्रं जुहोतीत्यादावग्न्यादेरिवात्रावयवार्थस्य प्रमाणान्तरतः प्राप्तिसम्भवेन यदाग्नेय

एवं चाप्रसिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते । ते च तैस्तैः प्राकृतैर्धर्मैर्निराकांक्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम्, उभयाकांक्षाया अभावात् । न च प्रातिस्विकरूपैर्नैराकांक्ष्येऽपि न राजसूयत्वेन रूपेण नैराकांक्ष्यमिति वाच्यम् । आकांक्षाद्वये प्रमाणाभावात् ।

किं च प्रातिस्विकरूपैर्या कथंभावाकांक्षा साऽपि फलसम्बन्धोत्तरकालम् । स च राजसूयत्वेन न तु प्रातिस्विकरूपैः । राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथंभावाकांक्षाया विदेवनादिभिः

---

इत्यादाविव विध्यभावेऽप्यर्थस्य प्रतीयमानतया नाप्रसिद्धार्थकत्वमिति कथं यजिपारतन्त्र्यमिति निरस्तम्; उक्तरीत्यानेकव्युत्पत्तिसम्भवेनाज्ञातत्वाभावेऽपि सन्दिग्धत्वरूपाप्रसिद्धार्थकत्वस्यानपायादिति ।

एवमप्रसिद्धार्थकत्वमुपपाद्य यजिपारतन्त्र्यं निगमयन्नाकांक्षाविषयं दर्शयति एवं चेत्यादिना । एवं च व्युत्पत्तिविशेषनियामकप्रमाणाभावे सति । तैस्तैरिति ऐष्टिकैः प्रयाजादिभिः सौमिकैर्ग्रहादिभिः पाशुकैर्यूपादिभिरित्यर्थः । किं चात इत्यत्राह इतीति इत्यत इत्यर्थः । ननु राजसूयत्वस्य किञ्चिन्निरूपितविकृतितानवच्छेदकत्वाद्विशेषधर्मपुरस्कारिण्याऽऽकांक्षयैवातिदिश्यमानपदार्थान्वयो वाच्यः । न च तेन राजसूयत्वावच्छिन्नं कथं भावयेदित्याकांक्षा शाम्यत्वित्याशंक्याह न चेति । प्रमाणाभावादिति । कुत्राप्युभयरूपेण कथंभावाकांक्षाया अदर्शनादिति भावः । नन्वतिदेशाय विशेषरूपेणाकांक्षावत् राजसूयत्वेन फलकरणत्वात् तद्रूपेणाकांक्षाऽप्यत्राङ्गीकार्येत्यत्राह किं चेति । अयमर्थः—कथंभावाकांक्षा तावन्न फलसम्बन्धावगमात् प्राक्सम्भवति । अत्र च राजसूयत्वेन फलसम्बन्धो न प्रातिस्विकरूपेण, राजसूयेनेति श्रवणात् । तत्र च त्वया राजसूयत्वावच्छिन्नस्याकांक्षाङ्गीकारात्सामान्यधर्मावच्छिन्नं प्रत्यङ्गभूतानेवार्थान् गृहीत्वा सा शाम्यतीति विशेषाकांक्षायां प्रमाणाभावादतिदेश एव न सिद्ध्येत् । अतो यथाऽतिदेशो भवेत्स प्रकारो वक्तव्यः । स चायम्—इष्टिपशुसोमभावनानां

शान्तेरतिदेशकल्पनमेव न स्यात् । यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्बन्धविधायि वाक्यद्वयं भवेत्तदा युज्येतापि आकांक्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानां चाङ्गानां सम्बन्धः। न तु तदस्ति । तस्मात् प्राकृतैर्धर्मैर्नैराकांक्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत्—

सत्यम् । अत एव सांप्रदायिकैर्विदेवनादीनां सन्दंशो दर्शितः। राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते- 'राजसूयाय ह्येना उत्पु-

ह्युत्पत्तिवाक्येषु फलाकांक्षावत् कथंभावाकांक्षाऽप्यस्तीति विज्ञातम् । सा परमितिकर्तव्यताविशेषाश्रवणात् , फलविशेषाश्रवणात् फलाकांक्षेव यत्किञ्चिदितिकर्तव्यताकेति सामान्यतोऽन्वयेन शान्तकल्पाऽवतिष्ठते । पश्चाच्च फलविशेषे बुभुत्सिते राजसूयेन यजेत स्वाराज्यकाम इति वाक्यमुपतिष्ठते। इह यद्यपि राजसूयत्वेनैव फलसम्बन्धः, यद्यपि च राजसूयत्वं प्रतिनियतधर्मेभ्योऽतिरिक्तम् , अथापि तत्तद्विशेषरूपेण जातानामाकांक्षाणामत्र शान्तिर्वक्तव्या । न हि राजसूयस्य किं फलमिति सामान्यरूपावच्छिन्ना फलाकांक्षोत्पत्तिवाक्ये जाता । अतोऽनेन फलसम्बन्धबोधनेन तासु फलाकांक्षासु शान्तासु याः प्रागेवोत्पन्नाः कथंभावाकांक्षाः फलविशेषान्वयं यावदवसरालाभेन जोषं स्थितास्ता एव विषयग्रहणे व्याप्रियन्त इति युक्तम् । तासां च विशेषरूपत्वादतिदेशो नूनमवकल्पत इति राजसूयवाक्यशाब्दबोधानन्तरं कथंभावाकांक्षाऽतिदेशकरीति । एवं च सामान्याकांक्षाया अभावान्न प्रकरणं सम्भवतीत्याह तस्मादिति । आकांक्षाद्वयाभावात् विद्यमानयाऽप्याकांक्षयाऽतिदेशस्य कल्पितत्वादित्यर्थः । न प्रकरणमिति । अतः सन्निधेरेव वक्तव्यतयाऽभिषेचनीयस्यैव फलवतस्तदौचित्येन तदङ्गत्वमेव विदेवनादेरिति भावः ।

विकृतित्वेन स्वरसतः प्रकरणाभावमभ्युपगच्छति सत्यमिति । संदंशः विकृत्यनुवादेन विधीयमानयोर्धर्मयोरन्तराले विहितत्वम् । राज-

नाति' इत्येवमादयस्तन्मध्ये विदेवनादयः पठ्यन्ते । अतस्ते सर्वे राजसूयाङ्गं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रयाजाङ्गाभिक्रमणवत् । तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति । तत्सिद्धं प्रकरणस्य स्थानात् बलीयस्त्वमिति ।

देशसामान्यं स्थानम् । तच्च द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं चेति । यदाहुः—

---

सूयाय ह्वीति । अभिषेकार्थानां अपां 'हिरण्येनोत्पुनाति आहुत्यै हि पवित्राभ्यामुत्पुनाति व्यावृत्त्यै' इत्युत्पवनं विधाय श्रूयते 'स्वाहा राजसूयायेत्याह राजसूयाय ह्येना उत्पुनातीति । एवमादय इत्यादिना 'राजसूयेनेजानः सर्वमायुरेतीति सन्दंशकवाक्यान्तरपरिग्रहः । अत इति संदंशसत्त्वात् तद्ज्ञापितप्रकरणसत्त्वादिति वाऽर्थः । अभिक्रमणवत् वतिप्रत्ययोऽयम् । अत्र राजसूयाय ह्येना इति वाक्यं स्वाहेति वाक्यार्थवाद इति नात्र राजसूयानुवादेन किञ्चिद्विधीयते । आस्तामेतत् । राजसूयेनेजान इति वाक्यं (तै. ब्र १.७.७) विदेवनादिविधायकवाक्यप्राचीनतयैवोपलभ्यत इति न तत्प्रयुक्तः संदंशः । अतः सन्दंशनियामकमत्र मृग्यमिति सांप्रदायिकैरित्युक्तेरभिप्रायः स्यादिति ।

अथ स्थानतः स्थानं निरूपयति देशेति । देशसामान्यं अङ्गाङ्गित्वाभिमतयोर्देशैक्यं देशसाम्यं च । देशैक्यमनुष्ठानसादेश्यसन्निधिपाठस्थलयोः यथासंख्यपाठे तु तत्साम्यमिति । प्रकरणवदस्यापि द्वैविध्यमाह तच्चेति । पाठसादेश्यमिति । समानो देशो यस्य स सदेशस्तस्य भावः सादेश्यम् । पाठतः सादेश्यं पाठसादेश्यम् किञ्चित्पाठाधिकरणदेशसमानदेशपठितत्वम् । समानत्वमैक्यसाजात्यान्यतररूपम् । अनुष्ठानसादेश्यं किञ्चिदनुष्ठानदेशानुष्ठेयत्वम् । 'क्रमश्च देशसामान्या'दित्यधिकरणे यथासंख्यपाठोदाहरणमात्रविचारादेकमेवेति न मन्तव्यमित्याशयेनाह यदिति । विनियोगस्य कारणं देशसामान्यस्वरूपः क्रमः पाठसादेश्या-

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम् ॥ इति ।

स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम् । यथासंख्यपाठः सन्निधिपाठश्चेति । तत्र ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वादशकपालं निर्वपेदित्येवंक्रमविहितेष्टिषु इन्द्राग्नी रोचनादिव इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासंख्यपाठात् ।

---

नुष्ठानसादेश्यभेदाद्द्विधैवेष्ट इति कारिकार्थः । अधिकरणान्तरसिद्धत्वात्तावन्मात्रविचारस्तत्रेति भावः । क्रमविषयकारिकायाः कथं स्थानविषये प्रमाणत्वमित्यत्राह स्थानमिति । अनर्थान्तरमिति न भिन्नोऽर्थ इत्यर्थः । यद्वा इतीति इतिपदद्वयमपीत्यर्थः । अनर्थान्तरं परस्परभिन्नार्थराहितमिति । एकस्मिन् देशे उभयोः क्रमेण पाठः, क्रमेणानुष्ठानम् । एकस्य यः क्रमः प्राथम्यद्वितीयत्वादिः स एवान्यस्येति त्रिष्वपि क्रमशब्दार्थस्य प्रवेशात्क्रमशब्देन व्यवहार इति भावः । एवमेव स्थानशब्दस्य देशपरत्वात् देशसामान्यशब्दस्य तद्गतैक्यादिपरत्वात् सादेश्यपदस्य च समानदेशवृत्तित्वपरत्वात् यथासंख्यपाठादिपदस्य पाठपरत्वाच्च भिन्नार्थत्वेऽपि तात्पर्यत ऐकार्थ्यं सम्पादनीयम् । अपिना स्थानसमुच्चयः । यथासंख्यपाठः एकपाठसंख्यामनतिक्रम्यान्यस्य पाठः, किञ्चिद्विषयकपाठसंख्यासजातीयसंख्याकस्तदन्यविषयकपाठ इति यावत् । सन्निधिपाठ इति । सन्निधौ समीपे अव्यवधानेनेति यावत् । तथा च तद्बोधकवाक्येन सह तदसम्बन्ध्यर्थबोधकवाक्यकृतव्यवधानं विना पाठस्तत्सन्निधिपाठः । अतस्तत्सम्बन्धिवाक्यान्तरव्यवधानेऽपि सन्निधिपाठाविघातः । त्रिविधस्याप्युदाहरणं दर्शयति तत्रेत्यादिना । तत्र त्रिषु स्थानेषु । अस्य यथासंख्यपाठात्

प्रथमपठितमन्त्रस्य हि कैमर्थ्याकांक्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् ।

यानि तु वैकृतान्यङ्गानि प्राकृताङ्गानुवादेनाविहितानि संदंशापतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात् । तेषां हि कैमर्थ्याकांक्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बद्ध्यते, उपस्थितत्वात् ।

---

सन्निधिपाठात् अनुष्ठानसादेश्यादित्येभिः सम्बन्धः । ऐन्द्रेति । काम्येष्टिकाण्डे इत्यादिः । इन्द्रेति । काम्येष्टियाज्यानुवाक्याकाण्डपठितानामित्यादिः । प्रथमस्य प्रथममिति विशेष्यानिर्देशात्सामान्ये नपुंसकम् । प्रथमस्य द्वितीयम्, द्वितीयस्य प्रथममिति किं न स्यात्तत्राह प्रथमेति । समानदेशत्वात् उभयोरपि प्रथमस्थानगतत्वात् । न च द्वितीयस्यापि मन्त्रस्य प्रथमकर्माङ्गत्वमेव स्यात्, तदीयकैमर्थ्याकांक्षया काम्येष्टिकाण्डपर्यालोचनकाले प्रथमं प्रथमकर्मोपस्थितेरिति वाच्यम् । प्रथमस्य कर्मणः प्रथममन्त्रान्वयेनैव निराकांक्षतया द्वितीय एव कर्मणि बुद्धेरवतारादिति । इदं त्ववधेयम् । इन्द्राग्नी इत्यादिमन्त्राणामिन्द्राग्न्यादिदेवताप्रकाशकत्वेन लिङ्गादेव मन्त्रविनियोगः । क्रमस्तु तदपेक्षिते सामान्यसम्बन्धेप्रमाणम् । अतो लिङ्गाद्यसङ्कीर्णोदाहरणमन्यदेव मृग्यमिति । द्वितीयमुदाहरति यानि त्विति । वैकृतानि विकृतिमधिकृत्य पठितानि । औदुम्बरत्वादीनां प्राकृतयूपाद्यनुवादेन विहितानां प्रकरणग्राह्यत्वादाह प्राकृताङ्गानुवादेनाविहितानीति । तथा विकृतिसन्दष्टानां प्राकृताङ्गानुवादविहिताङ्गसन्दष्टानां च प्रकरणविनियोज्यत्वात् एकाङ्गाङ्गसन्दष्टानां चावान्तरप्रकरणेनाङ्गाङ्गत्वात् सन्दंशापतितानीति । ननु प्रकृतावुभयाकांक्षासत्त्वान्नान्यतराकांक्षामललभ्यविश्वजिदादिन्यायसिद्धस्वर्गादिफलकत्वं प्रयाजादावङ्गीकृतम् । इह तु विकृत्यर्थत्वस्यान्यतराकांक्षयैव वक्तव्यतया तदपेक्ष्य सर्वाभिलषितस्वर्गाद्यर्थत्वमेव युक्तमित्यत्राह तेषां हीति । परस्पराङ्गत्वप्रसक्तिर्नेत्याह फलवदिति ।

अत एव तेषु न विश्वजिन्न्यायावतारः । स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च ।

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्माः पठ्यन्ते । अतस्तेषां कैमर्थ्याकांक्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते । अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम् ।

न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यम् । अग्नीषोमीयस्य पशोः क्रयसन्निधौ तस्य पाठात् । न च क्रयसन्निधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम् । 'स एष द्विदैवत्यः

---

अत एवेति । उपस्थितत्वादेवेत्यर्थः । न पुनरुभयाकांक्षासत्त्वादिति भावः । ननु विश्वजिन्न्यायो माऽवतारीत् । रात्रिसत्रन्यायोऽवतरिष्यति । सन्निधानाधीनोपस्थित्यपेक्षया स्ववाक्यैकदेशार्थवादकृतोपस्थितेश्शीघ्रत्वादित्यत्राह स्वतन्त्रेति । अत्र स्वतन्त्रपदेनार्थवादिकस्य फलस्यैतन्मात्रासाधारणत्वेन कल्प्यत्वाद्विकृत्युपकारस्य च क्लृप्तत्वाद्विकृत्यपूर्वस्यैव भाव्यत्वेन सम्बन्ध उचित इति स्फोरितम् । तृतीयमुदाहरति पश्विति । पशुधर्माणां पशुमुपाकरोति, यूपे पशुं नियुञ्जीत, पशुं पर्यग्निकरोतीत्येवमादीनाम् । अग्नीषोमीयार्थत्वं यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति विहिताग्नीषोमीयार्थत्वम् । उपपादयति औपवसथ्य इति । ज्योतिष्टोमे चतुर्थमहरौपवसथ्यनामकम् । पशुः पशुयागः । तस्मिन्नेव दिन इति । तद्दिनकर्तव्यकर्मविधायकवाक्यमध्य एवेत्यर्थः । पठ्यन्त इति । अतो यथापाठं तत्रैवानुष्ठानादनुष्ठानसादेश्यमस्तीति भावः । अनुष्ठेयत्वेनेति । अपूर्वस्यानुष्ठेयत्वं पशुद्वारा । पशोरनुष्ठेयत्वेनोपस्थितं तदपूर्वमिति वाऽर्थः । तदर्थत्वं अपूर्वसाधनीभूताग्नीषोमीयपश्वर्थत्वम् । पाठविरोधेनानुष्ठानं न सम्भवतीत्यभिमन्यमानस्य, औपवसथ्येऽहन्यनुष्ठीयमानः पशुस्तत्रैव पठितव्य इत्यभिसन्धिमूलां 'पाठसादेश्येनैव निर्वाहे कृतमनुष्ठानसादेश्येने'ति शङ्कां निरस्यति न चेति । तदभिमानमेवाविष्कृत्य निरस्यति न चेति । द्विदैवत्य

पशुरौपवसथ्येऽहनि आलब्धव्यः' इति वचनात्तदनुपपत्तेः । न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम् । तस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वात् । अतः 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां युक्तम् ।

---

इति व्यासज्यवृत्तिनो देवतात्वस्यैकत्वेऽपि तदधिष्ठानसोमाग्निद्वित्वेन द्विदेवताकत्वम् । तदनुपपत्तेः क्रयसन्निधौ तदनुष्ठानस्य पाठकल्प्यत्वासम्भवात् । यथापाठस्तथा वचनादिकमप्यनुष्ठानक्रमनियामकम् । तत्र च पाठाद्वचनं बलीय इति भावः । एवं स्थानमध्येऽनुष्ठानसादेश्यात्पशुधर्माणां विनियोग इत्युक्तम् । संप्रति स्थानमेवेह न विनियोजकम् प्रबलस्य प्रकरणस्य सत्त्वादित्याशंक्य निषेधति न चेति । पशुधर्माणामिति । अनेन पशुरूपद्रव्योद्देशेन विधीयमानतयाऽऽरादुपकारित्वासम्भवेऽपि पश्वर्थत्वानपवदनेन तद्द्वारा ज्योतिष्टोमार्थत्वमाशंक्यत इति सूच्यते । ज्योतिष्टोमार्थत्वमेवेति । ज्योतिष्टोमस्यैव फलवतोऽग्नीषोमीयादिसर्वप्रधानत्वेन प्रकरणस्य ज्योतिष्टोमीयत्वात्तदङ्गत्वमेव युक्तम् । अन्यथा स्थानात् प्रयाजानुयाजादेरप्यङ्गाङ्गिभावः स्यादिति । अयोग्यत्वादिति । तस्य सोमद्रव्यकत्वेन पशुद्रव्यकत्वाभावात्सोममभिषुणोतीत्यादिविहिताभिषवादयस्सोमद्वारा तदर्था भवेयुः, न पशुधर्मा इति भावः । ननु साक्षाज्ज्योतिष्टोमे निवेशासम्भवेऽपि 'आनर्थक्यात्तदङ्गे'ष्विति न्यायेन तदङ्गाग्नीषोमीयादौ निवेशसम्भवात्प्रकरणं नोपेक्ष्यमित्यत्राह अत इति । बलाबलं बलं चाबलं च तयोः समाहारः । 'येषां च विरोधः शाश्वतिकः' इति सूत्रात् । आनर्थक्येन प्रतिहतस्वभावानां प्रबलदुर्बलप्रमाणानां बलाबलं विपरीतम् । प्रबलस्य दौर्बल्यम्, दुर्बलस्य च प्राबल्यमिति न्यायार्थः । प्रबलप्रमाणस्वीकारे यदि कचिदानर्थक्यम् तर्हि दुर्बलस्यैव ग्राह्यत्वम् । अत एव 'त्वं ह्यग्ने प्रथमो मनोता'

न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम् । अग्नीषोमीयकथम्भावाकांक्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात् । स हि सान्नाय्ययागप्रकृतिकः, उभयोः पशुप्रभवद्रव्यत्वसामान्यात् ।

---

इति मन्त्रस्याग्निप्रकाशकत्वरूपलिङ्गस्य दौर्बल्यम्, 'यद्यप्यन्यदेवत्यः पशुस्तथाप्याग्नेय्येव मनोता कार्ये' ति वाक्यस्य प्राबल्यंचाङ्गीकृत्याग्नीषोमीयार्थत्वमुच्यते । अन्यथा हि तद्वाक्यमनर्थकं भवति । आह च बलाबलाधिकरणे वार्तिककारः 'सर्वत्र दुर्बलस्यापि प्रमाणस्य बाधे यदि किञ्चिदनर्थकी भवति ततो विपरीतो बाधो योजयितव्यः । तदुक्तं व्रीहीन् प्रोक्षतीत्यत्र श्रुतिमुत्सृज्यापूर्वसाधनत्वग्रहण'मिति । अतः प्रकरणात्पशुधर्माणां ज्योतिष्टोमार्थत्वेऽयोग्यत्वादानर्थक्यपर्यालोचनायां दुर्बलप्रमाणं झटिति प्रवर्तमानमन्यत्र विनियोजयति । यत्र त्वानर्थक्यपरिहारकं प्रमाणं न सुवचम् । तत्र सत्यामप्यानर्थक्यप्रसक्तौ स्थितेन प्रमाणेन प्रधानसम्बन्धं परिकल्प्य पश्चात्तदङ्गेष्ववतारः कार्य इति तत्रैवानर्थक्यात्तदङ्गेष्विति न्याय इति भावः । ननु यत्र प्रधानप्रकरणेन सन्निहितग्रहणविषयेऽङ्गकथम्भावः प्रतिबध्यते तत्रैव सन्देशापेक्षा । इह तु पशुधर्माणां ज्योतिष्टोमान्वयानर्हत्वेन महाप्रकरणस्य प्रतिबन्धकस्य भावाद्विनाऽपि संदंशमवान्तरप्रकरणसंभव इति प्रकरणमेवाग्नीषोमीयार्थत्वगमकमस्त्वित्याशंक्य निषेधति न चेति । नन्वग्नीषोमीयस्य न काचित्प्रकृतिः सम्भवति । न तावत् पशुयागान्तरम् । तत्र कापि विशेषतो धर्मानाम्नानात् अत्रैव तदपेक्षितयूपादिधर्मोपदेशात् । नापि सोमदर्शपूर्णमासाः, श्रूयमाणाभिरेव बह्वीभिरितिकर्तव्यताभिश्शान्तिसम्भवात् विलक्षणद्रव्यकत्वाच्चेत्यत्राह स हीति । हीत्यनेन किञ्चित्प्रकृतिकत्वौचित्यं दर्शितम् । यूपादिसत्त्वेऽप्यावाहनासादनादिदृष्टार्थधर्माभावात्, सतोऽपि यूपादेः प्रधानविधितः प्रदेशान्तराम्नातत्वादक्लृप्तोपकारत्वाच्च प्रकृत्यपेक्षाऽस्तीति भावः । पशुप्रभवेति । सान्नाय्यस्य हि पशुःप्रभवःकारणम् । पशो-

तदुक्तम्— 'सान्नाय्यं वा तत्प्रभवत्वात्' इति ।

सान्नाय्यं दधिपयसी । तत्र पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात् । अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकांक्षत्वान्न पशुयागे धर्माणां प्रकरणं विनियोजकं, किं तु स्थानमेव । तदेवं निरूपितः संक्षेपतः स्थानविनियोगः ।

---

श्चेति । अग्नीषोमीयपशोश्छागत्वात्सान्नाय्यस्य च गोप्रभवत्वात्पशुविशेषपुरस्कारेण साजात्यासम्भवात्सामान्यतः पशुप्रभवेत्युक्तम् । नन्वग्नीषोमीयपुरोडाशयागप्रकृतिकत्वमस्तु । देवतासामान्यादित्यत्राह तदुक्तमिति । वेति पूर्वपक्षव्यावृत्तौ । पशोरेवेदानीं प्रकृतिविचाराद्बुद्धौ विपरिवर्तमानतया तदा पशुं निर्दिशति सूत्रकारः । द्रव्यसादृश्यं प्रबलमिति भावः ।

ननु किमिदं सान्नाय्यं नाम यत्र पशाविव पशुप्रभवत्वमुच्यते तत्राह सान्नाय्यमिति । तत्र दधिपयसोः । अस्य पय इत्यत्रान्वयः । पयोयागेति । ऐन्द्रं पयोऽमावास्यायामिति विहितपयोयागेत्यर्थः । न त्वैन्द्रं दध्यमावास्यायामिति विहितदधियागप्रकृतिक इति भावः । कुत इत्यत्राह साक्षादिति । पशोर्हि साक्षादेव पय उत्पद्यते, एवं पशुरपि । दधि तु पयोद्वारकमिति पयस्येव सादृश्यबुद्धिर्झटिति भवतीति भावः । एवमग्नीषोमीयस्य प्रकृतिसद्भावं तत्र वस्तुस्थितिं चाभिधाय प्रकृते प्रकरणाभावं स्थानैकविनियोज्यत्वं च निगमयति अत इति । सप्रकृतिकत्वादित्यर्थः । तद्धर्मैः पयोयागाङ्गैः । नेति प्रकरणमित्यनेनान्वयि । अत्र पशुधर्माणां पशुमुपाकरोतीत्यादिभिः श्रुत्यैव पश्वङ्गत्वावगमात्तत्रापूर्वसाधनत्वलक्षणाविषय एव स्थानोपयोग इति ध्येयम् । विभक्तेषु स्थानेषु प्रबलदुर्बलभावस्यानुक्तत्वादाह संक्षेपत इति । स चेत्थम् । अनुष्ठानसादेश्यात्पाठक्रमः प्रबलः । अनुष्ठानसादेश्यस्थले विधेर्विप्रकृष्टत्वादिह च तस्य सन्निधानाज्झटिति तस्योपस्थितेः । यथासंख्यपाठसान्निधिपाठयोश्चोत्तरः प्रबलः । प्रथमे ग्रन्थस्य भिन्नत्वादिह च तदैक्यादिति ।

तच्च समाख्यातः प्रबलम् । स्थानविनियोगे हि पदार्थयोर्देश-सामान्यलक्षणः सम्बन्धः प्रत्यक्षः । समाख्याविनियोगे तु सम्बन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । न च सा सम्बन्धवाचिका । यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात् । तथा हि । समाख्या सम्बन्धसामान्यवाचिका स्यात्, तद्विशेषवाचिका वा ।

---

अस्य स्वोत्तरप्रमाणप्राबल्यं निरूपयति तच्चेति । स्थानविनियोगे तत्स्थले, स्थानविनियोगविषययोरङ्गाङ्गित्वाभिमतयोरिति यावत् । लक्षणं स्वरूपम् । प्रत्यक्ष इति । वाक्यसमुदायश्रवणमात्रेणावगम्यत इत्यर्थः । समाख्याविनियोगे आध्वर्यवादिसमाख्याविनियोगस्थले । भिन्नदेश-त्वात् परस्परविप्रकर्षेण यथासंख्यपाठस्थल इव साजात्यस्याप्यभावेन पठि-तत्वात् । न हि अध्वर्युं वृणीत इति वाक्यस्य, अग्नीनन्वादधातीत्यादिवाक्यानां च सन्निकर्षोऽस्तीति । ननु यथा सादेश्यलक्षणसम्बन्धः प्रत्यक्षः स्वाश्रययो-रुभयाकांक्षामुत्थाप्य क्रमेण विनियोजकः, तथा समाख्ययाऽप्याध्वर्यवादिक-याऽध्वर्य्यादिसम्बन्धयन्वाधानादिवाचिन्याऽभिहितः सम्बन्धः स्वाश्रययोरुभया-कांक्षाकल्पनादिना विनियोजक इति न समाख्यातः प्राबल्यमित्याशङ्काया-माह न चेति । द्रव्यवाचकत्वेन सम्बन्धोपलक्षितपदार्थाभिधायकत्वेन । नन्वाध्वर्यवमित्युक्तेऽध्वर्युसम्बन्धीत्यर्थः प्रतीयते । तत्र च सम्बन्धिरूपार्थे सम्बन्धो विशेषणम् । अत एवाध्वर्यवत्वमित्युक्तेऽध्वर्युसम्बन्ध इत्यर्थावगमः । भावप्रत्ययो हि प्रातिपदिकावगतव्यक्तिविशेषणमभिधत्त इति संप्रतिपन्नम् । यथा गोत्वमित्यत्र जातिवाची प्रत्ययः । अत आध्वर्यवशब्दार्थे सम्बन्धो विशेषणम् । एवं विशेषणत्वे सिद्धे तन्मात्रस्य वाचित्वं युक्तम्, गवा-दिशब्दाद्गोत्वाद्युपस्थितौ व्याक्त्याक्षेपवदिहापि सम्बन्धिव्यक्त्याक्षेपसम्भवात् । अतः सम्बन्धवाचित्वमेव, न द्रव्यवाचित्वमिति शङ्कां सम्बन्धवाचित्वस्य विकल्पासहत्वोपपादनेन निरसितुमाह तथा हीति । सम्बन्धसामान्यवा-चिका संबन्धत्वावच्छिन्नवाचिका । संबन्धत्वं प्रकारताविशेष्यताभिन्नसं-सर्गताख्यविलक्षणविषयतावत्त्वम् । विशेषवाचिकेति । नन्वेवमनेक-

नाद्यः । तदुक्तौ प्रयोजनाभावात् । सर्वयौगिकशब्दानां पर्यायतापत्तेश्च । द्वितीयेऽवश्यं संबन्धिनौ वाच्यौ । तदन्तरेण संबन्धे विशे-

---

शक्तिकल्पनाप्रसङ्गः, विशेषाणां पृथक्पृथक्तदर्थत्वादिति चेदगत्या सह्यमिति । एवं विकल्पः कृतः, अथ दूषयति नाद्य इति । पक्ष इति शेषः । तदुक्तौ सम्बन्धसामान्योक्तौ । प्रयोजनाभावादिति । तदुक्तिसाध्यस्य कस्यचित्प्रयोजनस्याभावादित्यर्थः । द्रव्यवाचित्वे यद्यत्प्रयोजनं तद्बोधप्रवृत्त्यादिकं तस्य तदुक्तौ सत्यामभावप्रसङ्गादित्यप्यर्थः । अस्तु सम्बन्धशब्दस्य यत्प्रयोजनं तादृशमित्यत्राह सर्वेति । पर्यायत्वापत्तेः अभिन्नार्थकत्वप्रसङ्गात् । नन्वाध्वर्यवमित्यादौ प्रत्ययस्यैव सम्बन्धोऽर्थोऽस्तु ; अध्वर्यादिपदानां तु सिद्धान्त्यभिमत एवार्थ इत्यपि पूर्वपक्षाभिप्रायसम्भवात्कथमाध्वर्यवं हौत्रमित्यादिसर्वयौगिकशब्दानां पर्यायत्वापादनम् ? तेषां अध्वर्युसम्बन्धः होतृसम्बन्ध इत्येवमर्थभेदादिति चेन्न । अध्वर्य्वाद्यर्थमप्यपोह्य सम्बन्धमात्रवाचित्वमिति पक्षाभिप्रायेणैवमुक्तिसम्भवात् । अत एवोपरि 'सम्बन्धिनौ वाच्यौ' 'पाकं तु पचिरेवाहे'ति प्रकृत्यर्थभेदमपि दर्शयिष्यति । अथ वा सम्बन्धसामान्यपरत्वेऽध्वर्युसम्बन्धिनोऽपि यथाकथञ्चिद्धोतृसम्बन्धो वक्तुं शक्य इति तथोक्तम् । यद्वा यत्र प्रकृतेरैक्यम् , प्रत्ययः परं भिन्नः, तेषां सर्वेषां मिथः पर्यायत्वमापाद्यते । यथा, पाचकः, पचनं पक्वमित्यादिषु । अतो न कश्चिद्दोष इति । अस्तु तर्हि द्वितीयः पक्ष इत्यत्राह द्वितीय इति । सम्बन्धिनावितिे । सम्बन्धो हि द्विष्ठ इति भावः । आवश्यकत्वमेव दर्शयति तदिति । तत् सम्बन्धिद्वयवाचित्वम् । सम्बन्धे विशेषाभावात् सम्बन्धे यो विशेषो वाच्यतयाऽभिमतस्तस्योक्त्यसम्भवात् । एतत्पदार्थसम्बन्धः , तत्पदार्थसम्बन्ध इत्येव हि सम्बन्धविशेषो वक्तव्यः । न च तस्य तस्य पदार्थस्यानुक्तौ स विशेषो घटत इति भावः । ननु सम्बन्धे तत्पदार्थो-

षाभावात् । तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च । अतश्चावश्यं सम्बन्धिवाचकत्वं समाख्याया वक्तव्यम् । तथा च न सम्बन्धवाचकत्वं;संबन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसम्भवे तत्र शक्तिकल्पने गौरवात् । यथाहुः—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाचित्वं सम्भवत्यतिगौरवात् ॥ इति

---

यत्वादिकमुपलक्षणम् । अतो न तस्य वाच्यत्वमित्यत्राह तदिति । तत्प्रतिपत्तिं सम्बन्धिपदार्थप्रतीतिम् । तदिति सम्बन्धविशेषेत्यर्थः । तथा च पदार्थस्य प्रत्येतव्यत्वान्नोपलक्षणत्वम् । यस्य हि प्रतीतिर्नापेक्ष्यते तस्योपलक्षणत्वम् । सम्बन्धि तु सम्बन्धज्ञानाय ज्ञातव्यमिति नैवमिति । न च समवायः संयोग इत्यादिसम्बन्धविशेषोपस्थितौ न पदार्थोपस्थित्यपेक्षेति वाच्यम्, तादृशोपस्थितेरपि सामान्योपस्थितिरूपत्वात् । एवं तत्प्रतिपत्तिमित्यादिनाऽऽध्वर्यवादिशब्देषु श्रूयमाणेषु सम्बन्धिनं विहाय सम्बन्धमात्रस्यानुभवो लोके नास्तीत्यप्यर्थ उक्तः । एवं द्रव्यवाचित्वं साधितम् । अथ सम्बन्धवाचित्वं निषेधति तथा चेति । सम्बन्धवाचित्वे च सतीत्यर्थः । ननु सम्बन्धिद्रव्यप्रतीतौ सम्बन्धोऽपि कथं प्रतीयते । तत्राह वाक्यार्थेति । वाक्यार्थप्रतिपत्तिर्हि नामैकस्मिन् पदार्थे परपदार्थसम्बन्धावगाहि ज्ञानम् । तत्र च ज्ञाने विषयभूतः सम्बन्धो न कस्यचित्पदस्यार्थः । अथापि पदतस्तत्तदर्थोपस्थितौ सत्यां तत्तदर्थवाचकपदसमभिव्याहारबलादेव स प्रतीयते । तद्वदिहापि सम्बन्धः प्रकृतिप्रत्ययसमभिव्याहारादेव प्रतीयतेति भावः । इहारुणाधिकरणवार्तिकं दर्शयति यथेत्यादिना । सर्वत्र यौगिकशब्दवत्सु सर्वेषु वाक्येषु, सर्वैरिति यावत् । यौगिकैरिति । रूढत्वे विशिष्टैकार्थवाचित्वाय सम्बन्धस्यापि शक्येऽन्तर्भावः स्यादपि । न चात्र रूढत्वं युक्तम्; क्लृप्तावयवयोगेनैवोपपत्तौ रूढिकल्पनाऽयोगस्य प्रोक्षणीन्यायसिद्धत्वादिति भावः । द्रव्यं सम्बन्धिद्वयम् । उदाहरणविशेषे तद्दर्शकं श्लोकान्तरमुपा-

तथा

पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्य चित् ॥ इति ।

तथा च समाख्या न सम्बन्धवाचिका । होतृचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसम्बन्धवाचि-

---

दृष्टे तथेति । पाकमित्यादि । पाचक इत्युक्ते हि पाककृत्याश्रय इत्यर्थः प्रतीयते । तत्र पाकं विक्लित्त्यनुकूलव्यापारं, यः पचतीत्यत्र तद्वाचित्वेनावधारितः स एव पचिधातुरभिधत्ते । कृत्याश्रयं च तदुत्तरवर्ती अकप्रत्यय आह । यस्तु पाकविषयककृत्याश्रय इति विशिष्ट एकार्थः प्रतीयते, स न कस्यचिदर्थः प्रत्येकशक्त्यैवार्थोपस्थितौ विषयविषयिभावसम्बन्धस्य संसर्गमर्यादयैव भानसम्भवादित्यर्थः । अक इति । यद्यपि ण्वुलेव प्रत्ययः । अथापि तद्गतमेव प्रत्ययत्वमादेशभूतेऽकेऽप्युक्तम् । एवं च पाचकादिवद्यौगिकत्वाविशेषादाध्वर्यवादिः समाख्याऽपि तादृगेव । न ह्यध्वर्योरिदमिति विग्रहे सम्बन्धवाचित्वनियामकं किञ्चिदस्ति । इदमः सर्वनाम्नो बुद्धिस्थपदार्थमात्रवाचित्वात्तत्र भवतः प्रत्ययस्यापि तदर्थकत्वात् । यत्तु आध्वर्यवमित्यादौ सम्बन्धः प्रतीयत इति ; तत् अध्वर्युरूपार्थस्य विशेषणस्य तेषां पदार्थानां चाश्रयाश्रयिभावाभावेनानर्थक्यतदङ्गन्यायेन सम्बन्धाभिधानं भावप्रत्ययेनेत्यङ्गीकारादुपपद्यत इति न समाख्या सम्बन्धवाचिकेत्युपसंहरति तथा चेति । सम्बन्धवाचित्वे गौरवे सतीत्यर्थः । नन्वेवं तद्धितवृत्तपदस्थले वाक्यार्थप्रतिपत्तिन्यायेन सम्बन्धलाभेऽपि समासवृत्तस्थले तद्वाचित्वमावश्यकम् । न हि तत्र होतुश्चमसे तेन सम्बन्धेनान्वयः सम्भवति । नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् अतो होतृसम्बन्धिचमस इत्यर्थो वाच्य एवेत्यत्राह होत्रिति । निषादेति । अयं भावः—एतया निषादस्थपतिं याजयेदित्यत्र पूर्वपक्षिसम्मतस्य निषादानां स्थपतिरिति तत्पुरुषस्याङ्गीकारे निषादपदस्य निषादसम्बन्धिनि

का । नपि वाक्यवत्तद्बोधिका, तस्याः पदत्वेनाप्रमाणत्वात् । पौरोडाशिकमित्यादिसमाख्यास्त्वतिदुर्बलाः । लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात् ।

---

लक्षणेति दोष उद्भावितः । यदि षष्ठ्यर्थः शक्त्यैवोच्येत । नैव लक्षणा प्रसजेत्; नैव च तद्दोषपरिहाराय निषादश्चासौ स्थपतिश्चेति कर्मधारयं सिद्धान्ती स्वीकुर्यात् । अतो ज्ञायते निषादस्थपतिशब्दो न षष्ठ्यर्थसम्बन्धवाचीति । तद्वदेव होतृचमसादिपदमपीति । ननु यथा करणतादिवाचकपदाभावेऽपि 'यस्य पर्णमयी जुहूर्भवतीत्यादौ जुह्वाद्युद्देशेन विधीयमानस्य पर्णतादेर्वाक्यमेवाङ्गाङ्गिभावे प्रमाणम्, तथैवेहापि स्यादिति शङ्कां परिहरति नापीति । वाक्यवत् वाक्यमिव । तद्बोधिका अङ्गाङ्गिभावसम्बन्धबोधिका । तस्याः समाख्यायाः । अप्रमाणत्वादिति अङ्गाङ्गिभावप्रमाजनकत्वासम्भवादित्यर्थः । उद्देश्यविधेयवाचकपृथक्पदद्वयरूपवाक्यसद्भावे हि तद्बोधः । न पुनरेकपदस्थले । अन्यथैकप्रसरताभङ्गापत्तेरिति भावः । एतेन निषादस्थपतिपदस्यैव सम्बन्धबोधकत्वे सति कथं तदपलाप इति निरस्तम् । उक्तरीत्याऽस्य वाक्यस्यान्यार्थकत्वात् । लौकिकसमाख्यासु ततोऽपि दौर्बल्यं दर्शयति पौरोडाशिकमिति । अतिदुर्बला इति । स्थानाद्वैदिकसमाख्या दुर्बला: । लौकिक्यस्त्वतिदुर्बलाः । झडिति पदार्थसम्बन्धकल्पिका अपि न भवन्तीत्यर्थः । हेतुमाह पुरुषेति । पुरुषस्य प्रत्ययोऽर्थज्ञानं तत्सापेक्षत्वात् तदधीनोत्पत्तिकत्वात् । यद्वा पुरुषे प्रत्ययो विश्वास आप्तत्वनिश्चयस्तत्सापेक्षत्वात् स्वयमर्थयोः सम्बन्धबोधने तदधीनप्रवृत्तिकत्वादित्यर्थः । वैदिक्यो हि समाख्या नित्यनिर्दोषवेदान्तर्गता अविश्वासकारणाभावाज्झडिति सम्बद्धार्थका निश्चीयन्ते । लौकिक्यः पुनः पुरुषाधीनोत्पत्तिकाः । अतो यावद्रचयितुरर्थज्ञानं प्रमाणान्तराधीनं प्रमितिरूपमिति न नि-

काण्डगोचरत्वेन तत्तत्पदार्थागोचरत्वाच्च । काण्डवाचकत्वमपि न काण्डत्वेन किं तु पौरोडाशिकत्वादिनैव । न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद्वदति, किं तर्हि एकहायनीत्वेनैव ।

---

श्रीयते तावन्न सम्बन्धावधारणामिति संबन्धप्रतीतिर्विलम्बितेति भावः । ननु सम्बन्धनिश्चयार्थं नाप्तत्वानिश्चयोऽपेक्षितः । अपि तु तद्वास्तवत्वनिश्चयार्थमेव । वस्तुतो लौकिकत्वेऽप्यासामनादित्वान्न पुरुषप्रत्ययापेक्षेत्यतो हेत्वन्तरमाह काण्डेति । काण्डगोचरत्वेन वाक्यसमुदायविशेषः काण्डपदार्थः तद्वाचकत्वेन । तत्पदार्थागोचरत्वात् आध्वर्यवादिसमाख्याया इव काण्डप्रतिपाद्यार्थावाचकत्वात् । एवं च काण्डोपस्थितौ, सम्बन्धे च तस्य सामान्यतोऽवगते, तस्य प्रतिपाद्यार्थमद्वारीकृत्य दुर्वचतयाऽर्थेऽपि सम्बन्धः कल्पयितव्य इति समाख्यान्तरवैषम्यमिति भावः । किञ्चात्र पुरोडाशकाण्ड इत्युक्ते सम्बन्धोपस्थितये यावान् विलम्बस्तावानेवेति न, किन्तु ततोऽप्यधिक इत्याह काण्डेति । न काण्डत्वेनेति । यद्यपि सर्वनाम्नो बुद्धिविषयत्वोपलक्षितधर्मावच्छिन्नपरतया प्रकृते च सर्वनामार्थे विहितस्य प्रत्ययस्य काण्डत्वेन तद्वाचित्वमस्ति ; अथापि काण्डशब्दादिव न झडिति तदवगमः, सर्वनाम्नः साधारणत्वादित्यत्र तात्पर्यम् । पौरोडाशिकत्वादिनेति पौरोडाशिकत्वं न शक्यतावच्छेदकम् । अपि तु यौगिकत्वात्पुरोडाशत्वं काण्डत्वं चैव, शक्त्यन्तरास्वीकारात् । अतो बुद्ध्योपलक्षितकाण्डत्वरूपधर्मवत्त्वेनेत्यर्थे तात्पर्यम् । एकहायनीशब्दः अरुणयैकहायन्या सोमं क्रीणातीत्यत्रत्यः । द्रव्यवाचकोऽपि गोरूपद्रव्यवाचकोऽपि । 'अनेकमन्यपदार्थे' इति स्मृतिबलादपि न गोत्वावच्छिन्नस्य तद्वाच्यत्वं सम्भवति, तथा सत्येकहायनरूपविशेषणपरित्यागापत्तेरित्येवकारेण सूच्यते । 'तथा च सम्बन्धिवाचित्वावश्यकत्वेन सम्बन्धवाचित्वकल्पने गौरवात्, होतृचमस इत्यादावपि सम्बन्धस्य लक्षणयैव प्रतीयमानत्वात्समाख्याविशेषस्य पदार्थवाचित्वस्याप्यभावाच्च

स्थानविनियोगे तु पदार्थयोर्विशेषपुरस्कारेणैव सम्बन्धः प्रत्यक्षप्रमाणप्रतिपन्नः । अतश्च समाख्यामुपलभ्य नूनमनयोः पदार्थयोस्सम्बन्धोऽस्तीति यावत्कल्प्यते तावत् प्रत्यक्षप्रतिपन्नेन सम्बन्धेन परस्परमाकांक्षा, तदभावे च सम्बन्धानुपपत्तेः । कल्पितसम्बन्धेन च यावदितरत्राकांक्षादिकल्पना तावदन्यत्राकांक्षया वाक्यादिकल्पनया विनियोगः क्रियते इति सिद्धं स्थानस्य समाख्यातः प्राबल्यम् ।

---

सिद्धं समाख्यासामान्यस्य सम्बन्धावाचकत्वमिति न समाख्याविनियोगे सम्बन्धः प्रत्यक्ष' इतीहोपसंहारोऽनुसन्धेयः ।

इतरत्र समाख्यास्थले । अन्यत्र स्थानस्थले । ननु समाख्यायाः सम्बन्धकल्पकत्वेऽप्यध्वर्योः पदार्थानां च कर्तृकार्यभावरूपसम्बन्धकल्पकत्वमेव, न सादेश्यरूपस्थानकल्पकत्वमिति चेत्—उच्यते । समाख्यया पदार्थद्वयोपस्थितिमात्रेणाध्वर्य्वादिना किं कर्तव्यमिति कार्याकांक्षा, पदार्थानां च कः कर्तेति कर्त्राकांक्षा च न कल्पयितुं शक्यते । न हि पुरुषस्य पदार्थापेक्षा कार्यत्वेनैव, पदार्थानां च पुरुषापेक्षा कर्तृत्वेनैवेति नियमोऽस्ति । अतोऽध्वर्युं वृणीत इति वरणसंस्कार्यत्वेनाध्वर्युविधायकवाक्यार्थे तत्तत्पदार्थविधायकवाक्यार्थे चालोचितेसत्येवाकांक्षाकल्पना सम्भवतीति युगपदेकबुद्धिरूपदेशस्थित्यावश्यकतया सादेश्यकल्पनं सिद्धमिति । यद्यप्यध्वर्योः कर्माध्वर्यवमिति विग्रहे क्रियाकर्तृभावरूपविशेषः क्वचिदवगम्येत, अथापि तत्राप्याध्वर्यवमित्यादिनिर्देशान्यथानुपपत्त्याऽऽकांक्षादिकल्पनामपेक्ष्य सिद्धाकांक्षाकतत्तत्पदार्थप्रापकवाक्योपस्थितिसम्भवात् कर्मविशेषबोधाय तदुपस्थित्यावश्यकतया च तद्द्वारा तद्गताकांक्षादिपरामर्शेन श्रुतिकल्पनमेव युक्तम् । एवं च सति यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति वाक्यद्वयस्यैकवाक्यताकल्पकयत्तत्पदमात्रकल्पनाल्लाघवमपि । अतः सिद्धं सादेश्यकल्पकत्वम् ।

अत एव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं पाठसादेश्यान्न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति।

समाख्या यौगिकः शब्दः । सा च द्विविधा वैदिकी लौकिकी चेति । तत्र होतुः चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समाख्यया ।

---

वस्तुतस्तु न सादेश्यमेव स्थानम् । विकृतेः प्राकृतग्रहणविषये स्थानाभावप्रसङ्गात् । न हि पाठसादेश्यादौ किमपि तत्रास्ति । अतः सादेश्येनान्यथा वा जाता प्रकरणकल्पनानुकूलोपस्थितिरेव स्थानम् । सा च समाख्याधीनेति सिद्धं स्थानकल्पकत्वमिति । स्थानप्राबल्यफलमाह अत एवेति । शुन्धनमन्त्रः शुन्धध्वं दैव्याय कर्मण इति मन्त्रः । पात्राङ्गम् पात्रशोधनाङ्गम् । पाठसादेश्यादिति इध्माबर्हिःसम्पादनमुष्टिनिर्वापविध्योर्मध्यदेशस्थः सान्नाय्यपात्रशुन्धनविधिः । तथा शुन्धनमन्त्रोऽपि तत्तन्मन्त्रमध्यगत इति यथासंख्यपाठादित्यर्थः । न चैवं समाख्याया वैयर्थ्यं शंक्यम् । एतदतिरिक्तग्रहणग्राहकत्वेन तदुपपत्तेरिति ।

अन्तिमं समाख्याप्रमाणं निरूपयति समाख्येति । यौगिक इति अर्थोपस्थापकविभिन्नावयवघटित इत्यर्थः । न च घटमिति सुबन्ते घटपदाम्पदघटितेऽतिव्याप्तिरिति वाच्यम् प्रकृतिभूतशब्दत्वस्यापि विवक्षितत्वात् । स्थानवदस्या द्वैविध्यं दर्शयति सा चेति । उदाहरति तत्रेति । तत्र वैदिकलौकिकसमाख्ययोः । अस्य वैदिक्या समाख्ययेत्यादावन्वयः । भक्षणार्थकस्य चमेरौणादिकेऽसच्प्रत्यये निष्पन्नश्चमसशब्दो यस्मिन्नधिकरणे सोमादि भक्ष्यते तत्पात्रवाची । तस्य होत्रा सम्बन्धस्तद्वृत्तिपदार्थभक्षकत्वरूपः । एवं होतुश्चमसाङ्गत्वे कर्तृतया भक्षणाङ्गत्वं पर्यवस्यति । अतश्चमसभक्षणेत्युक्तम् । चमसपदार्थैकदेशे धात्वर्थे भक्षणे होतुरन्वयमभिप्रेत्य वा ।

अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिकश्च आध्वर्यवमितिसमाख्ययेति संक्षेपः ।

तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि । एत-

---

लौकिकीमुदाहरति अध्वर्योरिति । तत्तत्पदार्थाङ्गत्वम् अग्नीनन्वादधाती-त्येवमादिविहितपदार्थाङ्गत्वम् । आध्वर्यवेति । ननु नेयं लौकिकी यथाह वार्तिककारः 'आध्वर्य्वादिसमाख्यानां वेद एव प्रयोग इति न लौकिकत्वचोद्यं क्रियत' इतीति चेत् तथा सति नोदाहरणमादर्तव्यमिति न्यायेनोदाहरणान्तरं गृह्यताम् । नन्वसिद्धः समाख्यया विनियोगः । न हि पदार्थयोरुपस्थितयोः सम्बन्धे च कल्पितेऽङ्गाङ्गिभावो बोधनीय इति निर्बन्धोऽस्ति । न हि पाचक इति समाख्यया पाकस्य कर्तुश्चाङ्गाङ्गिभावोऽस्ति । उच्यते । पाचक इत्यत्र पाककर्त्रोः प्राप्तत्वेन विधिव्यापाराभावान्नाङ्गाङ्गिभावः । न तथाऽध्वर्योः पदार्थानां च सम्बन्धो विधिं विना प्राप्तः । न हि विध्यभावे स प्रवर्ति-ष्यत इति । तत्र समाख्यया पदार्थद्वारा तत्प्रापकवाक्ययोर्हृदयमागतयोस्त-त्राकांक्षामधिगत्य श्रुतिपर्यन्तकल्पनाद्भवति समाख्याया विनियोजकत्वमिति । एतदवचनादाह संक्षेप इति ।

विनियोजकप्रमाणनिरूपणमुपसंहरति तदिति । तत् उक्तार्थस्याबा-धितत्वात् यद्वा विनियोगविधिसहकारित्वात् । एवम् एतयाऽऽनुपूर्व्या । उक्तेषु प्रमाणेषु स्वसमनन्तरपूर्वतः स्वस्य दौर्बल्यवत् व्यन्तरितत्र्यन्तरितादेरपि पूर्वतो दौर्बल्यम् ; यत्रोत्तरस्य प्रत्यक्षत्वं पूर्वस्य चानुमानिकत्वम् तत्रोत्तरस्य प्राबल्यम् ; यत्र पूर्वप्रमाणपरिग्रहे क्वचिदानर्थक्यं प्रसजति तत्रोत्तरस्य प्रा-बल्यम् ; एवं प्रबलप्रमाणस्य सामान्यविषयकत्वे दुर्बलस्य च विशेषविषय-कत्वे दुर्बलप्रमाणाबाधेन प्रबलस्य सङ्कोच इत्याद्यनिरूपणादाह संक्षेपत इति ।

एवं मानान्यभिहितानि । अथ तैरङ्गत्वेन मेयानर्थान् विशेषतो व्युत्पाद्य तेषां प्रधानोपकाररूपप्रयोजने भेदज्ञापनेन विनियोगविधेः प्रयोजन-

तत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि । तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति ।

तत्र सिद्धरूपाणि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि । गुणकर्माणि प्रधानकर्माणि चेति ।

---

वदर्थावबोधित्वं विशदयितुमाहैतत्सहेति । ननु विनियोगविधिनेति कथमेकवचननिर्देशः, तत्तत्प्रमेयमादाय अनेन प्रधानोपकारं भावयेत् एतेन तं भावयेदिति प्रत्येकतत्कल्पनेन तद्बहुत्वावश्यंभावादिति शङ्कापरिहाराय विनियोगविध्याकारं दर्शयति समिदिति । अयं भावः—अङ्गबहुत्वेऽपि प्रधानस्यैकफलसाधनत्वेन विहितस्यैक एव फलजननसामर्थ्याद्व्यधरूप उपकारोपेक्षित इति तयाऽपेक्षया युगपत्सकलैकपोतन्यायेन सर्वाङ्गग्रहणेन 'समिधो यजति तनूनपातं यजति....' इत्थं दर्शपूर्णमासाभ्यां यजेतेति निष्पादितेन महावाक्येन विनियोगकरणात्तदैक्यमिति । इत्येवमिति । कर्मान्तरविनियोगविधेरेतदाकारकत्वाभावात् सजातीयाकारग्रहणप्रदर्शनाय एवं शब्दः । इदं त्ववधेयम्—दुर्बलप्रमाणेन यदा विनियोगः क्रियते तदैव प्रबलेनापि स इति विलम्बस्यायुक्तत्वात्प्रमाणभेदेन विनियोगविधिभेद आवश्यक इति । विभजते तानीति । सिद्धरूपाणि क्रियाभिन्नात्मकानि । तत्र सिद्धरूपक्रियारूपयोः । संख्यादीत्यादिना रूपादिपरिग्रहः । तत्र जातिः व्रीहिभिर्यजेतेति । द्रव्यं, पिङ्गाक्ष्यैकहायन्या क्रीणातीति । संख्या पशुना यजेतेति आदिपदग्राह्यं अरुणया क्रीणातीत्येवम् । दृष्टार्थानीति । द्रव्यस्य क्रियासाधनत्वाज्जात्यादेश्च परिच्छेदमुखेन तथात्वादिति भावः । एवकारोऽयोगव्यवच्छेदार्थः । क्रियारूपेष्विव केषांचित् दृष्टार्थत्वमिति नेति भावः । सिद्धरूपाणां जात्यादिभेदेन बाहुविध्यं दर्शितम् । क्रियारूपाणि विभजते क्रियेति । गुणकर्माणि गुणभूतानि कर्माणि ; प्रधानभूतानि कर्माणि प्रधानक-

एतान्येव सन्निपत्योपकारकाण्यारादुपकारकाणीति चोच्यन्ते ।

---

र्माणि । परस्परव्यावृत्तये गुणप्रधानशब्दौ । सिद्धव्यावृत्तये कर्मशब्दः । एषामेव द्विविधानां शास्त्रे प्रसिद्धं नाम क्रमेण दर्शयति एतान्येवेति । नन्वङ्गसामान्यमेव सन्निपत्योपकारकारादुपकारकभेदेन द्विविधं वक्तव्यम् । अत एव सन्निपत्योपकारके द्रव्यादिकमप्यन्तर्भाव्य परिभाषाग्रन्थः । 'अङ्गेषु सन्निपत्योपकारकाणां प्रधानोत्पत्त्यपूर्व उपयोगः । आरादुपकारकाणां परमापूर्वे' इत्येवमपूर्वाधिकरणादावभिधानाच्छास्त्रेऽपि सिद्धरूपस्यापि सन्निपत्योपकारकत्वसम्मतिर्दृश्यते , तत्र तद्ग्रहणाभावे तस्याङ्गस्यापूर्वार्थत्वानुक्त्या न्यूनताप्रसङ्गादिति चेत्–उच्यते; न्यायरत्नमालायां सिद्धवस्तुपृथक्कारेण क्रियायामेवैवं विभागविधानात्तदनुसारेणेदम् । ननु किमत्र लक्षणम्, न तावत् गुणकर्मपदोपात्तमङ्गत्वविशिष्टं कर्मत्वम् प्रधानकर्मपदोपात्तमङ्गित्वविशिष्टं कर्मत्वं च क्रमेण , लक्षणद्वयस्यापि दर्शादिषु फलवत्सु कर्मसु सत्त्वेनातिव्याप्तेः तेषु फलनिरूपिताङ्गत्वस्य प्रयाजादिनिरूपिताङ्गित्वस्य च सत्त्वात् । परस्परातिप्रसक्तत्वाच्च , प्रयाजादिकं हि प्रधानकर्म दर्शाङ्गत्वात् गुणकर्मापि, सन्निपत्योपकारकमपि स्वेतिकर्तव्यतां प्रति प्रधानकर्मापीति। न च स्वोत्पत्तिविधिबोधिताङ्गत्वविशिष्टं कर्म गुणकर्म ; अतथाविधं प्रधानकर्म । सम्भवति चेदं व्रीहीनवहन्तीति अवहननविधायकवाक्येनैव व्रीह्युद्देशेन विनियोगकरणात् समिधो यजतीत्यादौ समिद्यागादेरङ्गत्वस्यानुक्तत्वाच्चेति वाच्यम् ; पौर्णमासीमिष्ट्वा वैमृधमनुनिर्वपति 'त्रिवृदग्निष्टुदग्निष्टोम' इत्यादौ वैमृधेष्ट्यग्निष्टोमस्तोत्रादेरारादुपकारकस्योत्पत्तिविधिर्विनियोगविधिश्चैक एवेति तत्र प्रथमलक्षणातिव्याप्तेः द्वितीयलक्षणाव्याप्तेश्च । न च सन्निपत्य सम्बद्धचाऽऽश्रित्योपकारकम् , आरात् दूरात् अनाश्रित्योपकारकमिति व्युत्पत्त्या स्वाश्रयगतोपकारजनकत्वं प्रथमलक्षणम् स्वानाश्रयगतोपकारजनकत्वं द्वितीयस्य । व्रीहीनवहन्तीति विहितमवहननं व्रीह्याश्रितं वैतुष्यजनकम्, समिद्यागादिकं तु

तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् ।

---

न दर्शयागाद्याश्रितमिति वाच्यम्, अवहननस्याभिघातानुकूलव्यापारस्य मुसलगतत्वेन व्रीह्याश्रितत्वासम्भवात् । अथ स्वविषयगतोपकारजनकत्वं सन्निपत्योपकारकत्वमिति चेत् किमिदं विषयत्वम् ? कर्मत्वं विषयत्वम् । तथा च स्वकर्मकारकगतोपकारजनकं कर्म सन्निपत्योपकारकमिति चेत् तर्हि कर्त्रादिसंस्कारेऽव्याप्तिः । न च स्वकारकवृत्त्युपकारजनकत्वं तत् ; आरादुपकारकेऽतिव्याप्तिः प्रयाजादेः कर्तृकारकगतापूर्वरूपोपकारजनकत्वादिति अतो लक्षणं दर्शयति तत्रेति। सन्निपत्योपकारकारादुपकारकेष्विति तदर्थः । द्रव्यादीति सिद्धवस्तूक्तिः । व्रीहिभिर्यजेतेत्यवगतदर्शाद्यङ्गभावव्रीह्युद्देशेन 'व्रीहीनवहन्ति , व्रीहीन् प्रोक्षती'ति विधीयमानमवहननं प्रोक्षणं च ; अग्नीषोमीयं पशुमालभेतेति दैक्षाङ्गत्वेनावगताग्नीषोमरूपदेवतोद्देशेनाग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति विधीयमानः पशुपुरोडाश इति लक्षणसमन्वयः। न च देवताया इह संप्रदानत्वेनान्वयान्न तदुद्देशेन विधीयमानत्वमस्तीति वाच्यम् , तथाऽन्वयेऽपि विधेर्दृष्टप्रयोजनलिप्सया तदुद्देश्यकत्व एव तात्पर्यात्तदुद्देश्यकत्वतात्पर्यकविधिविषयत्वमस्तीत्यदोषात् । आरादुपकारके च कर्माङ्गसिद्धवस्तूद्देश्यकत्वाभावान्नातिव्याप्तिः । द्रव्याङ्गसंख्यादावतिव्याप्तिवारणाय कर्मेति । केवलं विधीयमानत्वस्यारादुपकारके , द्रव्याद्युद्देश्यकविधिविषयत्वस्य च पश्वर्थचित्रायागादावतिप्रसङ्गात्कर्माङ्गेति । न च दध्नेन्द्रियकामस्य जुहुयादित्यादिविहितकामार्थदध्यादिसंस्कारेष्वव्याप्तिः , तस्य द्रव्यस्य कर्मानङ्गत्वात् इन्द्रियफलमात्राङ्गत्वादिति वाच्यम् ; अङ्गपदस्यात्रोपकारकपरत्वेनेन्द्रियाद्यङ्गस्यापि दध्यादेर्निर्वर्तकतया होमाद्युपकारकत्वेन क्षत्यभावात् । नन्वत्रैव होमोपकारकदध्यङ्गभूतेष्वारादुपकारकेष्वतिव्याप्तिरीति चेन्न ; आश्रयार्थं क्रियमाणैरारादुपकारकैरेव दध्यादिगुणस्यापि प्रसङ्गत उपकारलाभादतिदेशप्रमाणेन तत्र तदुपकारमात्रातिदेशेन तदु-

यथाऽवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च। दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव चाश्रयिकर्मेत्युच्यते ।

तच्च सन्निपत्योपकारकं द्विविधम् । उपयोक्ष्यमाणार्थमुपयुक्तार्थं

---

द्देशेन प्रयाजादेर्विधेयत्वाभावेन पदार्थानतिदेशेन तेष्वतिव्याप्त्यप्रसक्तेः । अथ लौकिककर्मोपकारकपश्वर्थचित्रादावतिप्रसङ्ग इति चेत् कर्मपदस्य वैदिककर्मपरतयाऽपूर्वसाधनत्वावच्छिन्नसिद्धवस्तुनिष्ठोद्देश्यताकविधेयतावत्त्वस्य लक्षणत्वे तात्पर्यान्न दोष इति । अवघातप्रोक्षणेत्यनेकनिर्देशाभिप्रेतं विशदयति तच्चेति । दृष्टार्थं दृष्टमात्रप्रयोजनकम् । अदृष्टार्थं अदृष्टमात्रप्रयोजनकम् । आदित्येन क्रमेण तण्डुलान्पिनष्टीत्यादिविहितपेषणादेः स्रुचः सम्मार्ष्टि पुरोडाशं पर्यग्निकरोतीत्यादिविहितसम्मार्गपर्यग्निकरणादेः स्विष्टकृदादेश्च परिग्रहः । ननु दृष्टे सत्यदृष्टस्याकल्प्यत्वात् कथमुभयार्थतेत्यत्रोपपादयति तद्धीति । देवतास्मरणमिति । अग्नीषोमयोर्देवतायाः प्रधानयागाङ्गत्वात् माध्यन्दिनसवनक्रियमाणपुरोडाशयागेन तत्स्मरणे, प्रातःसवने तदुद्देशेन वपाप्रचारस्य कृतत्वं तृतीयसवने तदुद्देशेनाङ्गयागानां कर्तव्यत्वं च दृढं हृदयलग्नं भवतीति स्मरणस्योपयोगः। दृष्टादृष्टार्थस्य (४–१–७) सौत्रं नाम दर्शयति इदमिति । आश्रयीति परकीयं द्रव्यदेवतं संस्कारकत्वेनाश्रयत इत्याश्रयि । सन्निपत्योपकारकं विभजते तच्चेति । उपयोक्ष्यमाणार्थम् यस्य पदार्थस्य य उपयोगः प्रमितः, स चेदस्मात्संस्कारकर्मणः पश्चाद्भवति, तर्हि स्वध्वंसाधिकरणकालवृत्त्युपयोगोपलक्षिततत्पदार्थोद्देश्यकं कर्मोपयोक्ष्यमाणार्थमित्युच्यते । उपयुक्तार्थमिति स्वप्रागभावाधिकरणकालवृत्त्युपयोगोपलक्षितपदार्थोद्देश्यकं कर्मेत्यर्थः । ननु यत्रस्थले चतुरवत्तं जुहोतीति विहितप्रक्षेपरूपप्रतिपत्तिक-

र्मेण ईदृशत्वाभावादव्याप्तिः, उभयोरपि यजमानाध्वर्युकर्तृकयोर्वषट्कारसमनन्तरभाविनोरेककालिकत्वेन हूयमानद्रव्यगतस्य याग उपयोगस्य होमसमानकालिकत्वेन होमप्रागभावाधिकरणकालवृत्तित्वाभावात्; उच्यते। यागहोमयोर्वषट्कारानन्तरं कर्तव्यत्वेऽपि होमस्य वषट्कारानन्तरजुह्ववरोपणाहवनीयोपरिनिधानन्यक्करणरूपबहुकार्यव्यवहितत्वेन ततःप्रागेव यागोत्पत्तिसम्भवेनोपयोगे स्वप्रागभावाधिकरणक्षणवृत्तित्वस्याक्षतत्वात्। यागानन्तरं द्रव्यप्रक्षेपात्प्राक् द्रव्यनाशादिसम्भवापेक्षिततावत्क्षणव्यवधानाभावात्तु वार्तिकादौ यौगपद्यव्यवहारः; देवतोद्देशद्रव्यत्यागप्रक्षेपेषु प्रक्षेपस्यान्त्यांशत्वकीर्तनाच्च। यदि पुनरेकक्षणवृत्तित्वमेवेति मतं तर्हि स्वप्रागभावाधिकरणेतिस्थाने स्वध्वंसानधिकरणेति निवेश्यम्।

ननु लोहितं निरस्यति शकृत्संप्रविध्यतीति विहितलोहितनिरसनशकृत्संप्रवेधनयोरव्याप्तिः, तयोरुपयुक्तत्वाभावात्। न च तयोरनुपयुक्तत्वेऽपि तत्सम्बन्धिहृदयादेरुपयुक्तत्वादुपयुक्तानुनिष्पादित्वस्य तयोरक्षतत्वात् लक्षणे चोपयुक्ततदनुनिष्पाद्यन्यतरोद्देश्यकत्वस्यैव निवेशेन न दोष इति वाच्यम्, अनुनिष्पादित्वेऽप्युपयुक्तानुनिष्पादित्वाभावात्। हृदयादीनामितः परमेव यागे उपयोक्ष्यमाणत्वात्। हृदयाद्यवदानकाल एव लोहितनिरसनादिकरणादिति चेत् श्रूयतां तावत्। यस्य पदार्थस्य यो मुख्य उपयोगस्तस्य स्वपूर्वकालिकत्वे स्वस्योपयुक्तसंस्कारकत्वमिति ह्यर्थः। न चैष न सम्भवति; लोहितादेर्हृदयाद्यखिलावयवसंश्लिष्टतया सत्त्वं हि यथाकथमपि पशुस्वरूपस्थितावुपयुज्यते। एवं च तस्य तत्स्वरूपस्थापकतया विशसनपर्यन्तं स्थित एवोपयोगः। स पुनरुपयोगो विज्ञातो वा स्यादविज्ञातो वा। न हि कथमप्यनुपयुज्यमानस्य कस्यचित् कचित् क्षणमपि स्थितिर्भविष्यति। मलादिकमपि शरीरस्थं बलहेतुरित्युच्यते। न चात्र वि-

चेति । तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थम् , व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणादि उपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णकरतानिवर्तकं कर्म प्रतिपत्तिकर्म ।

---

हित एवोपयोगो ग्राह्यः , न लौकिक इति निर्बन्धोऽस्ति । स्विष्टकृद्यागेडाभक्षणादौ तु विहित एवोपयोग उपस्थित इति स एव गृह्यते । न हि यूपव्रश्चनस्थाण्वादेरस्ति वैदिक उपयोगः । अतोऽपूर्वसाधनीभूतपशुगतं भूतलौकिकोपयोगं लोहिताद्युद्दिश्य निरसनादिविधानं नायुक्तम् । तस्मादुपयुक्ततदनुनिष्पादिसाधारण्येन स्वप्रागभावाधिकरणकालवृत्तिमुख्योपयोगपदार्थोद्देश्यकत्वविशिष्टकर्मत्वमिति यथाश्रुतमेवालम् । यदि तु मुख्योपयोगानिवृत्तावपि यथाकथञ्चिदुपयोगस्य भूतस्य विवक्षया सर्वत्र प्रतिपत्तित्वसमन्वय इष्यते , तर्ह्यवहननादेरपि निर्वापाद्युपयुक्तव्रीह्याद्यर्थत्वेन प्रतिपत्तित्वप्रसङ्गः । अथाऽऽकीर्णकरतानिवर्तकत्वमपि देयमित्युच्यते तर्हि तत्रोपयुक्तत्वांशनिवेशस्य किं प्रयोजनमित्यलम् ।

तत्रेति उपयोक्ष्यमाणार्थमित्यनेनान्वयि । ननूपयुक्तार्थमिति विभागोऽनुपपन्नः । सन्निपत्योपकारकं हि संस्क्रियमाणस्य कर्मजननयोग्यताऽऽधायकमिष्टम् । द्रव्यादेरुपयुक्तत्वे तु न संस्कारेण किञ्चित्प्रयोजनमिति शङ्कायामुपयुक्तार्थत्वसम्भवप्रदर्शनाय प्रसिद्धनाम निर्दिश्योदाहरति प्रतिपत्तीति । इडाभक्षणेति यागोपयुक्ताग्नेयपुरोडाशसान्नाय्यद्रव्यांशा एकपात्रनिक्षिप्ता इडाशब्दवाच्याः तद्भक्षणेत्यर्थः । प्रतिपत्त्युपयुक्तसंस्कारयोरभेदव्युत्पादनाय विशदयति उपयुक्तस्येति । अनेन पुरोडाशादिनाऽस्मभ्यमुपकृतमिति तत्र प्रतिपत्तिपूर्वकं क्रियाणत्वात्प्रतिपत्तिशब्दवाच्यत्वम् । अत एव प्रतिपत्तिस्सत्कार इत्याहुः । आकीर्णेति । यज्ञं आकीर्णं सङ्कीर्णं व्याकुलं करोतीत्याकीर्णकरम् । उपयोगानन्तरं हि तत्र यज्ञभूमौ व्यर्थ-

उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्कारार्थात् दुर्बलम् । उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात् । अत एव 'प्रायणीयनिष्कासे उदयनीयमनुनिर्वपती' त्यत्र निष्कासस्य निर्वापार्थत्वम्, न तु तस्य तदर्थत्वम्, निष्कासस्योपयुक्तत्वादित्युक्तमेकादशे । तच्च सन्निपत्योपकारकमारादुपकारकाद्बलीयः ।

नन्ववघातादि भवतु बलीयः, तस्य दृष्टार्थत्वात्, आरादुपकारकस्य चादृष्टार्थत्वात्, दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् । प्रोक्ष-

---

मेव वर्तमानमस्खलितसञ्चाराद्युपरितनकार्यविघाताय भवति । तथात्वनिवर्तकमित्यर्थः । अग्निहोत्रं जुहोतीत्यादौ प्रक्षेपस्याप्याकीर्णकरतानिवर्तकत्वादुक्तमुपयुक्तस्येति । तत्र होमस्यैव प्रधानतया मुख्य उपयोगो न पूर्ववृत्त इति भावः । उपयुक्तसंस्कारार्थम् उपयुक्तद्रव्यगतसंस्कारजनकम् । अत्यादरादिति । कर्तव्यत्वेन शास्त्रबोधितेषु सर्वत्रास्तिकस्यादरसद्भावादुक्तमतीति । तथाचोपयोक्ष्यमाणादरन्यूनादरविषयत्वादुपयुक्तार्थं दुर्बलमित्यर्थः । इह फलं प्रमाणं च दर्शयति अत एवेति । ज्योतिष्टोमे प्रायणीयेष्टिर्द्वितीयदिने विहिता । अन्त्ये च पञ्चमेऽहनि उदयनीयेष्टिः । तत्र श्रूयते । प्रायणीयनिष्कासे उदयनीयमनुनिर्वपतीति । अत्र वाक्ये नोदयनीयोद्देशेन निष्कासरूपद्रव्यविधिः आदित्य उदयनीयश्चरुरित्युत्पत्तिवाक्य एव द्रव्यस्य लब्धत्वात् । तथा प्रायणीयचरुपाकपात्रप्रक्षालनजलरूपनिष्कासस्य प्रतिपत्त्यपेक्षाऽप्यस्ति । अत उदयनीयनिर्वापस्य निष्कासार्थत्वमिति पूर्वपक्षे एकादशद्वितीयान्त्येऽयं सिद्धान्तः कृतः । तस्य तदर्थत्वम् निर्वापस्य निष्कासाङ्गत्वम् ।

दृष्टार्थत्वमेव बलीयस्त्वे हेतुरभिमतमिति कृत्वा चोदयति नन्विति । दृष्टार्थत्वे प्राबल्यमिति कुत इत्यत्राह दृष्ट इति । अन्याय्यत्वादिति । दृष्टस्य क्लृप्तत्वात् अदृष्टस्य कल्पनीयत्वादिति भावः । एवं प्रोक्षणादेः प्रा-

णादि सन्निपत्योपकारकं तु कथं बलीयः, उभयोरदृष्टार्थत्वाविशेषात् । किं च आरादुपकारकं साक्षात्प्रधानाङ्गं तस्यान्योद्देशेनाविधानात् । सन्निपत्योपकारकं तु अङ्गाङ्गम् । कर्माङ्गव्रीह्याद्युद्देशेन विधानात् । अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः ।

'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायात् ।

अत एव 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते न तु दीक्षणीयादेः । अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम् । उच्यते । सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः । सन्निपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वाक्यक्लृप्तः । उपकारमात्रं

---

बल्यासम्भवमुक्त्वाऽऽरादुपकारकस्य तदस्तित्वमुपपादयति किं चेति । अन्योद्देशेनाविधानादिति । यत्र प्रधानोद्देशेनैव विधिः श्रूयते तत्र स्पष्टमेवान्योद्देशेनाविधानम् । यत्र न श्रूयते, तत्रापि प्रकरणकल्पितश्रुत्या प्रधानोद्देशेनैव विधानान्नान्योद्देशेन विधानमिति । अस्तु, किमत इत्यत्राह अङ्गेति । अङ्गगुणेन विरोधे प्रधानगुणस्य सति अङ्गगुणबाधेन प्रधानगुणग्रहणम्, तस्य तादर्थ्यात् प्रधानसाद्गुण्यार्थत्वादिति सूत्रार्थः । इदमेवोदाहरणे व्युत्पादयति अत इति । य इष्ट्येतिवाक्येन तत्तत्कर्मप्रत्येकविधिविहितप्रयोगाणामनुवादेन पौर्णमास्यमावास्यान्यतररूपपर्वकालो विधीयते । अविशेषविधानेऽपि अङ्गानङ्गसाधारण्येन विधानेऽपि । पर्वानुग्रहः पर्वकालावच्छिन्नत्वम् । एवकारेण सोमानङ्गेष्टिषु व्यवच्छेदो मा भूदिति तस्यार्थं स्पष्टयति न त्विति । आदिना दैक्षपश्वादिग्रहणम् । प्रथमादिदिनकर्तव्यं दीक्षणीयादि न पर्वणि क्रियते किं तु सोम एव पञ्चमदिनकर्तव्यः । यथा पर्वणः पञ्चमदिनत्वं भवेत् तथा पूर्वमेवारम्भः क्रियत इति भावः ।

तु कल्प्यम् । आरादुपकारकस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः सम्बन्धः कल्प्य उपकारोऽपि ।

किं च आरादुपकारकस्थले हि प्रकरणं विनियोजकम्, इतरत्र तु व्रीहीन् प्रोक्षतीति वाक्यमेव । व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम् ।

---

सम्बन्धः अङ्गाङ्गिभावः । वाक्यक्लृप्त इति व्रीहीन् प्रोक्षतीति वाक्य एव द्वितीयादिना निश्चितः, न तु कल्प्यः, वाक्यस्य क्लृप्तत्वादिति । प्रयाजानुयाजयोरिति प्रयाजादेश्चेति पाठो युक्तः । कल्प्य इति । श्रूयमाणे समिधो यजतीत्यादौ तदश्रवणात् प्रकरणेन स कल्प्य इति । एवं प्रमेयस्याङ्गत्वस्य क्लृप्तत्वकल्प्यत्वाभ्यां विशेषमभिधाय संप्रति प्रमाणप्राबल्यदौर्बल्याभ्यां तमाह किं चेति । इतिवाक्यमिति इतिशब्दः प्रकारवचनः । यद्यपि श्रुतिरेवेहाङ्गाङ्गिभावमाह अथापि तत्प्रतियोग्यनुयोगिनोर्वाक्यगम्यत्वाद्वाक्यमित्युक्तम् । ननु प्रोक्षणस्य व्रीहिस्वरूप आनर्थक्यात् प्रथमतः प्रकरणात् क्रत्वपूर्वार्थत्वं परिकल्प्य ततः कया विधया तथात्वमिति जिज्ञासायां व्रीह्युद्देशेन तद्विधिर्वक्तव्यः । अतो वाक्यक्रियमाणविनियोगस्य प्रकरणविनियोगापेक्षया विलम्बितत्वान्नेह प्रबलप्रमाणास्तित्वरूपो विशेष इति शङ्कामपाकर्तुमाह व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रताविति । अयं भावः—न प्रकरणात् प्राथमिकः क्रत्वर्थत्वबोधः ; स्वरूप आनर्थक्याद्व्रीहित्वेनोद्देश्यत्वासम्भवे आलोचिते व्रीहिभिर्यजेतेत्येवं प्रागेव क्रत्वपूर्वसाधनत्वस्यावगततया तेन रूपेणोद्देश्यत्वस्वीकारसम्भवात् । अतो नैष दोष इति । बलीयस्त्वमिति सन्निपत्योपकारकस्येति शेषः । ननु केषांचिदारादुपकारिणां वाक्यादपि विनियोगसम्भवात्कथमारादुपकारकसामान्यात्प्राबल्यमिति चेत् उच्यते । सिद्धवस्तुनः क्रियासम्बन्धार्हतया सन्निपातिस्थले उपकार्ये वस्तुन्युपकारकक्रियासम्बन्धः साक्षात्परम्परया वा

'यदुक्तम्—अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन दुर्बलत्वमिति तदसत्। न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति तत्स्वरूपे आनर्थक्यात्, किं तु तत्संस्कारद्वारा क्रत्वर्थमेव, सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य वक्ष्यमाणत्वात्। अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः। दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव, तस्य तदपूर्वप्रयुक्तत्वात्। अतो युक्तं साक्षात्प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यत इति। तत्सिद्धं सन्निपत्योपकारकस्याराादुपकारकाद्बलीयस्त्वम्।

अत एव स्थाणौ स्थाण्वाहुतिं जुहोतीति विहिता स्थाण्वाहुति-

---

त्वत एवास्ति। क्रियायां क्रियान्तरसम्बन्धस्य पुनरसहजत्वादारादुपकारिस्थल उपकार्यक्रियायामुपकारकक्रियासम्बन्धो विशिष्य कश्चित् कल्पनीय इति गौरवम्। यथोक्तं शास्त्रदीपिकायां 'संस्कारत्वमेव सम्बन्धोपकारित्वलाभादसम्बद्धोपकारिण आरादुपकाराज्जघ्नाय' इति। इदमेव 'सन्निपत्य' 'आरात्' इति पदाभ्यां विवक्षितम्।

प्रधानाङ्गत्वादारादुपकारि बलीय इति शङ्कानिरासार्थमनुवदति यदिति। सन्निपत्योपकारिणोऽपि प्रधानार्थत्वाविशेषान्नेह स न्याय इति दूषयति तदसदिति। ननु क्रत्वर्थत्वे व्रीहीनिति व्यर्थम् तत्राह तत्संस्कारद्वारेति। नन्वङ्गाङ्गस्यापि प्रधानापूर्वार्थतया प्रधानार्थत्वेऽङ्गगुणविरोधन्यायलक्ष्यदुर्भिक्षम् तत्राह दीक्षणीयेति। तदपूर्वेति। दीक्षणीयापूर्वेत्यर्थः। स्वरूप आनर्थक्येन कैमर्थ्यशङ्कायां स्वापूर्वस्य प्रधानापूर्वापेक्षया झडित्युपस्थितत्वेन तदर्थत्वेनैव शङ्कापरिहारसम्भवाद्दीक्षणीयावाङ्गिनयमन्यायेन न प्रधानार्थत्वमिति भावः। सः दीक्षणीयदिपर्वानुग्रहः। एवमङ्गाङ्गस्वरूपवैषम्यहेतोः परास्तत्वात्प्राबल्यसाधकहेतुसद्भावाच्च बलीयस्त्वमित्युपसंहरति तदिति।

अत एवेति। अयमत्र पूर्वपक्षः स्थाणाविति वाक्ये सप्तम्या स्था-

यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था, देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम्। न तु स्थाण्वाहुतिराराdुपकारिकेत्युक्तं दशमे इति दिक्।

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम्।

---

णाराहुत्यङ्गत्वावगमात् आहुत्या स्थाणौ दृष्टप्रतिपत्तेरजननादुपर्युपयोगाभावाच्च स्थाणोः संस्कार्यत्वासम्भवाच्चाहुतिर्यत्किञ्चित्स्थाण्वङ्गिका विधीयत इति। सिद्धान्तस्तु–स्थाणुशब्दो ह्ययं सन्निधानात् यस्मिन् वृक्षे यूपार्थं काष्ठं छिन्नं तद्वृक्षसम्बन्धिनं छिन्नकाष्ठाधारभूतमेव स्थाणुमुपस्थापयति। तस्य च सप्तम्या गुणत्वे प्रतीयमानेऽप्युपस्थिततत्संस्कारकत्वमेवाहुतेर्युक्तम्, सन्निपातित्वे सम्भवत्यारादुपकारित्वस्यायोगादिति। ननु स्थाणोरुपयोगाभावान्न तत्संस्कारकत्वं युक्तमित्यत्राह यूपेति। यूपस्य व्रश्चनं यस्मात्स्थाणोः स यूपव्रश्चनस्थाणुस्तद्द्वारेत्यर्थः। यूपसंस्कारार्था यूपत्वोत्पादिका। स्थाणौ क्रियमाणाहुतिस्तत्रादृष्टमुत्पादयति। तच्चादृष्टं स्वाश्रयसम्बन्धित्वसम्बन्धेन काष्ठमाश्रित्य तत्र यूपत्वमुत्पादयतीति यूपार्थत्वमाहुतेः। ननु स्वसम्बन्धिनि स्ववियुक्ते चार्थेऽतिशयसम्पादनाय स्वस्मिन् संस्कार इति न दृष्टमित्यत्राह देवेति। मान्येन देवदत्तेन धृतां ततः स्वस्मै दत्तां स्रजं मानयिता यत्र क्वचिदप्रक्षिप्य शुचौ देशे निधत्ते। एवं शुचिदेशनिधानसंस्कृतायां स्रजि तत्सम्बन्धिनः ततः पृथक्स्थितस्य देवदत्तस्यात्मन्यतिशयस्स्वसम्बन्धिगौरवनिबन्धनो जायत इत्यानुभविकम्। तद्वदिहापि द्रष्टव्यमिति। न च सन्निपातित्वे उत्पत्त्यपूर्वार्थत्वादारादुपकारित्वे परमापूर्वार्थत्वात्परमापूर्वस्य च फलप्रत्यासन्नत्वेनोत्कृष्टत्वात्तदर्थारादुपकारिण एव प्राबल्यमिति वाच्यम् परमापूर्वापेक्षयोत्पत्त्यपूर्वस्य शीघ्रोपस्थितत्वेन प्रबलत्वात्। स्ववाक्योपात्तद्रव्यादेरुद्देश्यत्वे सम्भवति तद्बाधस्यायुक्तत्वाच्च। इदमभिप्रेत्याह दिगिति।

आरादुपकारकं लक्षयति द्रव्येति। आदिना देवतापरिग्रहः।

30 N

यथा प्रयाजादि । तदेवं निरूपितं द्विविधमप्यङ्गजातम् । तच्च न यागादिस्वरूपप्रयुक्तं, स्वरूपे आनर्थक्यात्, तदन्तरेणापि तत्सिद्धेः किं त्वपूर्वप्रयुक्तमेव । न हि तदन्तरेणापूर्वं भवतीत्यत्र किञ्चित्प्रमाणमस्ति, तस्यादृष्टत्वात् ।

न चैवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तमेव किं न स्यादिति वाच्यम् । फलभावनायां यागस्यैव करणत्वादङ्गानां च करणानुग्रा-

---

समिधो यजतीत्यादौ समिन्नामकयागादेर्द्रव्याद्यनुद्देशेनाविधानाल्लक्षणसमन्वयः । न चात्मसमवेतापूर्वजनकाङ्गत्वमेव लघुलक्षणमस्त्विति वाच्यम् क्रतुयुक्तपुरुषसंस्कारार्थेषु सन्निपत्योपकारिष्वतिव्याप्तेः । तदर्थमपूर्वपदेन विलक्षणापूर्वविवक्षायां च परिष्कारे न लाघवमिति । द्विविधमपीति । सिद्धरूपं क्रियारूपं चेत्यर्थः । न पुनः सन्निपत्योपकार्यारादुपकारि चेत्यर्थः । तथा सति तच्चेति सिद्धस्याग्रहणादपूर्वार्थत्वानुक्तिप्रसङ्गात् ।

विनियोगविधिविधेयस्य प्रयोजनं दर्शयति तच्चेत्यादिना । द्रव्यादेर्यागादिस्वरूपनिष्पादकत्वेनावश्यकत्वेऽपि द्रव्यान्तरेणापि तत्सिद्धेः प्रकृतद्रव्यनियमवैयर्थ्यान्न स्वरूपप्रयुक्तत्वं युक्तमित्याशयेनाह तदिति । नन्वपूर्वस्य स्वत इष्टत्वाभावादपूर्वप्रयुक्तत्वमपि न युक्तमिति शङ्कावारणार्थ एवकारः । न खलु स्वत इष्टत्वं नास्तीति यागादिस्वरूपप्रयुक्तत्वमुपेक्षामहे । किं तु यागादेस्तदेकनिष्पाद्यत्वासम्भवात् । न चैष दोषोऽपूर्वप्रयुक्तत्वे भवतीति भावः । कुतो न भवतीत्यत्रोपपादयति न हीति । अपूर्वस्यापुरुषार्थत्वेन फलस्य कस्यचिद्वक्तव्यत्वेन तत्प्रयुक्तत्वमेवाभ्यर्हितमित्याशंक्याह न चेति । एवं तत्प्रयुक्तत्वस्य तद्गतादृष्टनिबन्धनत्वं । अदृष्टत्वं तत्प्रयुक्तत्वसम्भवोपपादकम् । प्राधान्यमपूर्वत्यागे विनिगमकम् । प्रधानविध्यन्वयेन शान्ताकांक्षस्य फलस्याङ्गविध्यनन्वयात् प्रधानविधौ च समानपदोपात्तस्य यागस्यान्वयेन करणाकांक्षायाः शान्तत्वान्न फलभाव्यकत्वमङ्गानामित्याह फलेति । नन्वपूर्वे फलजननयोग्यताधायकत्वमङ्गानामस्तु तत्राहाङ्गानां चेति । कथं-

हकत्वात्तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात् । दीक्षणीयादिशब्देनेव तदपूर्वम् । न तु फलमुपस्थाप्यते विप्रकर्षात् । अतो न तत्प्रयुक्तत्वमङ्गानाम् । अत एव 'अगन्म सुवः सुवरगन्म' इति मन्त्रो विकृतावूहितव्य इत्युक्तं नवमे । फलदेवतयोश्चेत्यत्र फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु

---

भावाकांक्षा हि करणानुग्राहकाकांक्षा । तत्कथं तया गृहीतानामङ्गानामपूर्वानुग्राहकत्वम् , अपूर्वस्याश्रुतस्याकरणत्वादिति भावः । ननु यागे फलजननयोग्यताधायकत्वमेवास्तु तत्राह तत्र चेति । न तावत्फलजननयोग्यता यागे साक्षाद्भवति । अतस्तादृशयोग्यताविशिष्टापूर्वाधायकत्वमेव करणानुग्राहकत्वमिति वक्तव्यम्। ततो वरमपूर्वजननयोग्यताधायकत्वमेव तदिति । स्वापूर्वमिति । यद्यपि दृष्टान्ते ज्योतिष्टोमादिपरापूर्वव्युदासेन स्वसम्बन्धिन एवापूर्वस्य ग्रहणमिति वक्तुं स्वपदमपेक्षितम् । न तु प्रकृते ; इहान्यसम्बन्ध्यपूर्वप्रयुक्तत्वशङ्काया अभावात् । अथाप्यत्र स्वपदं फलस्यापूर्वजन्यत्वादपूर्वीयत्वम् , अपूर्वस्य तु स्वजन्यत्वात्स्वकीयत्वमित्यपूर्वे सन्निकर्षव्युत्पादनायेति ध्येयम् । सन्निकर्षात् साक्षाज्जन्यत्वसम्बन्धाश्रयत्वात् । फलप्रतिपादकमन्त्रस्यापि फलस्वरूपार्थत्वानङ्गीकारेऽन्येषामङ्गानां तदभावः कैमुतिकन्यायसिद्ध इत्याशयेनाह अत एवेति । अगन्म सुवः स्वर्गमगच्छाम । मन्त्रो दर्शपूर्णमासगतः । विकृतौ सौर्यादौ । ऊहितव्य इति सुवः पदस्थाने ब्रह्मवर्चसादिपदप्रक्षेपेणेति शेषः । इत्यत्रेति इति सूत्रघटितेऽधिकरण इत्यर्थः । मन्त्रस्यास्य किं सुवःपदोपस्थापितस्वर्गत्वावच्छिन्नार्थत्वम् किं वा प्रकृतक्रत्वपूर्वसाध्यत्वेन रूपेण तदर्थत्वमिति संशये पूर्वपक्षसूत्रमिदं । फलस्य तथा 'अग्नेरहमुज्जितिमनूज्जेषं' इति मन्त्रस्थदेवतायाश्च स्वरूपतो मन्त्रप्रयोजकत्वमिति । ननु विकृतिष्वपि फलसत्त्वेन कुतो नोह इत्यत्राह फलेति । फलप्रयुक्तत्वे फलस्वरूपप्रयुक्तत्वे ।

स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्तेत नतरां चोहितव्यः स्यादिति। तत्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम्।

तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुत्पत्त्यपूर्वार्थत्वम्। अत एवौषधधर्मावघातादी-

---

स्वर्गरूपेति सुवःपदेन स्वर्गरूपफलप्रकाशनादिति भावः। अतिदेशसिद्धौ तदधीनोहसिद्धिः, तदसिद्धौ सुतरां तदसिद्धिरित्याह नतरां चेति। स्वातन्त्र्येण स्वर्गत्वेन स्वर्गार्थत्वे मन्त्रस्य दर्शपूर्णमाससम्बन्धासम्भवात् प्रकृतक्रतुसाध्यत्वाविशिष्टस्वर्गार्थत्वे तत्र स्वर्गत्वांशघटनस्य व्यर्थत्वात्केवलं प्रकृतक्रतुसाध्यत्वेन फलं गृहीत्वा तदर्थो मन्त्र इत्युच्यते। एवं च विकृतिप्रयोगेऽपि प्रकृतो यो विकृतियागस्तत्साध्यफलसद्भावात्तत्प्रकाशनाय मन्त्रे ऊहः स्वीक्रियत इति बोद्धव्यम्।

एवं तावदङ्गसामान्यस्यापूर्वसाधनीभूतप्रधानार्थत्वं साधितम्। तत्र सिद्धरूपाणां सर्वेषामुत्पत्त्यपूर्वार्थत्वमेवेति तत्र विशेषाभावात् क्रियारूपेष्वेव भेदं दर्शयति तत्रेति। तत्र अङ्गेषु अथ वाऽपूर्वार्थत्व इत्यर्थः अस्योत्पत्त्यपूर्वार्थत्वमित्यत्र घटकतयाऽन्वयः। अपिशब्दः, न केवलं स्वरूपार्थत्वाभावेनापूर्वार्थत्वमित्येतावत् किं तु तत्र भेदोऽप्यस्तीति बोधनाय। यागस्वरूपे उपयोगादित्यन्तेन सन्निपातिनां यागसमनन्तरभाव्युत्पत्त्यपूर्वार्थत्वौपयिकतया यागपूर्वभावित्वं दर्शितम्। परमापूर्वार्थत्वानङ्गीकारेणोत्पत्त्यपूर्वार्थत्वोक्तेः फलं प्रामाणिकत्वं च दर्शयति अत एवेति। उत्पत्त्यपूर्वार्थत्वादेवेत्यर्थः। अन्यथा परमापूर्वार्थत्वे तस्यैकस्य सर्वसाधारण्यात्तत्साधनीभूतयागीयद्रव्यव्रीह्यादिधर्मत्वमिवाज्यादिधर्मत्वमपि स्यात्। न चावघातफलभूतवैतुष्याभावादाज्यादौ कथमवघात इति वाच्यम्; स्वरूपे आनर्थक्यात्परमापूर्वसाधनत्वेनोद्देश्यत्वे उद्देश्यतावच्छेदकधर्मस्याज्यादिप्रदेयद्रव्येष्वपि सत्त्वेन तेषामप्युद्देश्यत्वसिद्धौ प्रयोजनजिज्ञासायां दृष्टासम्भवेऽदृष्टस्यैव कल्पनीयत्वादिति भावः। औषधधर्मेति व्रीहीणामोषधिजत्वादौषधत्वम्। तदङ्गेत्यर्थः। अवघातादीत्यादिना प्रोक्षणादिपरिग्रहः। आज्ये उपांशु-

नामाज्ये न प्रवृत्तिः, तेषामाग्नेयापूर्वप्रयुक्तत्वात्, आज्यस्य च तदर्थत्वाभावादित्युक्तं तृतीये।

आरादुपकारकाणां तु स्वरूपेऽनुपयोगात् परमापूर्वार्थत्वम्।

---

याजाज्ये। इदमैन्द्रदध्याद्युपलक्षणम्। न प्रवृत्तिरिति। इदमुपलक्षणम् आज्यादिधर्माणामुत्पवनादीनामौषधे न प्रवृत्तिरित्यपि बोध्यम्। ननु सर्वप्रकृतोत्पत्त्यपूर्वसाधनलक्षणायामपि व्रीहिपदेनाज्यादेरप्युपस्थापनात्परमापूर्वार्थत्व इव सर्वार्थत्वमेव स्यादित्यत्राह तेषामिति। अवघातादीनामित्यर्थः। आग्नेयेत्यग्नीषोमीयोपलक्षणम्। व्रीहिपदेन स्वशक्यार्थसम्बन्धियागापूर्वस्यैवोपस्थापनादाग्नेयाद्यपूर्वस्यैव तथात्वात्तदर्थत्वमेवेति भावः। नन्वेवमप्याग्नेयापूर्वसाधनत्वात्पुरोडाशाद्यवघातप्रसङ्गः। न; व्रीहिशब्दो हि स्वजन्यतण्डुलद्वारकपुरोडाशसाध्यकर्मजन्यत्वेनोत्पत्त्यपूर्वमुपस्थापयति। एवं च प्रकृतापूर्वसाधनयागद्रव्यपुरोडाशनिष्पादकतण्डुलसाधनत्वावच्छिन्ने व्रीहिशब्दस्य लक्षणेति। व्रीहियवयोश्च वैकल्पिकत्वादेकोत्पत्त्यपूर्वसाधनत्वमस्त्येव। न चैवं व्रीह्यभावेऽपि यवैर्यागोत्पत्त्या व्रीहीणां व्यभिचारात्साधनत्वासम्भवः; वैदिकी कारणता पूर्ववृत्तित्वमात्रम्, न तु नियतपूर्ववृत्तित्वम्। न चोदासीनादपि स्वर्गादिफलापत्तिः, तत्र शास्त्राभावेन वारणात्। लोके तु तावन्मात्रस्याकारणेऽपि सत्त्वान्नियतपूर्ववृत्तित्वं कारणत्वमिति स्वीकार इत्यदोषात्। स्वरूपेऽनुपयोगादिति द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽनुपयोगादित्यर्थः। अयं भावः—सन्निपत्योपकारस्थले स्ववाक्ये द्रव्यदेवताश्रवणेन तन्मुखेन तत्सम्बन्धिप्रधानविशेषस्य विशिष्योपस्थित्या तदौचित्याय प्रधानान्तरार्थत्वपरिहारायोत्पत्त्यपूर्वार्थत्वस्वीकारः। आरादुपकारिस्थले तु संस्कार्यद्रव्याद्यश्रवणेनाविशेषात् प्रकरणबलात् सर्वप्रधानोपस्थितौ तत्तज्जन्यतावदुत्पत्त्यपूर्वार्थत्वेऽनेकेषामुत्पत्त्यपूर्वाणां कार्यत्वाङ्गीकारे गौरवम्; एकोत्पत्त्यपूर्वरूपकार्योत्पत्तिमात्रेणाङ्गापूर्वनाशप्रसक्तावन्तिमोत्पत्त्यपूर्वस्यैव तत्र शक्तत्वक-

तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् । सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः, उत्तराङ्गानां तु तेषां तत्स्थितावुपयोगः । परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ । प्रयोगबहि-

---

र्भावने च गौरवम् ; परमापूर्वार्थत्वाङ्गीकारे च सन्निपातिस्थले आज्यादाववघातादिसाङ्कर्यप्रसङ्गवद्दोषोऽपि न कश्चिल्लक्ष्यते इति लाघवात् परमापूर्वार्थत्वमिति । उक्तमुत्पत्त्यपूर्वार्थत्वमपि नैकरूपमित्याह तत्रेति । अनन्तरम् अव्यवहितोत्तरक्षणे । उत्पद्यमानत्वादिति पूर्वाङ्गानामुत्पत्त्युपयोगित्वसम्भवे उत्तराङ्गानां तदसम्भवे च हेतुः । पूर्वाङ्गानाम् प्रधानयागात्पूर्वमनुष्ठीयमानानामवघातादीनाम् । तदुत्पत्तावुपयोग इति उत्पत्त्यपूर्वोत्पत्त्यनुकूलयोग्यताधायकत्वमित्यर्थः । योग्यता प्रधानगता । न पुनरुत्पत्त्यपूर्वोत्पादकत्वमित्यर्थः । तथा सति प्रधानवदुत्पादकत्वाविशेषेण तत्साम्यापत्तेः । उत्तराङ्गानां स्विष्टकृदिडाभक्षणादीनाम् । तेषां सन्निपत्योपकारकाणाम् । तत्स्थितौ उत्पत्त्यपूर्वस्थितौ । उत्पत्त्यपूर्वं हि प्रयोगपरिसमाप्त्यनन्तरं परमापूर्वमुत्पादयिष्यति । तत्रोत्तराङ्गश्रवणबलादुत्तराङ्गानुष्ठानानन्तरं परमापूर्वोत्पत्तिपर्यन्तमुत्पत्त्यपूर्वसत्ता उत्तराङ्गाधीनेति कल्प्यत इति भावः । न चारादुपकारिणामिवोत्तरसन्निपातिनामपि परमापूर्वार्थत्वमेव स्यादिति वाच्यम् ; लाघवेन सन्निपातित्वावच्छेदेनैकापूर्वोपयोगस्य युक्तत्वादिति । आरादुपकारिषु परमापूर्वार्थत्वमेकरूपमेव प्राय इत्याह परमेति । अधिकारविधौ श्रुतं यत् प्रधानस्य फलकरणत्वम् , तदन्यथाऽनुपपत्त्या कल्पितस्य परमापूर्वस्य साङ्गप्रधानरूपकरणजन्यत्वावश्यकतया प्रयोगसमाप्तावेव तेन भवितव्यमिति भावः । सर्वेषां पूर्वेषां प्रयाजादीनामुत्तरेषामनुयाजादीनां च । तदुत्पत्तौ उपयोग इति सम्बध्यते । उत्पत्त्यपूर्वे परमापूर्वजननयोग्यताधायकत्वमिति विशिष्टार्थः । अत्र सन्निपातित्वा-

र्भूतस्य तु तत्स्थितावुपयोगः । यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाज-पेयापूर्वास्थितावुपयोगः । तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे । तत्सिद्धं सर्वथाङ्गानामपूर्वार्थत्वम् । प्रकृतमनुसरामः । तदेवं निरू-

---

वच्छेदेनैकविधापूर्वार्थत्वमिति सामान्यनियमकल्पन एव मानाभावः । तत्त-दङ्गानां स्वस्वविधिभेदभिन्नविनियोगविध्यंशविनियुक्तानां तत्र तत्र सम्भवता ऽपूर्वेण भाव्याकांक्षाशान्तिरिति, असति बाधे पूर्वाङ्गानामुत्पत्त्यपूर्वार्थत्वमु-त्तराङ्गानां परमापूर्वार्थत्वमिति कस्मान्न युक्तमिति विचार्यम् । कञ्चित्कं विशेषं दर्शयति प्रयोगबाहिर्भूतस्येति । साङ्गप्रधानानुष्ठानकालभिन्नकाला-नुष्ठेयस्येत्यर्थः । तस्य आरादुपकारकस्य । तत्स्थितौ परमापूर्वास्थितौ । न चारादुपकारकजन्यापूर्वस्य परमापूर्वस्थापकत्वे परमापूर्वपर्यन्तमेतत्सत्ताया आवश्यकतया, वाजपेयप्रयोगान्तरे, प्रयाजाद्यपूर्वस्य पशुपुरोडाशयाग इव प्रसङ्गसिद्ध्या बृहस्पतिसवस्य पुनरकरणप्रसङ्ग इति वाच्यम् प्रथमवाजपेय-फलात्पश्चादेव द्वितीयवाजपेयफलस्यौत्सर्गिकतया प्रथमफलोत्पत्तिकाल एव बृहस्पतिसवापूर्वनाशेन सहकारिविरहेण द्वितीयस्य नैष्फल्यप्रसङ्गात् । वाज-पेयोत्तरकालम् तत्प्रयोगोत्तरकाले । अत्र वाजपेयेनेष्ट्वेति तृतीयया करणत्व-श्रवणात् साङ्गप्रधानानुष्ठानरूपप्रयोगबाहिर्भाव एव विधीयते । एवं च प्र-योगानन्तरभवस्य परमापूर्वस्य बृहस्पतिसवात्प्रागेवोत्पत्तिरिति नास्य तदुत्पा-दकत्वमिति भावः । ननु दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र सो-मस्येव बृहस्पतिसवस्योत्तरकालिकत्वमेव श्रूयते । न तदङ्गत्वमिति कुत इयमपूर्वोपयोगचिन्तेत्यत्राह इत्युक्तं चतुर्थ इति । प्रसिद्धबृहस्पतिधर्मको ऽयमन्योबृहस्पतिसवो वाजपेयाङ्गभूत इति तत्रोक्तमिति भावः । सर्वथा उत्पत्त्यपूर्वार्थत्वेन परमापूर्वार्थत्वेन वा । एवमपूर्वार्थत्वे सिद्धे उद्देश्यसिद्ध्या तदुद्देशेन किञ्चिद्विधानं विनियोगविधिना शक्यमित्युपसंहर्तुमाह प्रकृतमनु-

**गितः संक्षेपतो विनियोगविधिः ।**

**प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैक-**

---

स्राम इति । एतावता विनियोगविधिनिरूपणार्थे तृतीयेऽध्याये तृतीय-पादार्थपर्यन्तमवोक्तप्रायमित्याशयेनाह संक्षेपत इति ।

अथ तृतीयं प्रयोगविधिं निरूपयति प्रयोगेति । प्रयोगोऽनुष्ठानं कृतिरिति पर्यायाः । तस्य प्राशुभावः शैघ्र्यम् । विधीयमानस्य पदार्थस्य स्वरूपमिष्टसाधनत्वं कृतिसाध्यत्वमिति त्रय आकाराः । क्रमेण तद्विशिष्ट-पदार्थबोधका उत्पत्तिविनियोगप्रयोगविधयः । नन्वेवं प्रयोगविषयत्वेन पदार्थबोधको विधिः प्रयोगविधिरिति वक्तव्ये प्राशुभावघटनं किमर्थम् । न च प्राशुभावेतिप्रयोजनकीर्तनमेवेति वाच्यम्, असम्भवात् । न हि कृतिसाध्यत्वविधेः शैघ्र्यं फलम् । किं तु किं दैवनिर्मितस्य धाराधरस्य संतापोत्सादकत्वमिव कर्मणः फलजनकत्वम् आहोस्विदभ्यवहारादिवदात्मकृतस्येति विशये विशेषव्युत्पादनमेव । विधिर्हि प्रवर्तकस्वभावः कृतिसाध्यत्वेन कर्म बोधयन् कर्तुरेवेदं फलमित्यवगमयति । न चैवं स्वरूपफलसाधनत्वबोधे विधेरनपेक्षितत्वेन तत्र लिङादिर्व्यर्थ इति शंक्यम् ; लिङाद्यभावे केवलाख्यातमात्रसत्त्वेऽर्थभावनाया भाव्याकांक्षायां कर्मण एव भाव्यत्वेनान्वयात् फलाकांक्षाभावेन फलसाधनत्वबोधानुपपत्तेः, फलनिरूपिताङ्गत्वस्य विधिमन्तरा ग्रहणासम्भवाच्च । अतः प्रयोगविधेरन्यफलकत्वात्कथं प्राशुभावः फलमिति । सत्यम् । अथापि प्रयोगविधिर्नाङ्गप्रधानभेदेन भिन्न इत्यङ्गप्रधानसाधारण्येन प्रयोगविध्यैक्यस्यैदं फलमिति सर्वविधीनां प्रयोजनवत्त्वमभिदधता प्रयोजनमेव प्राशुभावेत्यनेनाभिधित्सितमिति ।

नन्विदमयुक्तम् । अङ्गस्य प्रधानस्य वा तस्य तस्य विधायकेनैव वाक्येन तत्तत्कृतिसाध्यत्वस्यापि विधानात् तावता कर्तव्यत्वावगमेऽपि प्राशु-

वाक्यतामापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि

---

भावासिद्धेः । न खलु साङ्गं प्रधानमाशुकर्तव्यमिति कश्चिद्विधिरस्तीत्यत्राह स चेति । न हि केवलं कर्मणो ज्ञानमात्रेण चिकीर्षा भवेत् । किं तु साङ्गप्रधानभावनायाः फलविशेषोद्देश्यकाया अवगत्यनन्तरमेव । अतः प्रयुयुक्षाया विशिष्टविषयिण्या एकत्वौचित्यात् लाघवाद्विशिष्टविषयक एक एव प्रयोग इति युक्तम् । एवञ्च साङ्गप्रधानविधायकस्य वाक्यस्य कस्यचिदश्रवणात् यत् फलोद्देशेन कर्मविधायकं 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति वाक्यं तेनाङ्गवाक्यानामेकवाक्यतामापाद्य निष्पादितं यन्महावाक्यं तदेव प्रयोगविधिरित्यर्थः । अथ वा **प्रधानविधिरिति** न फलवाक्यमभिप्रेतम्, किंतु पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति प्रयोगान्वयिगुणवान् प्रधानविधिरेव । एवकारेण नाङ्गप्रधानभेदेन प्रयोगविधिभेदः, नाप्येतादृशादन्यः कश्चित्प्रयोगविधिरिति बोध्यते । ननु तथाऽपि प्राशुभावबोधकपदाभावात् तस्य कथं सिद्धिरित्यत्राह **स हीति** । **साङ्गं प्रधानमनुष्ठापयन्निति** साङ्गप्रधानप्रयोगं विदधदित्यर्थः । **विलम्बे प्रमाणाभावादिति** । नन्वेकवाक्यावगतसाहित्यान्यथाऽनुपपत्तिरूपप्रमाणादेवाविलम्बसिद्धौ वक्तव्यायां कथमेवं बाधकप्रमाणाभावेन तत्साधनम् । उच्यते । विभिन्नकालकर्तव्यत्वं यदि वचनादवगम्यते तर्हि साहित्यान्यथाऽनुपपत्त्या विलम्बाभावकल्पनं नोपपद्येतेति । विनिगमनाविरहमाशंक्याह **न चेति** । **विलम्बवत्** विलम्ब इव । ननु यथा फलवाक्ये दर्शादेः प्रतीयमानं साहित्यं तस्यैकफलसाधनत्वमवगमयति, तथा प्रयोगविधावङ्गप्रधानयोः साहित्यमेकप्रयोगविषयतामवगमयेत् । तावता तत्र

अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते। न हि विलम्बेन क्रियमाणयोः पदार्थयोः सहकृतमिति साहित्यं व्यवहरन्ति। न चैवं साहित्यानुपपत्त्या समानकालत्वमेव स्यान्न त्वविलम्बः, अव्यवधानेन पूर्वोत्तरकाले क्रियमाणपदार्थयोरविलम्बेन कृतमिति व्यवहारादिति वाच्यम्। अनेकपदार्थानामेकस्मिन्काले ऽनुष्ठानानुपपत्तेः। न च तावत्कर्तृसम्पादनेनानुष्ठानं किं न स्यादिति

---

प्रयोगे परस्परविलम्बोऽपि न युक्त इति कथं सिद्ध्यति। न च प्रयोगान्वयिगुणानां देशकालादीनामङ्गप्रधानविषये एकत्वादविलम्बसिद्धिरिति वाच्यम्। ऐक्यावगमेऽपि तत्रैव विलम्बेन करणे बाधकादर्शनादित्यत्रोपपादयति न हीति। सहकृतमितीति इदं पदार्थद्वयं सहकृतमित्यानुपूर्वीगम्यमित्यर्थः। ननु विलम्बेनेवाविलम्बेन करणेऽपि साहित्यव्यवहारो नास्ति। अविलम्बस्याव्यवधानरूपत्वात्, सहकृतमिति व्यवहारस्य चैकक्षणावच्छेदेन करण एव दर्शनादित्याशंक्याह न चेति। समानकालत्वम् एकक्षणकत्वं स्यात् सिद्ध्येत्। नन्वव्यवधानं व्यवधानाभाव एकक्षणवृत्तित्वेऽपि न व्याहन्यत इत्यत्राहाव्यवेति। पूर्वोत्तरेति। तथा च विजातीयपदार्थाव्यवहिते विभिन्नक्षणकृते वस्तुन्यव्यवधानेन कृतमिति व्यवहारान्न साहित्याविलम्बशब्दौ समानार्थाविति भावः। सत्यं साहित्यमेकक्षणवृत्तित्वम्। अथापि तदेव प्रतीयमानं परिमितेन कर्त्रा युगपद्बहूनां कर्मणामनुष्ठानासम्भवात्सम्पादयितुमशक्यं सत्, यावत्सु क्षणेषु तावता कर्त्रा तावत्कर्मानुष्ठानं सुशकं, तावत्क्षणवृत्तित्वरूपं पुरुषशक्तिपर्यालोचनया पर्यवस्यति। स एव चाविलम्ब इत्याह अनेकेति। तावत्कर्त्रेति। प्रयोजककर्तुर्यजमानस्यैकत्वेऽपि प्रयोज्यकर्तृणां तावतामृत्विजां ग्रहणसम्भवादिति भावः। अनुष्ठानं युगपत्साङ्गप्रधानानुष्ठानम्। यज्ञक्रतोरिति। क्रियत इति क्रतुः कर्म, यज्ञो देवतोद्देश्यकद्रव्यत्यागः। यज्ञरूपस्य क्रतोरित्यर्थः।

वाच्यम् । तस्यैतस्य यज्ञक्रतोश्चत्वार ऋत्विज इत्यादिना कर्तॄणां नियतत्वात् ।

तस्मादङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यताव-गततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति ।

स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगाविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रम-

---

आदिना 'तस्यैतस्य यज्ञक्रतोस्सप्तदशर्त्विज इति सोमर्त्विक्संख्याग्रहणम् । नियतत्वात् व्यवस्थितत्वात् । यावद्वरणं विहितं तावानेव कर्ता नाधिक इत्यपि ध्येयम् । इदमुपलक्षणम्—अन्यस्वस्यान्येन दानासम्भवादिना द्रव्य-त्यागात्मकाङ्गप्रधानयागादेर्यजमानैककार्यत्वात् पाकहोमपेषणावहननादेरेकदा कर्तुमशक्यत्वाच्च न सर्वयौगपद्यमिति । तस्मात् तावत्कर्तृग्रहणेनैकक्षण-वृत्तित्वरूपसाहित्यप्रतिपादनासम्भवात् । नन्वयमविलम्बः किं कर्तव्येषु क्रमानियमाङ्गीकारेण सिद्ध्यति किं वा तन्नियमस्वीकारेण ? नाद्यः किमि-दानीमिदं कर्तव्यं किं वा तदिति विमर्शादिना विलम्बस्यैव प्रसक्तेः । ना-न्त्यः, एकानुष्ठानानन्तरं कदाचिदक्लृप्तक्रमस्योपस्थितौ तत्परित्यागेन क्लृ-प्तक्रमकग्रहणे विलम्बापत्तेरित्यत्राह स चेति । शुष्केंष्व्यभ्यासादौ कृते सति नियतक्रमस्यैवोपस्थितिरिति न नियमाङ्गीकारे विलम्बप्रसक्तिरिति भावः । इतीति इत्यालोचनयेत्यर्थः । विक्षेपो विच्छेदो विलम्बः । एवं प्रयोग-विक्षेपपरिहारायापेक्षितः क्रमो यदि केनचित् विधिना न विधीयेत, तदा तस्यानङ्गत्वात्तल्लोपेऽपि क्रतुवैगुण्याभावात्कदाचिन्निपुणो व्युत्क्रमेणाप्यविल-म्बं सम्पादयेत् । तथा च क्रमनियमो भज्येतेति प्रयोगविधिनैव तद्विधानं दर्शयति अत इति । क्रमं श्रौतक्रमभिन्नं क्रमम् ; तस्य पृथग्विधिविहितत्वेन

मपि पदार्थविशेषणतया विधत्ते । तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा ।

तत्र च षट् प्रमाणानि, श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि । तत्र क्रमपरं वचनं श्रुतिः तच्च द्विविधम्, केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम्, वेदिकरणादेर्वचनान्तरेण विहितत्वात् । वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् ।

---

प्रयोगविध्यविधेयत्वात् । तत्रेति विधानविषयः इत्यर्थः । विततिविशेषः तत्तत्पदार्थानन्तरं तत्तत्पदार्थ इति कर्तव्यतावत्पदार्थवृत्तिपौर्वापर्यसमुदाय इत्यर्थः । अस्य क्रमस्य पदार्थसमुदायवृत्तित्वेन यत्र विकृतौ प्राकृतकिञ्चित्पदार्थलोपस्तत्र समुदायाभावादतिदेशासम्भवाद्व्युत्क्रमेणानुष्ठाने वैगुण्यं न स्यादिति प्रकारान्तरेणाह पौर्वापर्यरूप इति । अव्यवहितपूर्वत्वापरत्वान्यतरदित्यर्थः । वषट्कर्तुः प्रथमभक्ष इत्यादौ पूर्वत्वरूपः क्रमः वेदं कृत्वेत्यादौ चोत्तरत्वरूपः । अयं चैकैकपदार्थनिष्ठ इति विकृतावेकपदार्थलोपेऽप्यन्यपदार्थे तदतिदेशसम्भवान्न व्युत्क्रमप्रसक्तिरिति । प्रमाणाभावे विनिगमनाविरहादनियम एव स्यादिति क्रमे नियामकप्रमाणानि दर्शयति । तत्रेति । तच्च क्रमपरवचनं च । चकार उक्तप्रमाणषाड्विध्यसमुच्चये । केवलक्रमपरम् क्रममात्रविधायकम् । तद्विशिष्टपदार्थपरम् क्रमविशिष्टपदार्थविधायकम् । उदाहरति तत्रेति । वेदो दर्भमुष्टिविशेषः । आदिना क्रमप्रतियोगिवेदकरणं गृह्यते । क्रमविशिष्टेति प्राथम्यविशिष्टभक्षणविधानादिति भावः । ननु होत्रादेरेव वषट्कर्तृत्वात्तस्य च 'प्रैतु होतुश्चमस इत्यादिसमाख्यादिना सोमभक्षणस्य प्राप्तत्वात्प्राप्तभक्षोद्देशेन प्राथम्यमात्रमिह विधीयताम् । अतो वषट्कर्तरि नि-

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात्। अत एवाश्विनस्य पाठक्रमात् तृतीयस्थाने

---

मित्ते भक्षोद्देशेन प्राथम्यमात्रविधानान्नेदं विशिष्टपरमिति शङ्काव्यवच्छेदार्थ-स्तुकारः। व्यवच्छेदे हेतुमाह एकेति। एकः प्रसरो व्यापारो यस्य पदस्य तदेकप्रसरम् तस्य भावस्तत्ता तद्भङ्गाद्भयेनेत्यर्थः। पदस्य ह्येक एव व्यापारः उद्देश्यबोधनं वा विधेयबोधनं वा, न पुनरुभयमप्येकस्य। तथा सति तत्पदोत्तरं किमुद्देश्यताबोधनाय द्वितीयादिविभक्तिः स्यात्। किं वा विधेयताबोधनाय तृतीयादिरिति। किञ्चोद्देश्यस्य विधेयस्य वा न भावनासम्बन्धनिरपेक्षं परस्परवैशिष्ट्यम्। अतो भक्षप्राथम्ययोरुद्देश्यविधेयत्वे तयोः पृथक्पृथग्भावनान्वयात् प्रथमं वैशिष्ट्याप्रतीत्या एकविशिष्टार्थबोधकस्वरूपसामर्थ्यस्य भङ्गेन समासो नोपपद्येत। अत एकप्रसरताया आवश्यकतया तदभङ्गाय क्रमविशिष्टपदार्थविधानमिति। न चात्र लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्येतन्न्यायः; युक्तं तत्रोष्णीषस्यातिदेशेनैव प्रापणीयत्वात् पूर्वप्रवृत्तिमाश्रित्य विशिष्टोष्णीषविधौ पश्चाल्लौहित्यमात्रे विधितात्पर्यमिति। प्रकृते तु सोमे भक्षस्योपदेशेनैवावगम्यमानतया पूर्वप्रवृत्त्या श्रयणासम्भव इति।

प्रमाणानां समबलत्वे क्रमानियम एव स्यादिति विद्यमानं प्राबल्यं दर्शयति सेति। वचनकल्पनेति। यद्यपीह विनियोजकप्रमाणेषु श्रुतिलिङ्गादिष्विव न पूर्वपूर्वप्रमाणकल्पनया प्रामाण्यम् अथापि प्रमीयमाणस्यापि क्रमस्य वचनमन्तरा विधातुमशक्तेरविहिते च क्रमनियमासम्भवात्क्रमनियामकत्वं वचनकल्पनाद्वारैवेत्येवमुक्तमिति ध्येयम्। अत्र श्रुत्यर्थोदाहरणं न भवति श्रुत्यनुसारेणार्थस्य दृष्टस्यादृष्टस्य वा कल्पनात्। अतः श्रुतिपाठविरोधे उदाहरति अत एवेति। पाठक्रमादिति। ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णातीति तत्तद्देवताकसोमरसग्रहणविधायि-

ग्रहणप्रसक्तावाश्विनो दशमो गृह्यते इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् (५. ४.१) ।

यत्र तु प्रयोजनवशेन निर्णयः स आर्थः क्रमः । यथाऽग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । स चायं पाठक्रमाद्बलवान् । यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं च स्यात् । न हि होमानन्तरं क्रियमाणस्य किञ्चित् दृष्टं प्रयोजनमस्ति ।

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव

---

वाक्यपाठक्रमादित्यर्थः । अर्थं निरूपयति यत्र त्विति । यत्र क्रमे । आर्थः अर्थाधीनः । तथा चार्थः प्रयोजनापरपर्यायस्स्ववशेन क्रमनिर्णयार्हत्वात् प्रमाणमिति भावः । होमार्थत्वेनेति यवाग्वा जुहुयादिति तृतीययेति भावः । तत्पाकः यवागूपाकः । यथापाठमिति अग्निहोत्रहोमस्य प्राक् यवागूपाकस्य च पश्चादित्यर्थः । क्लृप्तप्रयोजनबाध इति । लोकतः, यवागूं पचतीति द्वितीयया चावगतं यत् यवागूनिष्पत्तिरूपं प्रयोजनं तदर्थत्वाभाव इत्यर्थः । ननु पश्चात्पाकेऽपि यवागूनिष्पत्तिरूपदृष्टार्थत्वमेवेत्यत्रोपपादयति न हीति । यवाग्वन्तरस्यानुपयोगात्स्वरूपे आनर्थक्येन तदुद्देशेन पाकविधानासम्भवाद्यवागूपाक आरादुपकारकसन्नदृष्टार्थस्स्यादिति भावः । पठनं निरूपयति पदार्थेति । क्रमविशिष्टं पठनं पाठक्रमः पठ्यमानवाक्यक्रम इत्येषु नातीव भेद इत्येवमुक्तिः । पदार्थबोधकेति । अनुष्ठेयस्य तत्सम्बन्धिनो वा पदार्थस्य बोधकेत्यर्थः । तेन याज्यानुवाक्यादेर्देवतामात्रबोधकत्वेनानुष्ठेययागाद्यर्थबोधकत्वाभावेऽपि न तत्क्रमस्यासंग्रहः । तस्मात् पाठक्रमात् । चकार उक्तप्रमाणसमुच्चये । पदार्थानां अनुष्ठेयपदार्थानाम् । येनेत्यतः पूर्वं वाक्यानीत्यपकृष्य पाठ्यम् ।

क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति । यथार्थप्रत्ययं च पदार्थानामनुष्ठानात् ।

स च पाठो द्विविधः । मन्त्रपाठो ब्राह्मणपाठश्चेति । तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमाद्यः क्रम आश्रीयते स मन्त्रपाठात् । स चायं मन्त्रपाठो ब्राह्मणपाठाद्बलवान्, अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवंकर्तव्यमित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते । मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः । तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य

---

यादृशानुपूर्वीको ग्रन्थस्तादृशानुपूर्वीकस्यैवाध्ययनम् । अध्ययनक्रमेण चार्थप्रत्यय इत्यर्थः । किमतस्तदाह यथार्थप्रत्ययमिति अर्थप्रत्ययक्रममनतिक्रम्येत्यर्थः । अनुष्ठानादिति आश्रीयत इत्यत्रान्वयः । पाठ इति पाठक्रम इत्यत्र पाठ इत्यर्थः । तत्र द्विविधपाठयोः । अस्य मन्त्रपाठादित्यनेनान्वयः । तदिति आग्नेययाज्यापुरोनुवाक्ययोरग्नीषोमीययाज्यापुरोनुवाक्ययोश्च क्रमादित्यर्थः । नन्वाग्नेयाग्नीषोमीययोर्विधायकवाक्यावश्यंभावेन ब्राह्मणपाठादेव क्रम इति कुतो नेत्यत्र एतत्प्राबल्यं निरूपयति स चेति । अनुष्ठान इति । अनुष्ठानकाल एव क्रमापेक्षणात् तत्र यदन्तरङ्गं तदनुसार एव युक्त इति भावः । कथमस्यैवान्तरङ्गत्वमित्यत्रोपपादयति ब्राह्मणेति । तस्योत्पत्त्यादिरूपप्राथमिकानुभवपरत्वेनानुष्ठानकालिकार्थस्मृतिकरत्वाभावादित्यर्थः । पुनः भूयः । व्याप्रियते पदार्थाववोधने इति शेषः । ननु वेदो यद्यत्कर्तुं शक्नोति तस्मै तस्मै प्रयोजनायोपादेयः । अतो ब्राह्मणमनुष्ठानकाले स्मारयितुमपि शक्नोतीति कथं तदुपेक्षेत्यत्राह अनन्यप्रयोजना इति । ब्राह्मणस्यैव सर्वार्थत्वे मन्त्रानर्थक्यं स्यादिति भावः । ननु स्मारकत्वं ध्यानादेरप्यस्ति तत्राह इति वक्ष्याम इति । तेनेति अनुष्ठानस्य स्मरणाधी-

च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादिति बलवान् । अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवंक्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येव क्रम इत्युक्तम् (५. १. ९)।

प्रयाजानां 'समिधो यजति' 'तनूनपातं यजति' इत्येवं विधायकवाक्यक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमः । अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि, तथापि प्रयाजानां स्मारकान्तरस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियन्ते । तथा च येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति । तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात्क्रम इति ।

---

त्वेन स्मरणस्य च मन्त्राधीनत्वेनेत्यर्थः । इतरस्मात् ब्राह्मणपाठात् । आग्नेयाग्नीषोमीययोरित्यस्य क्रमं क्रम इत्युभयत्रान्वयः । पश्चादिति नाव्यवहितत्वं विवक्षितम्, उपांशुयाजमन्तरा यजतीति सर्वथोपांशुयाजस्य मध्येऽनुष्ठेयत्वात् । ननु तर्हि नास्य क्रमप्रमाणत्वम्, क्रमस्याव्यवहितपौर्वापर्यरूपत्वात् । केवलपौर्वापर्यस्य दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्रापि सत्त्वेन तस्य क्रमत्वमनिष्टमित्यव्यवहितत्वस्यापि निवेश्यत्वात् । उच्यते अव्यवहितपौर्वापर्यमेवानेन प्राप्यते, परं तु वचनबलादुपांशुयाजातिरिक्तेनाव्यवहितत्वं सिद्ध्यति । अथवा पौर्वापर्यमात्रं प्रमाणावगम्यम् । तत्राव्यवधानं तु विलम्बासहेन प्रयोगविधिनैवावसेयमिति ।

ब्राह्मणपाठस्य नियामकत्वं दर्शयति प्रयाजानामिति । इत्येवमित्यनेन 'इडो यजति बर्हिर्यजति स्वाहाकारं यजतीति परिग्रहः । ब्राह्मणपाठक्रमः ब्राह्मणपाठात्क्रमः । ननु यदुक्तं ब्राह्मणवाक्यं हीत्यादि तद्विरोध इत्याशंक्याह अत्र चेति । अत्र क्रमे प्रयाजादिष्विति वार्थः; स्वीक्रियन्त इत्यत्रान्वयः । स्मारकान्तराभावादिति स्मारकमन्त्राभावात् अध्ययनगृहीतेन स्वाध्यायेन सम्भावितसर्वप्रयोजनपरिग्रहस्योचि-

ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते प्रयोगसमवेतार्थस्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात् । न च तेषां देवतास्मारकत्वात्कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियत इति वाच्यम् । आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः ।

न चेष्टापत्तिः । तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात् । तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः । यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियते तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वादङ्ग-

---

तत्वात् तत्रैव स्मारकत्वाङ्गीकार इति भावः । एवं मूलोक्तमुदाहरणं प्रदर्श्य तदाक्षिपति नन्विति । ननु याज्यामन्त्राणां देवतावाचिपदघटितत्वाद्देवतास्मारकत्वमेव, न कर्मस्मारकत्वम् । अतस्तत्स्मरणापेक्षायां ब्राह्मणवाक्यमेव तत्र स्वीक्रियत इत्याशंक्याह न चेति । देवतायां स्मृतायां तत्सम्बन्धिनः कर्मणः स्मरणान्न ब्राह्मणवाक्यमपेक्षितव्यम् , अन्यथाऽऽग्नेयादिष्वपि तथा स्यादित्याह आग्नेयेति । तदिति ब्राह्मणवाक्येत्यर्थः । तथा सति तत्रापि ब्राह्मणवाक्यानामेव कर्मस्मारकत्वे सति । नन्वेवमपि देवतास्मरणाय मन्त्रापेक्षास्वीकारात्प्रयोगसमवेतार्थस्मारकत्वानपायात् कथं बलीयस्त्वहानिरित्यत्रोपपादयति तदिति । ननु यदर्थस्मारकत्वमेकस्य ; न तदर्थस्मारकत्वमपरस्येति तत्तदंशे तस्य तस्य बलीयस्त्वमित्यत्राह यदि चेति । न खलु प्रधानस्मरणक्रमेणानुष्ठाने संभवत्यङ्गस्मरणक्रमेण तद्युक्तम् । अतो मन्त्राणामन्यास्मारितदेवतास्मारकत्वनिबन्धनं बलीयस्त्वमकिञ्चित्करम् । यत्पुनरनुष्ठानप्रयोजकं बलीयस्त्वं तद्ब्राह्मणपाठस्यैवेत्यर्थः । 'प्रधानकर्म' 'अङ्गभूतदेवतां' इति कर्मदेवतापदाभ्यां साक्षादनुष्ठेयत्वतदभावरूपं वैलक्षण्यं दर्शितम् । न खलु स्वस्मरणक्रमेण स्वानुष्ठाने संभवति स्वसम्बन्धिनोऽनुष्ठेयतानिर्वाहाय स्वस्यान्यदाऽनुष्ठानं युक्तमिति तद्भावः । अन्तरङ्गत्वात् अविलम्बानुष्ठानप्रयोजककार्यकारित्वात् । अपसिद्धान्त-

भूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वान्मन्त्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात् । तथा च 'मन्त्रतस्तु विरोधे स्यात्' इति पाञ्चमिकाधिकरणविरोधः। तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम् ।

अथ—आग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकास्त्यज्यमानद्रव्योद्देश्यत्वरूपत्वात् देवतात्वस्येति चेत्तुल्यं प्रयाजेषु । तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः । प्रयाजेषु देवताया मान्त्रवर्णिकत्वात् । तथा च प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मन्त्रपाठादेव स्यान्न तु ब्राह्मणपाठक्रमात् ।

न च मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादे-

---

त्वादिदमनिष्टमिति दर्शयति तथा चेति । 'मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशस्स' इति विशिष्टं सूत्रम् । अस्यार्थः—मन्त्रपाठब्राह्मणपाठक्रमयोर्विरोधे मन्त्रतो मन्त्रपाठक्रमात्पदार्थक्रमः स्यात् । कुतः ? मन्त्रस्य प्रयोगरूपसामर्थ्यात् प्रयोगविषयपदार्थस्मरणे समर्थत्वात् । तस्मान्मन्त्रसामर्थ्यात् स ब्राह्मणपाठः उत्पत्तिदेशः कर्मोत्पत्तिमात्रोपयुक्त इति । ननु मन्त्रस्यानुष्ठानकाल उच्चारणीयत्वात्तेन देवतास्मरणद्वारा कर्मानुष्ठेयावस्थमुपस्थाप्यते , ब्राह्मणवाक्येन तु स्वरूपतः । अत आग्नेयादियाज्याक्रमात्तत्क्रम इति चेदत एवेहाप्येवमित्याह अथेति । प्रकाशकाः स्मारकाः । देवतास्मरणे कर्मस्मरणमिति कुत इत्यत्रोक्तं त्यज्यमानेत्यादि । याज्याभिर्देवतात्वाधिष्ठानावगतौ तद्गतदेवतात्वोपस्थितौ तस्य त्यागघटितत्वेन कर्मण उपस्थितिरिति भावः । प्रमाणान्तरात् मन्त्रवर्णत एव देवतालाभात्प्राप्तदेवतानुवादित्वेन समिदादिपदानि नामधेयानीत्यभ्यासाधिकरणोक्तत्वाद्देवताप्रकाशकयाज्यामन्त्रसद्भावोऽधिकरणसिद्ध इत्याह तत्रापीति। तथा च एवं देवताप्रकाशकत्वे सति । अन्यादृशत्वात् ब्राह्म-

वेति वाच्यम् । अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात्, मन्त्रक्रमस्य बलीयस्त्वात् । अभ्यासाधिकरणे च वार्तिककृता क्रमविनियुक्तैवंलिङ्गकमन्त्रवर्णैत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः । नवमे तन्त्ररत्ने समिधः समिधोऽग्न आज्यस्य व्यन्त्वित्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देवता गुणत्वेन समर्प्यन्त इत्युक्तम् ।

मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात् । तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात्क्रम इति चेदुच्यते । सत्यमेतत् । तथाऽपि यत्रार्थस्मारका मन्त्रा न सन्त्येव—यथा तूष्णीं विहितेषु कर्मसु—तेषां क्रमो ब्राह्मणपाठक्रमात् । तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणं तु क्त्वार्चिन्तया, तत्र ब्राह्मणवाक्यानां प्रयोगसम-

---

णपाठक्रमविलक्षणत्वात् । अनुष्ठानं अनुष्ठापकत्वम् । वस्तुतोऽन्यादृशत्वमेव नास्तीति प्रमाणतो दर्शयति अभ्यासेति अभ्यासाधिकरणे शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तररूपकर्मभेदकप्रमाणान्तर्गताभ्यासप्रतिपादकेऽधिकरणे । एवंलिङ्गकेति समिदादिदेवताप्रकाशनसामर्थ्यविशिष्टेत्यर्थः । क्रमविनियोगः यथासंख्यपाठक्रमेणाङ्गताबोधनम् । ननु मन्त्राणामेषां प्रकरणात्प्रधानार्थत्वमेव स्यात् न तु क्रमात् प्रयाजार्थत्वमिति शङ्कामपि परिहरति नवम इति । आदिना तनूनपादग्न आज्यस्य व्येत्वित्येवंविधमन्त्रपरिग्रहः । क्रमेति । इदं च प्रकरणप्राप्तानामपि प्रथमस्य प्रथममिति रीत्या निवेशबोधनाय । प्रकरणेति अवान्तराधिकाराख्यप्रकरणेत्यर्थः । गुणत्वेन अङ्गत्वेन । समर्प्यन्त इति लिङ्गादिति शेषः । तदनुपपत्तिरिति क्रमविनियुक्तेति क्रमप्रकरणप्राप्तैरिति चोक्त्यनुपपत्तिरित्यर्थः ।

एवकारेण लक्षणयाऽर्थस्मारकाणामपि मन्त्राणामभावमभिप्रैति । तर्हि कथं प्रयाजोदाहरणमित्यत्राह प्रयाजेति । क्त्वाचिन्तयेति प्रयाजेषु मन्त्राभावमाहार्यरूपेण मनसि कृत्वा विचारेणेत्यर्थः । उच्चार्यमाणत्वाभावकथनादर्थ-

वेतार्थस्मारकत्वाभावात् । यथाऽऽहुरर्थवादचरणे वार्तिककाराः—

'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते' इति।

तस्मात्समन्त्रककर्मणां मन्त्रपाठक्रमात्क्रमः । अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक् ।

प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ क्वचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चात्—अयं यः क्रमः स स्थानक्रमः ।

---

स्मारकत्वाभावोऽप्यभिमत इत्यभिप्रायेण वार्तिकं प्रमाणयति यथेति । अर्थवादचरणे तत्पादे,मन्त्राधिकरणे । स्वरूपसंस्पर्श इति । दर्शपूर्णमासादिप्रधानं फलाय विधीयमानमुपकारकापेक्षायां क्रमप्रकरणाभ्यां प्रयाजादिब्राह्मणवाक्यानि मन्त्रांश्च गृह्णाति । तत्र ब्राह्मणवाक्यानां स्वरूपसंस्पर्शे वाक्यस्वरूपस्य प्रधानेन गृह्यमाणत्वे इत्यर्थः । सत्यपीत्यपिनाऽर्थवादाधिकरणोक्तरीत्या केषांचित् (अनारभ्याधीतानां) ब्राह्मणवाक्यानां स्वरूपसंस्पर्शो नास्त्येवेति सूचितम् । प्रयोज्यतां यागानुष्ठानकाले उच्चार्यमाणताम् । प्रतिपद्यन्ते प्राप्नुवन्ति । अस्य वार्तिकस्य पूर्वपक्षगतत्वेऽप्यदूषितत्वादभिमतत्वमिति ध्येयम् ।

स्थानं निरूपयति प्रकृताविति । देशशब्दः कालपर्यवसायी । अनुष्ठीयन्त इति पदार्था इति विपरिणतस्यानुषङ्गः । पदार्थानामिति इतरयोरिति च बहुत्वद्वित्वे वक्ष्यमाणोदाहरणानुसारिणी अविवक्षिते । अतः पदार्थद्वयचतुष्टयादावपि न स्थानक्रमहानिः । स्थानक्रमः स्थानात्क्रमः । तथा चोक्तक्रमविशेषबोधकं प्रमाणं स्थानमिति भावः । ननु प्रकृतौ तस्य तन्मात्रस्थानत्वेऽपि विकृतौ साहित्यश्रवणेन सर्वस्थानत्वादत्र तस्य पूर्वमनुष्ठाने

स्थानं नामोपस्थितिः । यस्य हि देशेऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्केऽग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्य आदौ सवनीयपशोरनुष्ठानम्, तस्मिन् देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः, इतरयोस्तु पश्चात् ।

तथा हि—ज्योतिष्टोमे त्रयः पशुयागाः । अग्नीषोमीयः सवनीयः आनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यक्रो नाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं 'सह पशूनालभेत' इति । तच्च साहित्यं सवनीये देशे, तस्य प्रधानप्रत्यासत्तेः स्थानातिक्रमसाम्याच्च ।

---

किं गमकमित्यत्राह स्थानं नामेति । उपस्थितिरिति । उपसर्गद्योत्यार्थस्य धातौ लीनत्वादिति भावः । उपस्थितिरपि साहित्यश्रवणबलात्सर्वेषां किं न भवतीत्यत्रोपपादयति यस्येति । प्रकृतिक्लृप्तक्रमेण पदार्थाननुतिष्ठतः पुंसः, यद्देशे सहानुष्ठानं विकृतौ, तत्पूर्वस्मिन् पदार्थे कृते तस्योपस्थितिः प्रथमम्; अथ तेन सहानुष्ठेयत्वस्मरणेनैवान्योपस्थितिरिति दुरपह्नवमिवि भावः । उदाहरति अत एवेति । क इमेऽग्नीषोमीयसवनीयानुबन्ध्याः कुत्रत्याः, कश्च साद्यस्कः, कथं च तेषां सवनीयदेश एवानुष्ठानमिति सर्वं निरूपयति तथा हीति । भिन्नदेशा इति बहुव्रीहिः । औपवसथ्यम् सुत्याहात्पूर्वमहः । आनुबन्ध्यस्यापि सुत्यादिनस्थत्वात्तद्व्यावृत्तये सुत्याकाल इत्युक्तम् । अन्ते सुत्योत्तरमुदयनीयेष्ट्यनन्तरम् । सोमयागविशेषः पञ्चाहसाध्यज्योतिष्टोमविलक्षण एकाहसाध्यस्सोमयागः । उक्तमव्यक्तत्वम् । अतः ज्योतिष्टोमविकृतित्वात् । साहित्यमिति । पशुयागानामातिदेशि-

सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्व-स्थानातिक्रममात्रं भवति, अग्नीषोमीयदेशे ह्यनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम्। आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात्। एवमानुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः।

तथा च सवनीये देशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथम-

---

कृत्वात्साहित्यमात्रमेवेह वाक्ये विधेयम्। अथ सवनीयदेश एवानुष्ठानं निरूपयति तच्चेति। तस्य सवनीयस्य। प्रधानप्रत्यासत्तेरिति। त्रयाणां सोमयागाङ्गत्वस्याविशिष्टत्वेऽपि सुत्याकाले करणात्सन्निकर्षोऽस्यैव। सर्वेषां च तस्मिन् सम्भवति त्यागो न युक्त इति भावः। स्थानातिक्रमसाम्या-च्चेति साम्यं समसंख्याकत्वम्। यस्य देशे त्रयाणामनुष्ठानं तद्भिन्नयोर्द्व-योस्तद्देशानुष्ठानायातिक्रमणीयस्थानसंख्यायां साम्यस्य युक्तत्वाच्चेत्यर्थः। सा-हित्येनानुष्ठेया इमे स्वकालेषु त्रिष्वन्यतम एव कर्तव्याः। न पुनस्त्रीनपि कालानुपेक्ष्याश्रुतकालान्तरकल्पनया तत्रेत्यभिप्रेत्य साम्यं दर्शयति सवनी-येति। मात्रमिति। ननु सवनीयस्याप्यतिक्रमद्वयमस्ति। यथा हि सन्निकृष्टत्वादग्नीषोमीयमागच्छति तथाऽनुबन्ध्यमपि गच्छेत्। तत्रैकत्र स्थितावन्यत्यागस्यावश्यकत्वेन स्वकालातिक्रम आनुबन्ध्यकालातिक्रम इति द्वयमिति चेन्न; एवमप्यानुबन्ध्यस्याग्नीषोमीयकालमागन्तुं यावान् विलम्बो न तावान् सवनीयस्य। स ह्यानुबन्ध्यं प्रतीवाग्नीषोमीयं प्रत्यपि समान-काल एव प्रस्थित इत्यत्र तात्पर्यात्। द्रष्टव्य इति स्वस्थानातिक्रमस्सव-नीयस्थानातिक्रमश्चेति शेषः। इदमुपलक्षणम् अग्नीषोमीयस्थानेऽग्नीषोमी-यः पुरोडाशः आनुबन्ध्यस्थाने मैत्रावरुणी पयस्या च श्रूयत इति तत्र पशु-भावदर्शनादपि सवनीयस्थानित्वमिति। एवं वस्तुस्थितिमुक्त्वा प्रकृतस्थान-कार्यमाह तथा चेति। नन्वनेन वचनेन यूपपरिव्याण एव ग्रहणानन्तर्यं

मनुष्ठानम् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । प्रकृतौ आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीत्याश्विनग्रहणानन्तरं तस्य विहितत्वात् । तथा च साद्यस्के ऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम् ।

---

प्रतीयते । अपि चेह सवनीयपशूपाकरणमात्रश्रवणात्कथमयं सवनीयदेश इति शङ्कापरिहाराय 'इति वचनादि'त्यनुक्त्वा 'इत्याश्विनग्रहणानन्तरं तस्य विहितत्वादि'त्याह । सवनीयविधायकवाक्यान्तराभावात् इतरांशस्य च प्राप्तत्वादाश्विनग्रहणानन्तर्यविशिष्टसवनीयविधिरेवात्रेति भावः । नन्वथापि न सवनीययागस्याश्विनग्रहणानन्तरमनुष्ठानं तदङ्गोपाकरणादेर्मध्येऽनुष्ठेयत्वात् ; सत्यम् यथाकथञ्चित्सवनीयपशुसम्बन्ध्येव प्रथममित्येव ग्रन्थाभिप्रेतम् । मुख्यक्रमे कथितेऽङ्गक्रमोपि कथितो भवतीति । अत्राश्विनग्रहणानन्तर्यमपि न विधेयम् तदनन्तरपरिव्याणानन्तरत्वेन यागे तदुत्तरत्वस्यापि सिद्धेः । अतो द्रव्यदेवताविशिष्टयागविधिरेवात्रेत्यवधेयम् । अथाग्नीषोमीयानुबन्ध्ययोः कतरस्य प्रागनुष्ठानम् ? यतर इष्टस्ततरस्य । न ह्यनयोः प्रकृतौ क्रमो विहितोऽस्ति अपि त्वार्थिकः । न चार्थिकं चोदकः प्रतिदिशतीति । अग्नीषोमीयस्य वा प्रागस्तु ; आर्थिकोऽपि क्रमो मा भज्यतामिति । विस्तरभियेदं विहायोक्तं स्मारयति इतरयोरिति । अत्रेदमवधेयम्—प्रकृतौ पशुत्रयस्य स्वस्वपूर्वपदार्थानन्तर्यं प्रमाणसिद्धम् । साद्यस्के च तद्देशत्रयमपि विहायान्यत्रानुष्ठानेन साहित्यसम्पादने तदानन्तर्यत्रयमपि बाध्येत । एष्वेव कुत्राप्यनुष्ठाने त्वानन्तर्यद्वयमेव बाधितं भवति । न त्रयमपि । तत्रापि प्रधानप्रत्यासत्त्यादिना सवनीयदेश एवेत्यपि सिद्धम् । एवं च सवनीयदेशेऽन्यस्य प्रथममनुष्ठाने तदानन्तर्यबाधापत्त्या सवनीयस्य प्रथममनुष्ठानमिति सवनीयानुष्ठानक्रमनियामकप्राकृतप्रमाणेनैव सिद्धतया किमत्र स्थानरूपातिरिक्तप्रमाणेन कर्तव्यमिति ।

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति व्युत्क्रमेण त्वनुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानमन्येषामत्यन्तं व्यवधानं स्यात् । तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधापत्तेः, अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः ।

अत एव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेययागैन्द्रयागयोः पौर्वापर्यात् । अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितव्यवधानं भवति, आग्नेय-

---

अथ मुख्यं निरूपयति प्रधानेति । मुख्यक्रमशब्दः 'मुख्यक्रमेण वाऽङ्गानां तदर्थत्वा'दिति सूत्रानुसारेण प्रमाणभूतक्रमपर उपरि निर्देक्ष्यते; अथाप्यत्र मुख्यात्क्रम इति विग्रहविवक्षयाऽङ्गक्रमरूपे प्रमेये प्रयुक्तः । अत एव पूर्वं मुख्यप्रवृत्त्याख्यानीति मुख्यमात्रोक्तिः । मुख्यशब्दश्च क्रमविशिष्टप्रधानपरः । चेदिति अनुष्ठीयन्त इत्यत्रान्वेति । अत्यन्तमव्यवधानमिति । अस्येष्टत्वसम्भवेऽपि सर्वसाम्यसम्पादनायेषद्व्यवधानस्यैवेष्टत्वादिदमनिष्टमिति भावः । व्युत्क्रमाङ्गीकारेऽपि यथाकथञ्चिद्व्यवधानसत्त्वादत्यन्तपदम् । अत्यन्तव्यवधानम् क्रमाङ्गीकारप्राप्तव्यवधानाधिकव्यवधानम् । बाधापत्तेरिति । प्रयोगविधिना एकस्य प्रधानस्य यथा स्वाङ्गसाहित्यं बोधितम् तथाऽन्यस्य तदङ्गसाहित्यमपि । तच्च साहित्यं यौगपद्यरूपमसम्भवीति यद्यव्यवधाने साहित्यपर्यवसानम्, तत्राप्युभयोरविशेष एव वक्तव्यः । अथ तस्याप्यसम्भवेन यदीषद्व्यवधानं कल्प्यते, तत्रापि साम्यमावश्यकम् । व्युत्क्रमेणानुष्ठाने च तद्बाधितं भवतीति भावः । अभिघारणं प्रयाजशेषेण हवींष्यभिघारयतीति विहितं सर्वहविरभिघारणम् । क्रियत इति शेषः । पौर्वापर्यादिति । याज्यानुवाक्याक्रमेण तस्य सिद्धत्वादिति भावः । एकान्तरितव्यवधानम् एकैकमात्रेणान्तरितं

हविरभिघारणाग्नेययागयोरैन्द्रयागहविरभिघारणेन व्यवधानात् । ऐन्द्रयागहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात् ।

अतश्चादावाग्नेयहविरभिघारणं तत ऐन्द्रस्य हविषः तत आग्नेययागः ततश्चैन्द्रो याग इत्येवं क्रमो मुख्यक्रमात्सिद्धो भवति । यदि त्वादावैन्द्रहविषोऽभिघारणं तत आग्नेयस्य क्रियते तदा याज्यानुवाक्याक्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेययागतदङ्गहविरभिघारणयोरत्यन्तमव्यवधानमैन्द्रयागतदङ्गहविरभिघारणयोरत्यन्तं व्यवधानं स्यात् । तच्च न युक्तम् । अतो युक्तः प्रयाजशेषेणाभिघारणस्य मुख्यक्रमात्क्रम इति ।

स चासौ मुख्यक्रमः पाठक्रमाद्दुर्बलः । मुख्यक्रमो हि प्रमा-

---

मध्ये प्रविष्टं व्यवधानम् । तद्व्यवधानं नाम तत्क्रियाध्वंसाधिकरणयत्किञ्चित्क्रियाध्वंसाधिकरणत्वरूपम्, अधिकरणताकालिकत्वसंबन्धेन । तत्र मध्ये एकैव क्रिया घटकेति । अधिकान्तरितत्वे हि ध्वंसाधिकरणक्रियाऽनेका मध्ये प्रविशेदिति भावः । हविष इति अभिघारणमिति विभज्यानुषङ्गः । मुख्यक्रमादिति । इदं षष्ठीतत्पुरुषवृत्तं प्रमाणपरम् । व्युत्क्रमेत्यन्ताव्यवधानव्यवधाने दर्शयति यदि त्विति । ननु यागयोरपि व्युत्क्रमाङ्गीकारान्न दोष इत्यत्राह याज्येति अनुष्ठानादित्यन्तम् । उपसंहरति अत इति । नन्वेकहविरभिघारणं यागं च कृत्वा पश्चादेव हविरन्तराभिघारणं यागान्तरं च क्रियतामिति चेन्न प्रयोगविधिना प्रधानेष्वङ्गसाहित्यश्रवणेन युगपदेव सर्वप्रधानोपकारस्याङ्गेन कर्तव्यतया तदसम्भवे यावता शैघ्र्येण तत्सम्भवस्तावत एवाङ्गीकर्तव्यत्वे सति, कदाचिदेकप्रधानीयाभिघारणं अन्यदा चान्यप्रधानीयमित्यस्यायुक्तत्वात् । स चेति अत्र मुख्यक्रमस्य स्थानव्यवहिततया पाठक्रमाव्यवहितत्वाभावात्पाठक्रमनिरूपणकाले इतरतत्प्राबल्यं न निरूपितम् । मुख्यक्रमः मुख्यक्रमाधीनः क्रमः । पाठक्रमात् तदधीनक्रमात् । प्रमाणा-

णान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान् ।

अत एवाग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाजाज्यनिर्वापो मुख्यक्रमात्र पूर्वमनुष्ठीयते, तस्य दुर्बलत्वात्, पाठक्रमात्तु पश्चादनुष्ठीयते, तस्य प्रबलत्वादिति ।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् । प्रवृत्तिक्रमे ह्याश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति, अस्मिंस्तु आश्रीयमाणे सन्निकर्षः।

तद्यथा दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं ततः सान्नाय्यस्य । तद्धर्माश्च केचित्पूर्वमनुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयधर्माः तत आग्नेयानुष्ठानं

---

न्तरसापेक्षेति याज्यानुवाक्यापाठक्रमादिसापेक्षेत्यर्थः । अस्य प्रतिपत्तौ क्रमे वाऽन्वयः । मात्रेत्यस्य विवरणं निरपेक्षेति । पूर्वम् अग्नीषोमीयनिर्वापात्पूर्वम् । प्रवृत्तिक्रमे कतिपयाङ्गक्रमादितरपदार्थक्रमरूपे प्रवृत्तिक्रमे । प्रधानविप्रकर्ष इति । अङ्गप्रत्यासत्त्यपेक्षया प्रधानप्रत्यासत्तेरभ्यर्हितत्वेन सजातीयाङ्गविप्रकर्षः सह्य इति भावः । अस्मिन् मुख्यक्रमे । तदिति प्रवृत्तिक्रममुख्यक्रमाश्रयणनिबन्धनप्रधानविप्रकर्षसन्निकर्षसत्त्वमित्यर्थः । दर्शपूर्णमासयोरिति दर्श इत्येतावदलम् । सान्नाय्यस्येति । अनुष्ठानमिति विभज्यानुषङ्गः । दधिपयोयागयोः सम्प्रतिपन्नेन्द्रदेवताकत्वेन युगपदनुष्ठानादविशेषेण सान्नाय्यस्येत्युक्तिः । तद्धर्माः सान्नाय्यधर्माः । केचित् शाखाहरणदोहनादयः । पूर्वं आग्नेयधर्मानुष्ठानात्पूर्वम् । सर्वे प्रयाजशेषाभिघारणहविरासादनादयोऽपि । यद्यनुष्ठीयेरन् तदेति सम्बन्धः । मध्ये तत इत्यादिकं वक्ष्यमाणविप्रकर्षदर्शनार्थमुक्तम् । ननु मुख्यक्रमानुसाराच्छाखाहरणादीनामपि पश्चादेवानुष्ठानमस्तु अन्यथा

क्षतः सान्नाय्यानुष्ठानं तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात् ।

यदा तु सान्नाय्यधर्माणां केषांचित् पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति आग्नेयधर्माणां स्वप्रधानेन सह सान्नाय्यधर्मैर्व्यवधानात् सान्नाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः । तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् ।

सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः ।

---

विप्रकर्षादित्यत्र अनुष्ठानेपीत्यन्तमुक्तम् । ततोऽपि प्रबलेन पाठक्रमेण तेषां प्रागेवानुष्ठेयत्वात्तावन्मात्रविप्रकर्षः सोढव्य इति भावः ।

प्रवृत्त्या क्रमं निरूपयति सहेति । सहप्रयुज्यमानेषु एकप्रयोगविधिपरिगृहीतेषु । अनेन प्रधानानां भिन्नप्रयोगविधिगृहीतत्वे तत्तदङ्गविशिष्टतत्तत्प्रधानस्य पृथक्पृथगेवानुष्ठानेन तत्र विभिन्नप्रधानाङ्गसाहित्याभावान्न प्रवृत्तिक्रमापेक्षेति दर्शितम् । आरादुपकारिणां सर्वप्रधानोद्देशेन तन्त्रेणैवानुष्ठानान्नावृत्त्यपेक्षेति सन्निपातिनामिति । द्वितीयादीत्यादिना तृतीयादिपरिग्रहः । स प्रवृत्तिक्रम इति । अत्र कतिपयाङ्गक्रमादितरपदार्थक्रमः प्रवृत्तिक्रम इत्येतावदेव विवक्षितम् । अन्यत्सर्वं वक्ष्यमाणोदाहरणस्थितिमनुरुध्य । एवञ्च प्राक् सान्नाय्यदोहनादयः पश्चादाग्नेयनिर्वापादय इति प्रवृत्त्यनुसारेण प्रथमतः सान्नाय्यहविरासादनादेः पश्चादाग्नेयसम्बन्धिन इति क्रमं कञ्चिदापाद्य तस्य प्रवृत्तिक्रमत्वोक्तिः सङ्गता भवति । अन्यथा पुनर्दोहननिर्वापादेर्भिन्नाभिन्नत्वेनावृत्त्यभावादावृत्त्यानुष्ठान इत्यादिक-

यथा प्राजापत्याङ्गेषु। प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः। अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पादनीयम्।

तत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन् कालेऽनुष्ठानादुपपद्यते साहित्यम्। तदङ्गानां चैकस्मिन् कालेऽनुष्ठानमशक्यम्। न ह्यनेकेषां पशूनामुपाकरणमेकस्मिन् काले कर्तुं शक्यम्।

---

मसङ्गतं स्यादिति दिक्। प्राजापत्याङ्गेष्विति। सप्तदश प्राजापत्यान् पशूनालभत इति विहितानां प्राजापत्ययागानां पशुद्वाराऽङ्गेषूपाकरणादिष्वित्यर्थः। प्राजापत्यानां प्रत्येकं प्रयोगविधिभेदे वा तेषां तदैक्येऽपि तदङ्गानां प्रयोगविधिपार्थक्ये वा सति अङ्गसाहित्याभावेन प्रवृत्तिक्रमासम्भवात्साङ्गसर्वप्रधानप्रयोगविधेरैक्यं दर्शयति। प्राजापत्या हीति। तृतीयानिर्देशादित्यादि। तृतीयायाः करणत्वार्थकत्वेन यागा विधेया भवन्ति। तत्र च करणत्वस्य साङ्गनिष्ठत्वेन सेतिकर्तव्यताका एव विधेयाः। एवं विहितानामङ्गप्रधानानामेककालकत्वमपि वैश्वदेव्युत्तरकालं साङ्गसर्वप्रधानैकप्रयोगविधायिनाऽनेन वाक्येनावगम्यत इत्यर्थः। अतः एककालकत्वेन विहितत्वात्। तेषां तदङ्गानां चेति तेषां परस्परं तदङ्गानां परस्परं तथा तेषां तदङ्गानां चेत्यर्थः। अस्य साहित्यस्य यौगपद्यरूपत्वे प्रवृत्तिक्रमासम्भवाद्विविनक्ति तत्रेति। तत्र प्राजापत्यानां तदङ्गानां च मध्ये। संप्रतिपन्नेति एकेत्यर्थः। अनुष्ठानादिति। यागानेकत्वेऽपि सर्वद्रव्यसमाहारेण प्रजापतय इमे न ममेति युगपदेव तत्तद्द्रव्यकसर्वयागव्यक्त्युत्पादने बाधकाभावादिति भावः। नैवमङ्गसाहित्यं यौगपद्यरूपमित्याह तदङ्गानां चेति। चस्त्वर्थे। अनावर्तनीयत्वे प्रवृत्तिक्रमस्य दुर्वचत्वादावृत्तिमुपपादयति न हीति। सर्वत्र पशुषु, क्रमेणेति शेषः।

अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात्सम्पाद्यम्—एकस्योपाकरणं कृत्वाऽपरस्योपाकरणमिति ।

अतः प्राजापत्येषु एकं पदार्थं सर्वत्रानुष्ठाय द्वितीयः पदार्थोऽनुष्ठेयः । तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित् पशोरारभ्य कर्तव्यम् । द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोऽनुष्ठितः तेनैव क्रमेणानुष्ठेयः, प्रयोगविध्यवगतस्य मिथोऽङ्गसाहित्यस्योपपत्तये ।

प्रयोगविधिना हि दैक्षे तदङ्गानामुपाकरणनियोजनादीनां मिथः साहित्यमानन्तर्यापरपर्यायं विहितम् । तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तम् । तस्य प्राणिद्रव्यकत्वेन दैक्षविकृतित्वात् । सवनीयाच्चैकादशिनेषु प्राप्तं सुत्याकालत्वसामान्यात् । तेभ्यश्च प्राजापत्येषु प्राप्तं गणत्वसामान्यात् ।

प्राजापत्येषु च प्रतिपशु यागभेदाच्चोदका भिद्यन्ते । अत-

---

ननु प्राजापत्येषु कथमुपाकरणादिप्राप्तिः ? अतिदेशादिति चेत् तर्हि तदनुष्ठानमपि प्रकृत्यनुसारेण भविष्यतीति किमत्र विकृतौ प्रवृत्तिक्रमरूपप्रमाणकल्पनयेत्यत्र कृत्स्नमुपपादयति प्रयोगविधिना हीति । दैक्षे 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेते'ति दीक्षापदघटितवाक्यविहितेऽग्नीषोमीये । ननु दैक्षवत्सवनीयोऽपि सान्नाय्यप्रकृतिक एव । न हि भिक्षुको भिक्षुकान्तरं याचते तत्राह तस्येति । सादृश्याधिक्यात् तत्प्रकृतिकत्वमेव युक्तमिति भावः । एकादशिनेष्विति । आग्नेयः कृष्णग्रीव इत्यादिविहितेष्वेकादशपशुयागात्मकेषु । सुत्येति सुत्याकालकर्तव्यत्वरूपसाधारणधर्मवत्त्वादित्यर्थः । गणत्वसामान्यात् उभयेषामपि पशुयागसमुदायान्तर्गतत्वरूपसाजात्यात् । ननु गणस्य गणादतिदेशे उपाकरणगणो नियोजनगणश्च प्राप्स्यति । तत्र गणस्य गणानन्तर्यमित्येव लभ्यते । न पुनर्यत्रोपाकरणं कृतं तद्गतनियोजनस्य तदानन्तर्यमिति ; तत्राह प्राजापत्येषु चेति ।

श्चोदकात्तत्तत्पश्वङ्गभूतानामुपाकरणनियोजनादीनां साहित्यमानन्तर्यापरपर्यायं प्राप्तम् । अत एकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात्कर्तव्यत्वेन प्राप्तम् । तत्तु न क्रियते, प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः ।

अत एकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव कर्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते । प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोडशसु उपाकरणमेव क्रियते । कृते तु तेषूपाकरणे प्रथमपशोर्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्यम् ।

अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्यम् ।

एवं च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति । अन्यथा केषांचिदत्यन्तव्यवधानं केषांचिच्चाव्यवधानं स्यात् । तच्च न युक्तम् ।

---

न हि गणत्वं विकृतितावच्छेदकम् । न वा प्रकृतावपि गणस्य किञ्चिदङ्गत्वम् । प्रत्येकमेव तु करणस्येतिकर्तव्यताकांक्षेति प्रत्येकमेवातिदेशः कल्प्यत इति एकैकस्मिन् पशावेकैकस्योपाकरणस्यैकैकस्य नियोजनस्य च साहित्यमावश्यकमित्यर्थः । ननु तर्हि प्राजापत्येषु सर्वत्रोपाकरणमनुष्ठाय नियोजनमनुष्ठेयमिति विरुध्यते तत्राहात इति । प्रत्यक्षेति । प्रत्यक्षवचनावगतं यत् सर्वपशुष्वेकैकाङ्गसाहित्यं तत्सिद्ध्यभावप्रसङ्गादित्यर्थः । अत इत्यस्य उपाकरणमेव क्रियत इत्यनेनान्वयः । तदन्तमेकं वाक्यम् । प्रमाणाभावादिति । प्रकृतितो ह्यानन्तर्यं नियोजनस्य प्राप्तम् । तच्च यद्यपीह समनन्तरक्षणवृत्तित्वरूपं न सम्भवति ; अथापि प्रत्यक्षावगताङ्गसाहित्यात्राधाय यावत्क्षणविलम्ब आवश्यकस्तावद्विलम्ब एव सह्य इति षोडशक्षणानन्तर्यरूपमेव तद्भवति । न त्वधिकम्, न च न्यूनमिति भावः ।

तस्माद्येन क्रमेण प्रथमः पदार्थोनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः। तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः।

---

तन्त्रप्रसङ्गानिरूपणादाह संक्षेपत इति।

चतुर्थं विधिं निरूपयति फलेति । ननु पश्वादिरूपफलस्वाम्यस्य पुंसि सम्भवेऽपि स्वर्गादिरूपतत्स्वाम्यं न तस्मिन् । तस्य सुखरूपस्य देयद्रव्यत्वरूपस्वत्वाभावादत आह फलेति। अधिकार उद्देशः। कर्म पुरुषमधिकरोतीत्यस्य कर्म तमुद्दिशतीत्यर्थः । अधिकरोति उपर्यवस्थापयति स्वामिनं करोतीत्यप्याहुः । अन्ततः फलभोक्तृत्वमधिकारः । तस्य तत्राधिकारो नाम तन्निष्ठं तज्जन्यफलभोक्तृत्वम् । अत्र चिन्त्यते—कर्म पुरुषमधिकरोतीति प्रयोगानुसारेणाधिकारशब्दार्थोक्तिर्न घटते । तत्र धातोः स्वामीकरणस्य फलभोक्तृत्वापादनस्यैवार्थतया विवक्षितत्वेन घञन्ताधिकारशब्देन पाकशब्देनेव तावत्पर्यन्तार्थस्यैव कथनावश्यकतया कर्मणि पुंसोऽधिकारः, कर्मण्यधिकारी पुरुष इति पुरुषस्य तत्र कर्तृत्वानुभवस्यापलापप्रसङ्गात् । अतः पुरुषोऽधिकरोतीति प्रयोग एवानुसर्तव्यः । तत्र च धातोः स्वामित्वं फलभोक्तृत्वं नार्थः, तथा सति तस्य भाविन इदानीमभावेन वर्तमानकालबाधापत्तेः । न च फलभोगसमानाधिकरणकृतिर्धात्वर्थः स चेदानीमक्षत इति वाच्यम् । येषां मते नित्यादौ न किमपि फलम् तेषां मते नित्यादावेवंविधाधिकारस्य दुर्वचत्वात् । उभयसंमतैकविधार्थपरत्वस्योचितत्वात् । यस्य यत्राधिकारः स तत्करोतीति कृतिविलक्षणस्य तत्प्राग्भाविन एवाधिकारपदार्थत्वप्रतीतेश्च । अतः पुरुषः कर्मण्यधिकरोति, कर्म कर्तुं योग्यो भवतीत्यर्थः । कर्मानुष्ठानयोग्यता च शक्तिविद्याफलार्थित्वादिसाकल्यमिति स एवाधिकारः । तद्धटकफलार्थिता-

फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च यजेत स्वर्गकाम इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेदित्यादिभिस्तु गृहदाहादौ निमित्ते

---

बोधकत्वाच्च फलवाक्यस्याधिकारविधित्वमिति । लक्ष्यं दर्शयति स चेति । एवंरूप इति सर्वफलवाक्याभिप्रायम् । ननु फलभोक्तृत्वरूपाधिकारवाचकपदाभावात् कथमस्याधिकारविधित्वमित्यत्रोपपादयति अनेनेति । स्वर्गमुद्दिश्येति षष्ठाद्याधिकरणार्थः संगृहीतः । तथा च स्वर्गोद्देश्यकत्वबोधनादर्थसिद्धं तद्भोक्तृत्वमिति भावः । एवं काम्यकर्मविधायिनां वाक्यानामधिकारप्रतिपादकत्वमुक्तम् । काम्यत्वं कामनाप्रयोज्यानुष्ठानविषयत्वम् । नैमित्तिकानुष्ठानस्य च निमित्तप्रयोज्यत्वेन फलेच्छाप्रयोज्यत्वाभावान्नातिव्याप्तिः । स्वविध्युद्देश्यतावच्छेदककिञ्चिद्धर्मव्यापकस्वानुष्ठानपूर्वकालिककामनाविषयत्वकत्वं वा काम्यत्वम् । काम्यानुष्ठाने फलापेक्षाया नियतत्वाल्लक्षणसमन्वयः । लक्ष्यमेव स्वपदार्थः । ननु यस्याहिताग्नेरित्यादिविधिविहितकर्मकर्तृष्वयमधिकारो न भवति, तज्जन्यफलाभावात् । न च फलाश्रवणेऽपि विश्वजिन्न्यायेन स्वर्गः कल्प्यत इति वाच्यम् ; तथा सति यस्याहिताग्नेः स्वर्गोऽनिष्टस्तेनेष्ट्यकरणे निमित्तश्रुतिव्याकोपापत्तेः । निमित्तत्वं ह्यवश्यानुष्ठापकत्वम् । तदकरणे प्रत्यवायो भवेदिति स मा स भूदित्येव प्रवृत्तिर्वाच्या । न पुनः फलं किञ्चित् । अतो नायमधिकारस्तत्र भवतीत्यत्राह यस्येति । तुकार उक्तवैलक्षण्यस्य विश्वजिन्न्यायासम्भवस्य च द्योतनाय । निमित्त इति । ननु निमित्ताङ्गीकारे हि फलाभावः । अत्र यस्येत्यादि स इत्यन्तेन स्वतःसिद्धगृहदाहविशिष्टस्य पुंसः कर्तृत्वेन विधिरस्तु । तथा चेदृशाहिताग्निर्विश्वजिन्न्यायात्स्वर्गं कामय-

कर्मविदधाद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते।

तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः। अधिकारिविशेषणं च तदेव यत्पुरुषविशेषणत्वेन श्रुतम्। अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधताऽपि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते किं तु राज्ञः सतस्तत्कामस्य।

किञ्चित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति। यथाऽध्ययनविधिसिद्धा विद्या, अग्निसाध्येषु च कर्मसु आधानसि-

---

मान इदं कुर्यादित्येवार्थ इति चेन्न यच्छब्दश्रवणे हि तच्छब्दावधिप्रतिपादितस्यार्थस्यानुवादः स्वतः सिद्धः। अनूद्यमानस्योद्देश्यत्वं च युक्तम्। तत्रेप्सितत्वरूपोद्देश्यत्वासम्भवेऽपि निमित्तत्वरूपं तदाश्रीयत इति निमित्तमिदमिति। निमित्तवत इत्यनेनात्र निमित्तं प्रवृत्तिप्रयोजकमिति सूचितम्। पापक्षयरूपफलेति। विधिसहकृतनिमित्तबलादेव प्रवृत्तिसिद्धावपि भावनात्वाविशेषादत्रापि भाव्यापेक्षायां फलं स्वीक्रियते। तच्च 'धर्मेण पापमपनुदती'ति शास्त्रबलात् पापक्षयरूपम्। अत एव शास्त्रविरोधान्न प्रत्यवायप्रागभावरक्षणं फलमिति भावः।

एवं फलकामस्य निमित्तवतो वा फलस्वाम्यमित्युक्तौ अत्रैवर्णिकेऽपि फलकामत्वादिसम्भवादधिकार आपद्यते तत्राह तच्चेति। नन्वधिकारिण उद्देश्यत्वेनान्वयात् तद्विशेषणस्य पुंस्त्ववदविवक्षितत्वप्रसङ्गेन कथं विशेषणत्वसिद्धिरिति शङ्कां परिहर्तुमाहाधिकारीति। पुरुषेति कर्त्रित्यर्थः। कर्तृविशेषणत्वेन श्रुतमेव राजत्वादि अधिकारिविशेषणमित्युच्यते। विधिवाक्ये च पुंसः कर्तृत्वेन विधेयत्वात्कर्माङ्गत्वान्न श्रुतस्य विशेषणस्याविवक्षा। एवं च राजत्वादिविशेषणविशिष्टकर्त्रङ्गकस्यैव फलजनकत्वात्तादृशविशेषणविशिष्टपुरुषोद्देशेनैव कर्मविनियोगः कर्तुं शक्य इति तस्यैव फलस्वाम्यं यस्येमानि विशेषणानीति भावः। एवं श्रुतं साधयित्वाऽश्रुतं साधयति किञ्चित्त्विति। अध्ययनेति। स्वाध्यायोऽध्येतव्य इति वि-

द्याग्निमत्ता, सामर्थ्यं च । एतेषां पुरुषविशेषणत्वेनाश्रवणेऽप्यधिकारिविशेषणत्वमस्त्येव । उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेरभावेनाध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः । अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः ।

अत एव च शूद्रस्य न यागादावधिकारः । तस्याध्ययनविधि-

---

धिनाऽर्थज्ञानोद्देशेन मीमांसारूपेतिकर्तव्यताविशिष्टस्वाध्यायाध्ययनविधानात् तथाविधाध्ययनजनितमर्थज्ञानमित्यर्थः । क्वाचित्कं विशेषणान्तरं दर्शयति अग्नीति । यदाहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयतीति विधिबलादपूर्वविशेषविशिष्टाग्न्यपेक्षेष्वग्निहोत्रदर्शपूर्णमासादिकर्मस्वित्यर्थः । सामर्थ्यं चेति । अस्य सर्वसाधारणत्वेऽपीतः पूर्वमग्निनिर्देशस्तस्य विद्यावद्विधिसंपाद्यत्वाद्वक्ष्यमाणसौकर्याय चेति ध्येयम् । नन्वश्रुतस्याधिकारिविशेषणत्वकल्पनमप्रामाणिकम् । ज्ञानाद्यभावेऽनुष्ठानासम्भवात् कल्पनमिति चेत् तथाऽपि येन कर्म कर्तव्यम् तेन विद्यादिकमपि संपाद्यमित्येवं कल्पनमुपेक्ष्य यो विद्यादिमान् स एव कर्म कुर्यादित्येवंपर्यवसायि अधिकारिविशेषणत्वकल्पनमयुक्तमेवेत्यत्राहैतेषामिति । अभावेनेति । ज्ञानापेक्षायां सत्यां यावत्तदाक्षिप्यते तावदेवाध्ययनविधिसिद्धज्ञानवतो लाभेनाकांक्षाशान्त्याऽऽक्षेपशक्तेरकल्पनादिति भावः । आधानेत्यादि । विलक्षणाग्नेराधानैकनिष्पाद्यत्वात्तथाविधाग्न्यपेक्षायामग्निमत्पुरुषलाभे स्वातन्त्र्येणाक्षेपकल्पना न युज्यत इति भावः । एवं चेदृशपुरुषलाभेनैव कर्मापेक्षायाः शान्तत्वात्स्वतःसिद्धविद्यादिमत्पुरुषमात्रे कर्माधिकारपर्यवसानादधिकारिविशेषणत्वं युक्तमिति । एवं चाधिकार्यनधिकारिव्यवस्था सिद्ध्यतीत्याह अत एवेति । विधीनामग्निविद्याक्षेपकल्पनाप्रतिबन्धेन स्वतस्सिद्धाग्निविद्याशून्येष्वप्रवृत्तत्वादित्यर्थः । कामनासत्त्वेऽप्येतद्विशेषणाभावादनधिकार इत्येवकाराभिप्रायः । अथ वा शूद्राधिकारनिषेधकप्रमाणपरिशीलनपर्यन्तश्रमोऽपि नापेक्षितः उक्तरीत्यैव

सिद्धज्ञानाभावात्, आधानसिद्धाग्न्यभावाच्च, अध्ययनस्योपनीताधिकारत्वादुपनयनस्य चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिना त्रैवर्णिकाधिकारत्वात्। आधानस्यापि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैवर्णिकाधिकारित्वात्।

---

तन्निवृत्तेरित्येवकारेण सूच्यते। ननु स्वाध्यायोऽध्येयतव्य इत्यत्र जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्र च विशेषाश्रवणात्कथं शूद्रस्य तदभावस्तत्राहाध्ययनस्येति। उपनीताधिकारत्वादिति। अध्ययनविधेः कर्त्राकांक्षायां तमध्यापयीतेत्यनेनोपनयनसंस्कृतस्य कर्तृत्वेन विनियोगात्तेनैवाकांक्षाशान्त्या ऽनुपनीतकर्तृनाक्षेपादिति भावः। ननु शूद्र उपनीत एव सन्नध्ययनेऽधिकुर्यात्तत्राह उपनयनस्येति। आदिना एकादशे राजन्यस्य द्वादशे वैश्यस्येति वाक्यपरिग्रहः। गुरुसमीपे शिष्यानयनरूपोपनयनस्य नियमेनाप्राप्त्या त्रैवर्णिकसंस्कारत्वेन विहितत्वादिति भावः। वसन्त इति आदिना-ग्रीष्मे राजन्यः शरदि वैश्य इति वाक्यपरिग्रहः। न जातपुत्रवाक्यमाधानविधायकम् तथा सति वसन्तादिवाक्ये कालकर्तृभयस्य प्राप्ताधानानुवादेन विधौ वाक्यभेदात्। नन्वेवं जातपुत्रवाक्येऽपि विशेषणद्वयार्थविधानात् तुल्यो वाक्यभेदः; न तुल्यः, वाक्यत्रयवाक्यभेदापेक्षया एकवाक्यभेदस्य युक्तत्वात्। वस्तुतस्तत्र वयोऽवस्थाविशेषलक्षणान्न वाक्यभेदोऽपि। किं चैवं वसन्तादिवाक्ये उभयविध्यङ्गीकारेऽपि जातपुत्रवाक्यविहिताधानस्य ब्राह्मणादिकर्तृलाभेनाकांक्षाशान्त्या शूद्रस्यानाक्षेपान्न तस्याधानम्। न च ब्राह्मणादेः कर्तृत्वेन न विधिः, तस्मिन् कर्तरि निमित्ते कालमात्रविधिरिति वाच्यम्, कर्तरि निमित्ते कालविधिः, काले वानिमित्ते कर्तृविधिरिति विनिगमनाविरहेणोभयस्य विधेयत्वात्। अतः शूद्रस्याश्रवणान्नाधानमिति। नन्वाधानाध्ययनयोस्त्रैवर्णिकाधिकारत्वोक्त्या 'शूद्रस्य न यागाद्यावधिकारः' इत्यत्र शूद्रपदं त्रैवर्णिकेतरसामान्यलक्षकमिति

यद्यपि च वर्षासु रथकारोऽग्नीनादधीतेत्यनेन रथकारस्य सौधन्वनापरपर्यायस्याधानं विहितम्, योगाद्रूढेर्बलीयस्त्वात्, तथाऽपि नास्योत्तरकर्मस्वधिकारः। अध्ययनविधिसिद्धज्ञानाभावात्।

न च तदभावे आधानेऽपि कथमधिकारः, तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम्। तस्याध्ययनविधिसिद्धज्ञानाभावेऽपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिनाऽऽधानमात्रौपयिकज्ञानाक्षेपणात्। अन्यथा एतस्यैव विधेरनुपपत्तेः। अतश्च रथकारस्याधानमात्रेऽधिकारेऽपि नोत्तरकर्मस्वधिकारः विद्याभावात्।

एवं च तदाधानं नाग्निसंस्कारार्थम्। संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात्, किं तु तदाधानं लौकिकाग्निगुणकं विश्वजि-

---

ज्ञायते। तन्न युक्तम्; रथकारस्य त्रैवर्णिकेतरस्याधिकारसम्भवात्। तस्याधानस्य प्रामाणिकत्वात्, अत एवाध्ययनस्याप्यावश्यकत्वादित्यत्राह यद्यपीति। उत्तरकर्मसु आधानोत्तरं कर्तव्येषु। तत्साध्यत्वात् ज्ञानसाध्यत्वात्। आधानमात्रेति। विधिर्ह्याक्षिपन् यावता स्वस्यानुपपत्तिः परिह्रियते तावदेवाक्षिपेत् नोपरि। न हि यदेवार्थज्ञानमाधानकारकं, तदेवोत्तरकर्मणामपि, अर्थस्य भिन्नत्वादिति। अन्यथा तावदाक्षेपकत्वस्याप्यभावे। ननूत्तरकर्मस्वनधिकारे आधानमेव न स्यात्। तद्धि ब्राह्मणाद्याधानवदग्निसंस्कारार्थम्। न च संस्कृतस्याग्नेः कश्चिदुपयोगोऽस्ति। अत उत्तरकर्मानुष्ठानाय सर्वविधाक्षेप इत्यत्राह एवं चेति। आधानातिरिक्तविषयकज्ञानाक्षेपकत्वाभावे च सतीत्यर्थः। तत् रथकारकर्तृकम्। किमर्थं तर्हि? तदाह किं त्विति। नन्वाधानमग्निसंस्कारार्थमेव द्वितीयया स्यात्। अग्नयस्तु स्वर्गफला भविष्यन्तीति शङ्कापनुत्तये पुनस्तदाधानमिति निर्देशः। इह हि भावनायां स्वर्गः फलत्वेनान्वेति। तत्र समानपदश्रुत्याऽऽधानस्य करणत्वेनान्वये सति कथमग्न्युद्देश्यकभावनायां तदन्वयः।

न्नयायेन स्वर्गफलं च स्वतन्त्रमेव प्रधानकर्म विधीयते । अग्नीनिति च द्वितीया सक्तून् जुहोतीतिवत् तृतीयार्था इति ।

प्रकृतमनुसरामः । तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावाच्च नोत्तरकर्मस्वधिकार इति ।

---

किञ्चैवं सत्याधानेनाग्निष्वदृष्टं तैश्च स्वर्गसाधनायादृष्टान्तरमित्यनेकादृष्टकल्पनाप्रसङ्गः । अपि च प्रकृतभावनाया अग्न्युद्देश्यकत्वे स्वर्गार्थमग्निविधानाय विध्यन्तरं कल्पनीयमिति गौरवम् । अत आधानमेव स्वर्गार्थमिति । लौकिकेति । अग्न्युद्देशेनाधानविधाने ह्यग्निष्वदृष्टोत्पत्त्याऽदृष्टविशेषावच्छिन्नाहवनीयादिरूपेण वैदिकत्वम् । अन्यथा लौकिकत्वमेवेति । अग्निगुणकमग्नयङ्गकम् । स्वर्गफलमिति बहुव्रीहिः । स्वतन्त्रम् फलेच्छायां सत्यामनुष्ठेयम्, न पुनराधानान्तरवन्नित्यम् । ननु रथकारशब्दशक्यार्थस्येव द्वितीयाशक्यार्थस्योद्देश्यत्वस्य त्यागायोगात् संस्कृताग्न्युपयोगायोत्तरकर्मज्ञानाक्षेप आवश्यक इत्यत आह इतिवदिति । ईप्सितानीप्सितसाधारणसाध्यत्वार्थिका द्वितीया, न तूद्देश्यत्वार्थिका । तत्राग्नीनां प्रमाणान्तरेण फलसम्बन्धानवगमादीप्सितसाध्यत्वाभावात्सक्तूनामिवानीप्सितसाध्यत्वमेव । एवञ्च भावनायामीप्सितस्य स्वर्गस्य साध्यत्वेनान्वये भावनाया एककर्मकत्वेनानीप्सितसाध्यत्वेनाप्यन्वयासम्भवात् करणत्वपरत्वमेष्टव्यमिति भावः । ननु रथकाराग्निष्वपूर्वाभावादाहवनीयादिशब्दवाच्यत्वाभावात् 'नक्तं गार्हपत्यमादधाति दिवाऽऽहवनीयमिति तदुद्देशविहिता धर्मा न प्राप्नुयुः । मा कामं प्रापन् । न त्वेतावताङ्गाभावः । आधानान्तरवत्प्रकरणग्राह्याङ्गानपायात्; इतीदमवदन्नाह प्रकृतमनुसराम इति । अत्र खण्डदेवः ब्राह्मणाद्यग्नीनामिव रथकाराग्नीनामप्याधानसंस्कार्यत्वमेव । संस्कृतानां कुत्रोपयोग इति चेत् आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्यनेनाहिताग्निदाहे । दाहश्चायमामुष्मिकफलार्थ इति प्राह ।

नन्वेवं स्त्रिया अधिकारो न स्यात् । तस्या अध्ययनप्रतिषेधेन तद्विधिसिद्धज्ञानाभावात् । न च नास्त्येवेति वाच्यम् । यजेत स्वर्गकाम इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वेन ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकारस्य साधितत्वादिति चेत् सत्यम् ।

अधिकारः साधितो न तु स्वातन्त्र्येण, न स्त्री स्वातन्त्र्यमर्हतीत्यादिना तस्य निषिद्धत्वात् । स्वातन्त्र्येण कर्तृत्वे प्रयोगद्वयस्यापि

---

ननु विद्याया अधिकारिविशेषणत्वमयुक्तम् । एतदभावेऽप्यधिकारसद्भावादित्याशङ्कते नन्विति । आधाने स्त्रीसाद्वितीयस्यैवाधिकारादग्निसद्भावादेकाभावं दर्शयति तस्या इति । प्रतिषेधेन 'न स्त्रीशूद्रौ वेदमधीयाताम्' 'स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा' इत्यादिनेत्यादिः । नास्तीति अधिकार इति शेषः । ६—१—२ अधिकरणविरोधादित्याह यजेतेति । उद्देश्यविशेषणत्वेनेति स्वर्गस्येव स्वर्गकामनावतोऽप्यधिकारित्वे नोद्देश्यत्वसम्भवात्पुंस्त्वस्योद्देश्यविशेषणत्वम् । साधितत्वादिति यद्यप्यनन्तराधिकरण एव स्त्रिया अधिकारप्रकारोऽपि व्युत्पादितः अथापि विद्याया अधिकारिविशेषणत्वे तत्र पृथगधिकारपूर्वपक्षो नावतरेत् सहाधिकारसिद्धान्तोऽपि न घटेतेतीह शङ्कितुराशयः । स्त्रियाः किं स्वातन्त्र्येणाधिकार आशंक्यते किं वा सहाधिकार इति विकल्प्याद्यं दूषयति न त्विति । न स्त्रीति । पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे (मनु ९.३.) इत्यादिः । आदिना 'अस्वतन्त्रा धर्मेऽस्त्री'ति गौतमीयपरिग्रहः । ननु धर्मस्य पृथक्स्त्रियानुष्ठानेऽपि तत्र भर्त्रनुमतिरपेक्षितेत्येवंपरा स्मृतिः । अतोऽनुमतायाः पृथगधिकारो भवितुमर्हतीत्याशंकायां स्वातन्त्र्ये श्रुतिविरोधमेव दर्शयति स्वातन्त्र्येणेति । प्रयोगद्वयस्यापीति । पुरुषकर्तृकस्य स्त्रीकर्तृकस्य च प्रयोगस्येत्यर्थः । यदङ्गलोपाद्वैगुण्यापत्तिस्तदङ्गलोपं दर्शयति

वैगुण्यापत्तेश्च । यजमानप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपात्, पत्नीप्रयोगे च यजमानकर्तृकाज्यावेक्षणादिलोपात् । अतो दम्पत्योः सहाधिकारः । सहाधिकारत्वेन यजमानविद्ययैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारेऽनुपपत्तिः ।

'पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु' इति वचनेन स्त्रिया अधिकारनिर्णयाच्च । निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोऽपि 'एतया निषादस्थपतिं याजयेत्' इति वचनान्निषादेष्ट्याम् ।

---

यजमानेति । आज्यावेक्षणम् आज्यं पत्न्यवेक्षते यजमानश्चेति विहितम् । आदिना सपत्नीयहोमातिथ्यानिर्वापादौ पत्नीकर्तृकान्वारम्भस्य आद्यन्तेरण सुत्याधारशुक्रग्रहादौ यजमानान्वारम्भस्य च ग्रहणम् । ननु यजमानो यां कांचित्परिक्रीय स्वप्रयोगेवेक्षणं संपादयिष्यति, तथा पत्न्यपि यं कञ्चिदितीदं निरसितुमवेक्षणकर्त्रोः पत्नीति यजमानेति च निर्देशः । न हि परिक्रीता पत्नी भवति । पत्नी हि यज्ञस्वामिनी । एवं परिक्रीतो न यजमान इति । द्वितीयमङ्गीकरोति अत इति । तर्हि कथं विद्याभावस्तत्राह सहेति । सह ययोरधिकारस्तौ सहाधिकारौ तत्त्वेनेत्यर्थः । यत्कर्ममध्ये पत्नीयजमानयोः पृथक्पृथक्कर्तव्यतानाम्नानम् तत्रापि सहैवाधिकार इति दर्शयति पाणीति । सहत्वं कर्मास्वित्यनेन स्विभावो मा भूत्; स्वामित्वमपीति दर्शयितुं तथा पुण्यफलेष्विति । पत्न्याः दासवत्क्रीतत्ववचनानि पुनर्भाक्तानि पारतन्त्र्यमात्रपराणीति भावः । नन्वेवं स्त्रिया अधिकारे विद्याया अधिकारिविशेषणत्वं कथमित्यत्राह निषादेति । अस्तु क्वचिद्वचनबलादधिकारः तथाऽप्यन्यत्र सर्वत्र तदावश्यकतेति भावः । विरहिण इति । निषादस्य ब्राह्मणाच्छूद्रायामुत्पन्नस्योपनयनाप्रसक्तेर्निषेधाच्चेति भावः । एतया ऐन्द्रं वास्तुमयं चरुं निर्वपेदिति विहितेष्ट्या । वास्तुमयं वास्तुशाकबीजप्रकृतिकमित्याहुः । ननु नेयं निषादेष्टिः निषादस्थपतिपदस्य निषादानां

निषादस्थपतिशब्दे हि निषादं स्थपतिं चेति कर्मधारयो न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः । (तदपेक्षया कर्मधारयस्य बलीयस्त्वात्) । षष्ठ्यर्थे लक्षणापत्तेः । एतावांस्तु विशेषः—निषादस्याध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्वम् । पत्न्यास्तु तादृशज्ञानाभावेऽपि यजमानेन सहाधिकारात् तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्यसिद्धेर्नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वम् ।

ये तु पत्नीमात्रकर्तृकाः पदार्थाः आज्यावेक्षणादयस्ते ज्ञानं

---

स्थपतिरिति विग्रहेण तस्य निषादाधिपतिपरत्वात् त्रैवर्णिकस्यापि तदाधिपत्यसंभवेन तद्ग्रहणेनैवोपपत्तेरित्यत आह निषादस्थपतिशब्दे हीति । षष्ठ्यर्थ इति । ननु नामार्थयोरभेदेनान्वयो न तु भेदेनेति प्रकृते लक्षणाऽऽश्रीयते । तत्र षष्ठ्यर्थलक्षणायामपि स एव दोषः । षष्ठ्यर्थो हि सम्बन्धः । स आश्रयत्वेनैवोपर्यन्वेतीति । सत्यम् षष्ठ्यर्थसम्बन्धाश्रये लक्षणापत्तेरित्येवाभिप्रेतम् सम्बन्धस्यापि तत्कोटिनिविष्टत्वात्तथोक्तिः । द्वितीयादेः कर्मादिवाचित्ववत् षष्ठ्याः सम्बन्धिवाचितेति मते स्थित्वा वा तदुक्तिः । ननु ज्ञानविरहेऽप्यधिकार इति न घटते अज्ञातस्यानुष्ठानासम्भवात् । न चात्र सहाधिकारः । न चान्यस्य ज्ञानमन्यस्य कर्तृत्वे प्रयोजकमित्यत आह एतावांस्त्विति इतीत्यन्तेन । ज्ञानाक्षेपकत्वमिति । न चैवमप्याधानाभावेनाग्न्यभावात् कथमिष्टिः क्रियतामिति शंक्यम्, यत्र क्वचन होष्यन् स्यात् स पञ्चभूतसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेदिति स्मृत्या सर्वहोमोद्देशेनाग्न्यन्तराभावे लौकिकाग्निविधानेन तत्रेष्टिकरणसम्भवात् । पत्न्यास्त्विति । यथावत्साङ्गप्रत्यवेक्षणादेरेकेनैव ज्ञात्रोपपत्तेर्नान्यस्य तदपेक्षेति भावः । पत्नीमात्रकर्तृका इति । इदं पत्नीयजमानोभयकर्तृकयागादेरप्युपलक्षणम् । तेन तत्रापि पत्न्या ज्ञानवत्त्वं सिद्ध्यति । यागादिकं हि द्रव्यत्यागरूपम् । द्रव्यं चोभयोः स्वम् । अतो नान्यतरत्यागमात्रेण

विनाऽशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियेत इति। तत्सिद्धमध्ययनविधिसिद्धज्ञानस्याधानसिद्धाग्निमत्तायाश्चोत्तरकर्मसु अधिकारिविशेषणत्वमिति।

एवं सामर्थ्यस्यापि अधिकारिविशेषणत्वम्। असमर्थं प्रति विध्यप्रवृत्तेः। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात्। तच्च सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयम्। न त्वङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्मण्यधिकारी। प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः। यथाविनियोगमधिकारात्। यदि हि समर्थं प्रत्येव प्रवृत्तौ कयाचित्

---

तत्र स्वत्वानिवृत्तिरिति। न चैवं यजेतेत्येकवचनानुपपत्तिः। तस्य विद्यादिसर्वविशेषणविशिष्टाधिकार्येकत्वपरत्वादित्यलम्।

अथाश्रुतेषु विशेषणेषु तृतीयस्य तत्त्वं साधयति एवमिति। अग्निविद्यावदित्यर्थः। विध्यप्रवृत्तेरिति। विधिर्हि प्रवर्तनात्मा विध्यसमर्थे पुंसि प्रवर्तमानः प्रवृत्त्यजननात्स्वस्य प्रवर्तनात्वमेव व्याहन्यादिति भावः। अत एवायं न्याय इत्याह आख्यातानामिति। अस्य काम्यनैमित्तिकभेदेन वैलक्षण्यं दर्शयति तच्चेति। अङ्गप्रधानेति तदुभयेत्यर्थः। अङ्गमात्रस्य फलजनकत्वाप्रसङ्गात्तावन्मात्रसमर्थस्याधिकाराप्रसङ्गात्प्रसक्तं प्रतिषेधति नत्विति। फलकामनया प्रक्रान्तस्य प्रयोगमध्ये कामनाविच्छेदे शिष्टगर्हणभिया यथाशक्तिसमापनमस्ति। अत आन्तं कामनानुवृत्ताववायं नियम इति सूचयितुं पुनः काम्ये कर्मणीत्युक्तम्। यद्यपि फलवाक्ये प्रधानमात्रं श्रुतम्, अथाप्यनङ्गस्य करणत्वासम्भवात्साङ्गमेव प्रधानं करणत्वेनान्वेतीति करणीभूतसाङ्गप्रधानसामर्थ्यमेवाधिकारिविशेषणं भवतीत्यभिप्रायेण हेतुमाह प्रधानेति। ननु यावत् प्रधानविधेरङ्गविधिभिरेकवाक्यता तावदेव सामर्थ्यस्याधिकारिविशेषणत्वेनान्वयः स्यात् तथा च प्रधानमात्रसमर्थोऽप्यधिकुर्यादित्यत्राह यथाविनियोगमिति। अङ्गविनियोगमनतिक्रम्य। अधिकारा-

श्रुत्या विरोधः स्यात् तदाऽसमर्थस्याप्यधिकारः स्यात् । न च विरोधोऽस्ति । स्वर्गकामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात् । प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरङ्गवाक्यैकवाक्यतया प्रतिपन्नाङ्गसाहित्यस्य बाधापत्तेः । नित्यवच्छ्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च । अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः ।

नित्यकर्मणां त्वङ्गेषु यथाशक्तिन्यायः । तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्तव्यत्वेन चोदितानि । न च यावज्जीवं केनापि

---

त् अधिकारकल्पनात् । अयं भावः—कर्मणामनुष्ठेयत्वेनावगत्यनन्तरमेवाधिकार्यपेक्षा । सा चावगतिः प्रयोगविधिना । प्रयोगविधिश्च साङ्गप्रधानविषय एकः । साङ्गत्वं च यागस्य विनियोगविध्यवसेयम् । अतोऽङ्गविनियोगानन्तरभाविन्यधिकारप्रतिपत्तिस्साङ्गकर्मसमर्थविषयिणी, न पुनः प्रधानमात्रसमर्थविषयिणीति । नैमित्तिकवैलक्षण्यं दर्शयति यदि हीति । ननु समर्थासमर्थसर्वसाधारणस्वर्गकामपदस्य समर्थस्वर्गकाममात्रपरत्वे विरोध इत्यत्राह स्वर्गेति । विरोधाभावादिति । न हि समर्थो न स्वर्गकाम इति भावः । असमर्थग्रहण एव विरोध इत्याह प्रत्युतेति । बाधापत्तेरिति । असमर्थानुष्ठानसम्पत्तये प्रधानमात्रस्य कामनिष्पादकत्वाङ्गीकारेऽङ्ग प्रवृत्त्यभावेन सर्वत्र तद्बाधापत्तेरित्यर्थः । ननु नास्त्यत्यन्तं बाधः, यथाशक्त्यनुष्ठिताङ्गसहितप्रधानेन फलं भावयेदिति कल्पनादित्यत्राह नित्यवदिति । यथाशक्तिन्यायः यथाशक्त्यनुष्ठानं कर्तव्यमिति न्यायः । एतन्न्यायास्वीकारेऽत्र श्रुतिविरोध इति दर्शयति तानि हीति । यावज्जीवश्रुत्या यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, यावज्जीवमग्निहोत्रं जुहोतीत्यत्र यावज्जीवपदेन । इदं, अहरहस्सन्ध्यामुपासीत, वसन्ते वसन्ते ज्योतिषा यजेतेति वीप्सादेरुपलक्षणम् । ननु स्वर्गकामपदवत् शक्तविषये यावज्जीवग्रहणम् तत्राह न चेति । न हि तादृशो दैवसम्पन्नः कश्चिदस्ति यो यावन्मरणमन्तराया-

साङ्गः प्रयोगः कर्तुं शक्यते। अतो नित्यकर्मसु प्रधानमात्रसम- र्थोऽधिकारी, अङ्गानि तु यावन्ति कर्तुं शक्यन्ते तावन्ति कार्याणी- त्यलं बहूक्त्या, सूरिभिः पराक्रान्तत्वात्।

तत्सिद्धं फलस्वाम्यबोधको विधिरधिकारविधिरिति। तदेवं

---

नुपप्लुतस्सर्वाङ्गोपसंहारेण प्रतिनिमित्तं कर्म कर्तुं प्रभवेदिति भावः। एवं सत्यङ्गविषयशक्तेरनियतत्वेन कदाचित्किञ्चिदङ्गं अन्यदाऽन्यदिति नैकः प्रयोगविधिः शक्यकल्पन इतीदं परिहरन्नुपसंहरति अत इति। तथा च निमित्तसन्निपातकालशक्यानुष्ठानयावदङ्गसहितं प्रधानं कर्तव्यमित्येकरूपेणैव कल्पनात् यावत्पदनिवेशाच्च शक्यपदार्थत्यागे प्रत्यवायलाभान्न दोष इति भावः। ननु केवलं प्रधानमपि न यावज्जीवं कर्तुं शक्यते; आहारविहाराद्यर्थमवकाशस्यावश्यकत्वात्। अथाग्निहोत्रे सायंप्रातःकालयोर्दर्शादौ चामावास्यादेः श्रवणात्तत्तद्विशेषकालावच्छिन्नजीवनोदेरेव निमित्तत्वाङ्गीकारान्न सर्वदा नैमित्तिकानुष्ठानप्रसङ्ग इति चेत् एवं सङ्कोचावश्यकत्वे यदा शक्तौ सत्यामुक्तनिमित्तसद्भावस्तदैवानुष्ठेयमिति कल्पनान्न सर्वैरनुष्ठानप्रसङ्ग इति। नैवम्। कालस्याङ्गत्ववन्निमित्तत्वस्यापि सद्भावाद्युक्तो निमित्तकोटिप्रवेशः, नैवं शक्तेरिति। किं च निमित्तं प्रधानवाक्य एव श्रूयते नाङ्गवाक्ये। अतो निमित्तं प्रधानस्यैव प्रयोजकम्। प्रधानं तु स्वगतावश्यानुष्ठेयत्वाविरोधेनाङ्गानुष्ठानप्रयोजकम्। न च साङ्गप्रधाने निमित्तान्वयः। अङ्गान्वयौपयिक्या इतिकर्तव्यताकांक्षाया भाव्याकांक्षानन्तरत्वात् भाव्यस्य च पापक्षयस्य तत्त्वेनान्वयस्य नैमित्तिकज्ञानाधीनत्वात्, प्रधान एव पूर्वं निमित्तान्वयात्। अपि च शास्त्रप्रामाण्यादपि काम्यनैमित्तिकवैषम्यं स्वीकर्तव्यम्। इत्थं विस्तरमकुर्वन्नाह इत्यास्तामिति। एवं चतुरो विधिभेदान्निरूप्य वक्तव्येषु प्रथमं विधिमुपसंहरति तदेवमिति॥

निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम्।

मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थं दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात्। न च दृष्टस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानमनर्थकम्। मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात्—

---

धर्मलक्षणसमन्वये स्थितो भावनं विशदयन्निहांशकम्।
अत्र लम्भयितुमर्थवादतः सार्थतां वदति सर्वतः श्रुतौ॥
इत्थं वेदं पञ्चधाऽऽदौ विभज्य त्रेधाऽत्राद्यं व्यूह्य पश्चाच्चतुर्धा।
तत्सार्थक्यं विस्तरेणोपवर्ण्य व्याचिख्यासत्येष भागं द्वितीयम्॥

**मन्त्राणामिति**। चो विधिसमुच्चये। **प्रयोगेति**। प्रयोगोऽनुष्ठानं **तत्समवेतस्य** तत्सम्बन्धिनोऽर्थस्य **स्मारकत्वेन**; अनुष्ठानौपयिकार्थस्मृतिजनकत्वेनेति यावत्। ननु यदि मन्त्राणामर्थवत्त्वं वक्तव्यम्। तर्हि स्मरणमादाय न भवति। तस्यान्यथाऽपि संभवात्। अतोऽध्ययनगृहीतमन्त्राणामुच्चारणार्थत्वमेव। तच्चोच्चारणमदृष्टार्थमिति शङ्कां परिहरति **न त्विति**। मन्त्राणां सिद्धरूपतया व्यापारावेशमन्तरा फलजनकत्वासंभवाद्व्यापारापेक्षायां तस्यैव धात्वर्थतया स्थितस्य व्यापारस्य फलार्थत्वं युक्तम्। मन्त्रास्तु तच्छेषभूता इति तदुच्चारणमित्युक्तम्। **अन्याय्यत्वादिति** सामान्यतोऽवगतं प्रयोजनवत्त्वं दृष्टप्रयोजनविशेषबाधसहकृतमेवादृष्टकल्पकं भवतीति भावः। **दृष्टस्यात्र** प्रयोजनत्वासम्भवाभिमानं निरस्यति **न चेति**। **अनर्थकमित्यनेन** सम्बध्यते। **प्रकारान्तरेणो**पायान्तरेण ध्यानोपदेशादिना। **आम्नानमिति** उपायान्तराणामिव मन्त्राणामपि कदाचित्संभवाभिप्रायेण तदाम्नानमिति चेदेवमपि नित्यवदाम्नानविरोध इति भावः। मन्त्राणामुच्चारणार्थत्वम्, उच्चारणस्यादृष्टार्थत्वमित्यपेक्षया मन्त्राणामर्थाभिधानार्थत्वमभिधानस्य स्मरणेनानुष्ठानार्थत्वमिति दृष्टपरम्परैव युक्ता। स्मृत्युद्देशेन मन्त्रविधानाय कल्पनीयस्य विधेर्नियमविधिरूपत्वात्तेन चानुष्ठानौपयिकस्मृतिर्मन्त्रेणैव संपादनीयेति बोधनान्नोपायान्तरग्रहणसंभव इति सार्थकं नित्यवदाम्नानमित्याह **मन्त्रैरेवेति**।

साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः । यथाहुः—

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥ इति ।

अस्यायमर्थः । यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन

---

ननु कोऽयमधस्ताद्विधिविभागेऽनुक्तो नियमविधिर्नामेत्यत्राह साधनेति । साधनद्वयं ध्यानादि मन्त्रश्च । अन्यतरस्य मन्त्रस्य । तस्याप्राप्तता दशा-ध्यानादिसद्भावदशा । अत्र साधनमिति प्रकृताभिप्रायेण । कचिदन्यस्यापि नियमदर्शनात् । यथा 'यद्योन्यां गायति तदुत्तरयोर्गायती'त्यादौ । तत्र हि 'एकं साम तृचेक्रियते स्तोत्रीयमित्यनेन ऋक्त्रयरूपतृचोद्देशेन विहितस्यैकस्य साम्नो योनिऋग्भिन्नयोर्ययोः कयोश्चिद्दृचोरनियमेन तृचाधारता सम्पत्तये प्राप्तस्योत्तराग्रन्थपठितोत्तरयोरेव संस्कारनियमः क्रियते । एवञ्चात्रासाधनभूताया उद्देश्याया एवर्चः पक्षप्राप्तिरिति । द्वयपदमनेकार्थम् । निष्कृष्टं लक्षणं श्लोकं व्याचक्षाणो वक्ष्यति । एवं विध्येकदेशस्य नियमविधिरूपत्वे विधिविभागप्रकारं प्रामाणिकत्वं च दर्शयितुमाह यदाहुरिति । श्लोके एकस्यैव विधित्वदर्शनेनान्ययोरतथात्वं न मन्तव्यमित्याद्यभिप्रेत्याहास्येति । विधिरत्यन्तमप्राप्त इत्यस्य स्वविषयेऽर्थे प्रमाणान्तरेणात्यन्तमप्राप्ते स्वं विधिरित्यर्थकत्वे यागादेर्मानान्तरप्राप्तत्वेन यजेत स्वर्गकाम इति न विधिः स्यात् अतो विशदयति यस्येति । प्रमाणान्तरेणाप्राप्तम् स्वेतरप्रमाणजन्यप्रमितिविषयत्वप्रतियोगिकत्रैकालिकाभाववत् । तदर्थत्वेनेति । तथा च स्वरूपतः प्रमाणान्तरज्ञातत्वेऽपि फलसाधनत्वरूपेणाज्ञातत्वान्न दोष इति भावः । ननु कर्मस्वरूपमात्रबोधकेऽव्याप्तिः तैः फलसाधनत्वाबोधनात् । न च यस्य यद्धर्मावच्छिन्नत्वं प्रमाणान्तरेणाप्राप्तम् तस्य तद्धर्मावच्छिन्नत्वबोधकत्वमेवापूर्वविधित्वमित्यत्रैव तात्पर्यम् । उत्पत्तिवाक्ये च यागत्वेन रूपेण

यो विधिः सोऽपूर्वविधिः । यथा 'यजेत स्वर्गकामः' इत्यादिः । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण प्राप्तं किं त्वनेनैव विधिनेति भवत्ययमपूर्वविधिः ।

पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः । यथा 'व्रीहीन-

---

यागस्याज्ञातस्य बोधनान्नाव्याप्तिरिति वाच्यम् । नियमपरिसंख्याविध्योरतिव्याप्तेः । नियमपरिसंख्यारूपधर्मयोः सर्वथाऽप्राप्तत्वादिति चेन्न । नियमपरिसंख्यातिरिक्तात्यन्ताज्ञातधर्मावच्छिन्नबोधकत्वमपूर्वविधित्वमित्यदोषात् । अपूर्वविधिरित्यनेन मूले विधिपदमपूर्वविधिपरमिति सूचितम् ।

विधीयमानार्थे पाक्षिके पक्षप्राप्ते सति स विधिर्नियम इत्युच्यते तदर्थनियमकरत्वादिति द्वितीयपादार्थमाह पक्ष इति । अत्र पक्षे प्राप्तस्य पक्षान्तरेऽभावप्रसक्तौ तत्परिहारस्य नियमविधिकार्यत्वात्तदभावाभावपरो विधिर्नियमविधिरिति नियमशब्दार्थघटनया लक्षणम् ।

नन्विदं न लक्षणम्, व्रीहीनवहन्तीत्यादौ तदभावाभाववाचकपदाभावेन तथा शाब्दबोधासंभवादव्याप्तेः । सत्यमेव वदेदित्यत्राप्यभावेनासंभवाच्च । न ह्येवकारस्यायोगव्यावृत्तिरर्थः, तथा सत्यन्ययोगव्यावृत्तिरूपार्थान्तरेऽपि शक्तिकल्पनयानेकशक्तिकल्पनारूपदोषप्रसङ्गात् । घटः प्रमेय एवेत्यादौ प्रमेयत्वस्य केवलान्वयिनोऽभावाप्रसिद्ध्याऽयोगव्यावृत्त्यर्थकत्वायोगाच्च । कस्तर्ह्येवकारार्थ इति चेत् व्याप्यव्यापकभाव एव । व्यापकत्वं हि तदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वाभावः । तद्विपरीतपाठे चाभावप्रतियोगिभूतप्रतियोगितानिरूपकीभूताभाववत्त्वं तदधिकरणे सिद्ध्यति । एवञ्चैवकारस्य समभिव्याहृतपदार्थनिष्ठाभावप्रतियोगिप्रतियोगितानिरूपकाभाववत्त्वमर्थः । शंखः पाण्डर एवेत्यादौ एवकारार्थविशेषणीभूतेऽभावे पाण्डरस्यान्वयः । विशेष्यभूतस्य चाभावस्य शंखे । यावदुक्तं भवति तादात्म्येन शंखव्यापकः पाण्डर इति, तावदुक्तं भवति पाण्डरव्याप्यः शंखः, शंखः पाण्डर-

एवेति । एवञ्च पार्थ एव धनुर्धर इत्यन्ययोगव्यावृत्तिस्थलेऽपि एवकारार्थे प्रथमाभावे पार्थस्याधेयतयाऽन्वयः । विशेष्यभूतस्य चाभावस्य धनुर्धरे । अतो यो धनुर्धरः स पार्थ इत्यन्ययोगव्यावृत्तिर्लभ्यते । अतो न कुत्रापि तदभावाभावशाब्दबोधजनकत्वं नियमविधावस्तीति—

उच्यते । न तावदसम्भवः । सत्यमेव वदेदित्यादौ तच्छाब्दबोधभावात् । न चानेकार्थत्वम् ; व्याप्यव्यापकभावस्यैवकारार्थत्वे उत्पलं नीलमस्त्येवेत्यत्यन्तायोगव्यवच्छेदस्थले तदसम्भवात् । न ह्युत्पलत्वव्यापकं नीलत्वमिति वा वैपरीत्यं वा सम्भवति । अतः सर्वत्रैवकारस्याभावद्वयं खण्डशक्त्यर्थः । अयोगव्यावृत्तिस्थले एकस्याभावस्यापरस्मिन्नभावे प्रतियोग्यनुयोगिभावः सम्बन्धः । अन्ययोगव्यावृत्तिस्थले एकस्याभावस्य तादात्म्यादिसम्बन्धेन समभिव्याहृतपदार्थप्रतियोगिकत्वं ज्ञायते । अथ तस्य व्यापकतासम्बन्धेनाभावान्तरेऽन्वयः । तस्य च प्रतियोगितासम्बन्धेनोपरि । अत्यन्तायोगव्यवच्छेदस्थले च प्रथमाभावः समभिव्याहृतपदार्थप्रतियोगिकः । एवं च नीलसत्ताभाव इति सिद्ध्यति । तद्व्याप्यत्वाभावश्चोत्पले वक्तव्यः । अतोऽस्याभावस्याभावान्तरे व्याप्यताप्रतियोगिकत्वं सम्बन्धः । एवं च यद्यदुत्पलं तत्र तत्र न नैल्यमस्तीत्येवंरूपं नैल्यास्तित्वाभावव्याप्यत्वमुत्पले नास्तीत्युच्यते । घटः प्रमेय एवेत्यादावपि प्रमेयस्य प्रथमाभावे आधेयतासम्बन्धेनान्वयः । स चाभावो घटव्यापकत्वरूपः, घटवृत्त्यत्यन्ताभावप्रतियोगित्वप्रतियोगिकाभाव इति यावत् । अतोऽस्याभावस्य द्वितीयाभावे स्वप्रतियोगिप्रतियोगितानिरूपकत्वसम्बन्धेनान्वयः तस्य चाभावस्य घटेऽधिकरणतासम्बन्धेनेति । अतश्च न कचिदप्येवकारस्य शक्त्यन्तरकल्पनम् । केवलं तत्तत्समभिव्याहारानुरोधेन व्युत्पत्तिभेदमात्रम् । अतः सत्यमेव वदेदित्यादौ वदने सत्यविषयकत्वाभावाभावरूपायोगव्यावृत्तिशाब्दबोधसम्भवान्नासम्भवः । यद्यपि

व्रीहीनवहन्तीत्यत्राभावबोधकपदाभावादव्याप्तिः । अथापि शब्दत इव फलतोऽप्यभावाभावबोधविवक्षणान्न दोषः । न चावहननाभावाभाव इवाश्मघट्टनादिनिवृत्तावपि तात्पर्यसम्भवात्परिसंख्याविधित्वमपि किं न स्यादिति वाच्यम्, अवघाताभावाभावो ह्यवघात एव । एवं चावघातस्य श्रुतरूपेण विध्यसम्भवे प्रकारान्तरेणावघाताभावाभावत्वेन तस्यैव विधितात्पर्यकल्पनं युक्तम्; न तु तद्विहायेतरनिवृत्तिरूपवस्तुनो विधाने तात्पर्यकल्पनमिति नैष दोषः । अतस्तदभावाभावतात्पर्यकविधित्वं नियमविधित्वमिति ।

अथ व्रीहिष्ववघाताभावाभावबोधने तात्पर्यमिति नोपपद्यते । यथा व्रीहिष्ववघातो ज्ञातः तथा नखविदलनादिकमपि ज्ञातम् । तत्र नखविदलनकालेऽवघाताभावो यथा प्राप्तः तथा नखविदलनकाले सिद्धस्यावघाताभावस्याभावोऽप्यवघातकाले प्राप्त इति अवघातस्येवावघाताभावाभावस्यापि न तात्पर्यविषयत्वसम्भवः । यदि तु यदाऽवघाताभावः प्रसक्तस्तदाऽवघाताभावाभावो न ज्ञात इति स विधेय इत्युच्यते । तर्हि तदाऽवघातोऽपि न ज्ञात इति स एव विधीयताम् । तावतैवावघाताभावस्याप्यभावः सेत्स्यति । एवं च व्रीहित्वावच्छेदेनावघाताभावाभावबोधने तात्पर्यवर्णनमुपेक्ष्य तदवच्छेदेनावघातबोधने तात्पर्यमित्येवोच्यताम् । न चायोगव्यवच्छेदेनाभावबुद्धिनिवृत्तिः । तादृशनिवृत्तिकरविधित्वं नियमविधित्वमिति वाच्यम् किमवघाताभावबुद्धिनिवृत्तिः फलं किं वाऽवघातेतरनिवृत्तिबोध इत्यत्र विनिगमनाविरहेण नियमविधेरपि परिसंख्याविधित्वापत्तेः । अतो व्रीहित्वावच्छेदेनावघातबोधने नियमविधिरित्येव युक्तम् । व्रीहित्वावच्छेदेनेत्यस्य व्रीहित्वव्यापक इत्यर्थः । एवं चायोगव्यावृत्तिस्थले सर्वत्र घटः प्रमेय एवेत्यत्रेव व्यापकत्वमानमेवापेयताम् । तथासत्यभावाभावबोधव्युत्पत्त्यकल्पनेन लाघवादिति चेत्—

वहन्ति' इत्यादिः । अनेन हि विधिनाऽवघातस्य न वैतुष्यार्थत्वं बोध्यते अन्वयव्यतिरेकसिद्धत्वात् । किन्तु नियमः । स चाप्राप्तांश-

अस्तु तावत् । किञ्चिद्व्यापकतया किञ्चिद्बोधकविधित्वमेव नियमविधित्वम् । न च इत्यश्वाभिधानीमादत्त इत्यत्रातिव्याप्तिः । तत्र हि अश्वाभिधानी उद्देश्या, समन्त्रकमादानं विधेयम् । तत्र या या प्रकृताश्वाभिधानी तत्र तत्र समन्त्रादानमिति व्यापकत्वे न तात्पर्यम्, तावता गर्दभाभिधान्यां मन्त्रानिवृत्तेः । नापि यत् यत् एतन्मन्त्रकादानं तत्तदश्वाभिधानीसम्बन्धीति व्यापकत्वम् । एवमप्येकस्यामादानव्यक्तावश्वाभिधान्या सह गर्दभाभिधानीसम्बन्धसम्पादने निवारकासिद्धेः । न ह्युभयकर्मकमेकमादानमशक्यं कर्तुम् । अवघातविदलनद्वयं तु युगपदेकत्र न समावेशमर्हति । अत एव यत्रैकक्रियाव्यक्त्योभयोर्ग्रहणसम्भवः तत्र व्यापकत्वबोधनेनेतरानिवृत्त्यसम्भवात् साक्षादितरनिवृत्तावेव तात्पर्यम् । अत एव परिसंख्यालक्षणे युगपदितिपदमेतत्सूचनाय प्रयोक्ष्यते । यत्र तु व्यापकत्वबोधनादेवार्थादितरनिवृत्तिः सिद्ध्यति तत्र व्यापकत्वेन रूपेण तद्वस्तुबोधन एव तात्पर्यमिति नियमविधित्वमिति । अथ वा स्वभिन्नसम्बन्धप्रयुक्तस्वभावप्रसक्तिमति पदार्थे स्वसम्बन्धविधिर्नियमविधिः । नखविदलनादिबलेनावघातप्रसक्तिमत्सु व्रीहिष्ववघातसम्बन्धो हि वाक्यावगम्यः । मन्त्रकरणकादाने च गर्दभाभिधानीसम्बन्धप्रयुक्ताश्वाभिधान्यभावप्रसक्तिर्नास्ति । नाप्यश्वाभिधानीसम्बन्धबोधे तात्पर्यम् । किन्तु गर्दभाभिधान्या अपि तथाऽऽदानप्रसक्तौ तन्निवृत्तिरेवात्र क्रियत इति न दोषः । इदं च लक्षणं **'पक्षेऽप्राप्ततादशायामवघातविधानमिति यावत्'** इति वाक्येन दर्शितमिति ।

इहापूर्वविधित्वाभावं दर्शयति **अनेनेति** । **अन्वयव्यतिरेकसिद्धत्वादिति** । यावत्कारणान्तरसत्त्वेऽवघातसत्त्वे वैतुष्यसत्त्वम्; स्वसदृशनखविदलनाद्यभावे स्वात्मकावघातव्यतिरेके वैतुष्यव्यतिरेक इति लौकिकान्वयव्यतिरेकावगत्यैव वैतुष्यार्थत्वस्य ज्ञातत्वादित्यर्थः । **नियम इति** । अवघातस्य

पूरणम्, वैतुष्यस्य हि नानोपायसाध्यत्वाद्यस्यां दशायामवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्ततादशायामवघातविधानमिति यावत्। न त्वपूर्वविधाविवात्यन्ताप्राप्तयागविधानमिति।

उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्या-

---

बोध्यते इत्यनुषङ्गः। व्रीहिष्वित्यध्याहारः। ननु नियमो व्यापकत्वं तत् व्रीहीन्प्रोक्षतीत्यत्राप्यस्ति, सर्वत्र व्रीहिषु प्रोक्षणात् इत्यतो वैलक्षण्यवैशद्याय तदर्थमाह स चेति। कैश्चिदेवानुष्ठातृभिः प्रकृतविधिनिरपेक्षं व्रीहिष्ववहननं न ज्ञातमिति तदीयावहननेष्वेवाप्राप्तत्वं, न सर्वत्रेत्युक्तमंशेति। परिपूरणं परिपूर्तिः। नन्वन्वयव्यतिरेकसिद्धस्यावघातस्य वैतुष्यं प्रति कथमप्राप्तत्वमित्यत्रोपपादयति वैतुष्यस्य हीति। नानोपायसाध्यत्वात् अवघातनखविदलनाश्मघट्टनादिविविधवैकल्पिकोपायसाध्यत्वात्। परिहृत्य अगृहीत्वा। परिपूर्तिवाचकपदाभावेन कथं तस्य वाक्यार्थत्वमिति शङ्कायां श्रुतार्थविधिस्पष्टत्वायाह पक्ष इति। प्रकारान्तरग्रहणे इत्यर्थः।

परिसंख्यालक्षणमाह उभयस्येति। युगपदिति श्लोके चकारलब्धम्। इतरपदमन्यतरार्थकम्। तत्र चान्यत्र च प्राप्ते इति वार्तिकस्य द्वेधाऽर्थः। तस्य चान्यस्य चैकत्र प्राप्तौ सत्यामन्यस्य व्यावृत्तिरित्येकः। तदुदाहरणं गृहमेधीयेष्टिप्रकरणगतं आज्यभागौ यजतीति वाक्यम्। तदिष्टावाज्यभागतदितरप्रयाजादिरूपोभयप्राप्तौ प्रयाजादिनिवृत्तिस्तेन वाक्येन क्रियत इति। एवं तस्मिन्नन्यस्मिंश्चैकस्य प्राप्तावन्यस्मात्तत्परिसंख्येत्यपरोऽर्थः। तत्र इत्यश्वाभिधानीमादत्त इति वाक्यं निदर्शनम्। तेनाश्वगर्दभाभिधान्योः प्राप्तस्य मन्त्रस्य गर्दभाभिधानीतो निवृत्तिः क्रियते। अत इहापि इतरस्य

विधिः । यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । इदं हि वाक्यं न भक्षणविधिपरम्, तस्य रागतः प्राप्तत्वात् । नापि नियमपरम्,

---

व्यावृत्तिपर इति प्रथमरीत्या कश्चिदर्थः, द्वितीयरीत्या चोभयस्याभिधानीद्वयस्यैकत्र मन्त्रे शेषितया प्राप्तावितरस्माद्गर्दभाभिधानीरूपान्मन्त्रव्यावृत्तिपर इत्यर्थोऽवसेयः । अथ वा इतरस्य व्यावृत्तिरित्येकविध एवार्थः; उभयस्याश्वरशनाङ्गत्वस्य गर्दभरशनाङ्गत्वस्य च युगपत् प्राप्तौ इतरस्य गर्दभरशनाङ्गत्वस्य व्यावृत्तिपर इति सङ्गमनीयम् । अत्र न कलञ्जं भक्षयेदित्यादेर्निषेधस्यापि लक्ष्यत्वं स्वीकुर्वन्ति । तदा व्यावृत्तिपरवाक्यं परिसंख्याविधिरिति सामान्यलक्षणम् । अन्यथा पुनः तस्मिन् तत्सम्बन्धव्यावृत्तितात्पर्यकत्वे सति तदितरसम्बन्धबोधकविधित्वं परिसंख्याविधित्वमिति वक्तव्यम् । स तस्मिन् तदितरसम्बन्धबोधः फलतः परिसंख्याविधावित्यश्वाभिधानीमादत्त इत्यादौ स्पष्टः । लाक्षणिकपरिसंख्यास्थलेऽपि पञ्च पञ्चनखा भक्ष्या इत्यादौ तात्पर्यालोचनात्प्रागस्तीति नाव्याप्तिः । अत एव श्रौतपरिसंख्योदाहरणं अत्र ह्येवावपन्तीत्येवकारघटितं प्रदर्श्यते । तत्र हि अत्रेत्यस्यैवकारार्थ इवावापेऽप्यन्वयोऽस्ति । भूतल एव घट इत्यत्र भूतलान्ययोगव्यवच्छिन्नो भूतलसम्बन्धी घट इति घटेऽपि भूतलसम्बन्धबोधात् । एवं च परिसंख्याविधिर्नाम यः परिसंख्यायां व्यावृत्तौ तत्परो विधिरिव चास्ति स इत्यर्थोऽनुगुणः; निषेधस्याविधित्वादिति ।

उदाहरति यथेति । 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः' इति विशिष्टः श्लोकः (श्री-रा. कि- १७) । नन्विह परिसंख्यावाचकपदाश्रवणाद्विध्यन्तरमेव युक्तमित्याशंक्याह इदं हीति । हि यतः । अत इति वक्ष्यमाणप्रतिसम्बन्धीदम् । यद्यपि भक्षणे पञ्चविषयकत्वस्य पञ्चनखविषयकत्वस्य वा नियमो न सम्भवति । अन्यसामान्यस्याभक्ष्यत्वप्रसङ्गात्; अथापि पंचनखभक्षणे प्रकृतपंचविषयकत्वनियम एव भविष्यतीत्याशंक्याह नापीति । पञ्चनखापञ्च-

पंचनखापंचनखभक्षणस्य युगपत् प्राप्तेः पक्षेऽप्राप्त्यभावात् । अत इदमपंचपंचनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः ।

सा च परिसंख्या द्विविधा श्रौती लाक्षणिकी चेति । तत्र 'अत्र ह्येवावपन्ति' इत्यत्र श्रौती परिसंख्या । एवकारेण पवमाना-

---

नखेति पञ्चान्तर्गतपंचनखतद्भिन्नेत्यर्थः । तद्भिन्नश्च तत्सदृशः पञ्चातिरिक्तपञ्चनखः । पक्ष इति । एकदैवोभयविधपंचनखभक्षणसंभवादिति भावः । अतः पंचान्तर्गतपंचनखसाहित्येन पंचनखान्तरभक्षणस्य शास्त्रसम्मतत्वप्रसङ्गेनेतरनिवृत्तेरसिद्धिः । तत्रैव हि नियमपरत्वम् , यत्र नियमस्वीकारेऽर्थादितरनिवृत्तिसिद्धिरिति तात्पर्यम् । अतः अपूर्वविधिनियमविधित्वासंभवात् । परिसंख्यावाचकशब्दाभावात्कथमेवमिति शङ्कापरिहाराय विभजते सा चेति । अत्र परिसंख्या द्विविधा ; आर्थी शाब्दी च । आद्या इत्यश्वाभिधानीमादत्त इति । अन्त्या द्विविधा ; श्रौती लाक्षणिकी चेति विभागक्रमोऽनुसन्धेयः । नियमविधावप्यार्थशाब्दविभागोऽस्ति । तत्र सत्यमेव वदेदित्यत्र नियमः शाब्द इति वदन्ति । अत्रापि व्रीहीनवहन्तीत्यत्रेव पूर्वप्रवृत्त्यङ्गीकारेण सत्यवदनविधौ विधिप्रयोजनजिज्ञासायां नियमफलकत्वमङ्गीकृत्य एवकारोऽर्थप्राप्तनियमानुवाद इति युक्तं वक्तुम् । वस्तुतोऽस्य नियमविधित्वे नियमादृष्टकल्पनापत्त्या गौरवम् । अतः परिसंख्यात्वमेव ; नानृतं वदेदित्यनृतवदनस्य प्रत्यवायजनकतायाः क्लृप्तत्वात्तदैककण्ठ्यादिति । श्रौतीशब्दश्रवणमात्रगम्या, शक्तिगम्येति यावत् । लाक्षणिकी लक्षणागम्या । अत्रेति । सन्ति प्रकृत्यपेक्षया विवृद्धस्तोमकाः क्रतवः एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्यादिविधिविहिताः । स्तोमो नाम स्तोत्रसंख्या । स्तोत्रं प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम् । तत्र स्तोमवृद्धिसम्पादनस्यर्क्सामसाध्यत्वात्तदर्थे विद्यमानापर्याप्तिमालोच्य ऋक्सामे यतः कुतश्चिदानेतव्ये भवतः । एवं च सति इदं श्रूयते 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति अत एवोद्वपन्ती'ति । पवमा-

तिरिक्तस्तोत्रव्यावृत्तेरभिधानात्।

पञ्च पञ्चनखा भक्ष्या इत्यत्र तु लाक्षणिकी। इतरानिवृत्तिवाचकस्य पदाभावात्। अत एवैषा त्रिदोषग्रस्ता। दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। श्रुतस्य पञ्च पञ्चनखभक्षणस्य हानादश्रुतापञ्चनखभक्षणनिवृत्तिकल्पनात्प्राप्तस्य चापंचनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्, प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक्।

---

नातिरिक्तस्तोत्रेति। स्तोत्राणि तावत् आज्यपृष्ठपवमानादिनामधेयानि। तत्र पवमानोऽपि त्रिविधः। बहिष्पवमानो माध्यन्दिन आर्भवश्चेति। तत्रोत्तरयोरिमास्तिस्र ऋचः सन्ति। आस्वेव तिसृष्वावाप आगम आनयनं विधीयते। स च ऋक्षु विधीयमानत्वात्सामावाप इति विज्ञायते। अतश्च पवमानसम्बन्धिनीष्वासु तिसृष्वेव सामावापः कर्तव्यः। अन्यत्र तु पवमानसम्बन्धिनीषु स्तोत्रान्तरगतासु वा ऋक्षु स न कर्तव्यः। तर्हि कथं तत्र स्तोत्रसंख्यापूरणमिति चेत् विद्यमानस्यैव साम्नोऽभ्यासादिति बोध्यम्। न चात्र ह्वेत्यत्रत्यात्रपदस्यैकारतया एवकारः ऋगन्तरव्यावृत्तिपर एवेति कथं स्तोत्रव्यावृत्तेरित्युच्यत इति वाच्यम्। अत्र पवमानान्तर्गतर्गन्तरव्यावृत्तिमात्रमिति न मन्तव्यम्। किन्तु 'यज्ञस्ये'ति श्रवणात् यज्ञसम्बन्धिस्तोत्रान्तरीयसर्वव्यावृत्तिरिति बोधनाय तथोक्तेरिति। अत्र विशेषो दीपिकायां द्रष्टव्यः। अत एव परिसंख्यावाचकपदाभावादेव। तादृशपदसत्त्वे तु प्राप्तबाधरूपैकदोषग्रस्तैव स्यात्। न त्रिदोषग्रस्तेति भावः। श्रुतहानिः यथाश्रुतार्थपरत्वाभावः। अश्रुतकल्पना अयथाश्रुतार्थबोधनम्। प्राप्तबाधः मानान्तरप्रसक्तबाधः। श्रौतपरिसंख्यायामपि प्राप्तबाधरूपदोषसत्त्वसूचनाय दोषत्रयाश्रयं विविच्य कथयति अस्मिन्निति। न च व्रीहीनवहन्तीत्यत्र लोकतः पूर्वप्रवृत्त्यङ्गीकारेणावहननविधानेन फलतो नियम-

तत्सिद्धं मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणान्न मन्त्राम्नानमनर्थकम् । अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्त्वम् ।

---

विध्याश्रयणवत् अत्रापि लोकतः पूर्वमेव पञ्चनखभक्षणविधिः, अर्थात्तु परिसंख्येत्यस्तु । एवं च न त्रैदोष्यमिति वाच्यम्, मानान्तरज्ञातस्यैवोद्देश्यतयाऽत्रोद्देश्यसिद्ध्यर्थं लोकानुसरणे ततः पूर्वप्रवृत्त्यसम्भवात् ; प्रकृतविधिविहितेतरसकलनिवृत्तिप्रसङ्गात् ; पंचनखभक्षणोद्देशेन पंचसम्बन्धविधौ विशिष्टोद्देश्यासिद्ध्या वाक्यभेदात् ; अन्ततो विधेरपूर्वे उपयोगस्यावश्यकत्वेनात्र तत्कल्पने गौरवप्रसङ्गात् ; निषेधप्रक्रमविरोधाच्च । इदमभिसन्धायाह दिगिति ।

परिसंख्याप्रसङ्गेन विधित्रयविवेचनम् ।
अन्यत्र, अत्राशेषमन्त्रनियमोक्तिप्रसङ्गतः ॥

एवं विधित्रयमुपवर्ण्य प्रकृतमाह तदिति । नियमविधेः सद्भावादित्यर्थः । अनर्थकम् इतीति शेषः । ननु स्मृतेरन्यथाऽपि सम्भवे मन्त्रेणैव स्मर्तव्यमिति नियमः किमर्थ इति चेत् तत्रादृष्टमेव फलम् । न तावता मन्त्रस्य दृष्टार्थत्वक्षतिः । न च मन्त्रस्योच्चारणं फलमित्युक्तावपि न दृष्टार्थत्वहानिरिति वाच्यम् । उच्चारणस्य क्रतौ दृष्टफलाभावेनादृष्टार्थत्वप्रसङ्गात् । ततो वरं मन्त्रस्यार्थप्रतिपादनं फलम् अर्थप्रतिपत्तेरनुष्ठानमिति दृष्टपरम्पराग्रहणम् । अपि च मन्त्रस्य क्रत्वङ्गत्वनिर्वाहाय व्यापारापेक्षायामर्थप्रतिपादनरूपतदीयव्यापारमुपेक्ष्योच्चारणरूपपुरुषव्यापारग्रहणं न सम्यक् । एवं नियमाङ्गीकारे नियमविधिवैफल्याभावेन मन्त्राम्नानसार्थक्यादर्थस्मरणस्यार्थत्वमव्याहतमित्याह अतश्चेति । ननु सर्वेषामेवमर्थो न सम्भवति, पूषानुमन्त्रणमन्त्राणामर्थस्मारकत्वेऽपि तस्यार्थस्य दर्शपूर्णमासप्रयोगसमवेतत्वाभावात्,

तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं संभवति तदा तत्रैव विनियोगः । येषां तु न सम्भवति तेषां यत्र संभवति तत्रोत्कर्षः । यथा पूषानुमन्त्रणमन्त्राणामित्युक्तम् । येषां क्वापि न सम्भवति तदुच्चारणस्य त्वगत्याऽदृष्टार्थत्वम् । सर्वथाऽपि तु तेषां नानर्थक्यमिति ।

---

साममन्त्राणां गीत्यात्मकत्वेनार्थस्मारकत्वस्यैवाभावाच्चेत्यत्राह तत्रेति । यत्र यदीयप्रकरणे । न सम्भवतीति । अर्थप्रकाशनं प्रयोजनमित्यनुषङ्गः । उत्कर्ष इति । अयं च सामान्यसम्बन्धबोधकप्रमाणसद्भाव एव । अन्यथा तु प्रयोगसमवेतत्वस्य शक्यार्थेऽभावेऽपि समवेतत्वार्हार्थान्तरलक्षणया पाठस्थल एव विनियोगः कर्तव्य इति ध्येयम् । स्वतोऽर्थरहितानां साममन्त्राणामपि ऋगारूढानां स्वाधारर्गक्षराभिव्यक्तिद्वारा तदर्थाभिधानकरत्वं सम्भवति । ये पुनः स्तोभाक्षरारूढाःसाममन्त्रास्तेषामेवमुपयोगाभावादाह— येषामिति । क्वापीति पाठस्थलेऽन्यत्र वेत्यर्थः । कथमपीति शेषः । तेन लक्षणादिना निवेशोऽपि संगृहीतो भवति । उच्चारणस्येत्यादि । उच्चारणार्थत्वं मन्त्रस्य, उच्चारणस्यैवादृष्टार्थत्वमित्यर्थः । ननु स्वाध्यायोऽध्येतव्य इति सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचितम् । इह केषांचिदर्थापर्यवसाने तद्विरुद्ध्यते तत्राह सर्वथेति । नानर्थक्यमिति । अयं भावः—न खल्वसम्भवदर्थानामप्यर्थपर्यवसायित्वं विधिसहस्रेणापि विधातुं शक्यम् । अतोऽध्ययनविधिर्यावतां कथमपि सम्भवति तावतामेव तथात्वं सूचयति । न पुनर्भागान्तराणामन्यथा सार्थक्यं वारयति । यथाकथंचित् सार्थक्यबोधन एव तद्व्यापार इति ।

अपि विधिविहिताः फलन्ति धर्माः
स्वरपठनक्रमशालिभिः स्मृता यैः ।
स्वयमपि विधिकल्पका य ईदृग्-
बहुगुणमन्त्रसमर्थतासमाधिं ॥

नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । तथा हि—'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भिच्छब्दो यागनामधेयम् । तेन च विधेयार्थपरिच्छेदः क्रियते । अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते । यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते । तत्र कोऽसौ विशेष इत्यपेक्षायां उद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते । उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात् ।

---

तृतीयं नामधेयं सार्थकं दर्शयति नामधेयानामिति । उपपादयति तथा हीति । विधेयार्थपरिच्छेदः विधेयार्थस्येतरव्यावृत्ताकारेण बोधः । कोऽसौ विधेयोऽर्थः यमिदं परिच्छिन्द्यादित्यत्राह अनेनेति । वाक्येनेति विधीयत इत्यनेनान्वेति । ननु यजिना यागसामान्यमुपस्थितम् । तस्य परिच्छेदो नाम होमादिव्यावृत्ततया बोधः । स च नोद्भित्पदकार्यः । यजिना यागोपस्थितिमात्रेणैव तत्सिद्धेरित्यतः सामान्यपरत्वं व्युदस्यति यागेति । अविधेयत्वादिति । विधेरज्ञातज्ञापनफलित्वादप्राप्ताकारेणैव कस्यचिद्विधानं शक्यम्, न पुनःप्राप्तानेकवृत्तियागत्वेन रूपेणेत्यर्थः । अपेक्षायामिति । यद्यपि धातोर्विध्यन्तरप्राप्तनिखिलयागव्यक्तिविलक्षणयागव्यक्तिपरत्वात् ज्ञात एव विशेषः ; अथापि यावत् वाचकमसाधारणं पदं न श्रूयते तावत् कोऽसौ विशेष इति जिज्ञासा भवत्येव । न च तादृशं पदं विना विशिष्य व्यवहारः शक्य इति ध्येयम् । ननु कथं यागस्योद्भित्त्वम् द्रव्यात्मकरूपसमर्पणेनैवोद्भित्पदस्य यागविशेषपरत्वं स्यादित्यत्राह उद्भिदेति । यागेनेति । विधीयमानो हि यागो भावनायां करणत्वेनैवान्वेति । उद्भिच्छब्दश्च तृतीयान्तस्तत्समानाधिकरणः प्रतीयते । तच्च सामानाधिकरण्यं यागस्योद्भित्त्व एव स्वरसमिति भावः । ननु यजेर्यागविशेषपरत्वादुद्भिच्छब्दस्यापि तद्वाचित्वे कथं सामानाधिकरण्यं घटो घट इति सामानाधिकरण्यादर्शनादित्यत्राह

तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत् । तत्र हि उत्पलशब्दस्यार्थादुत्पलादन्यो नीलशब्दस्य वाच्योऽर्थोऽस्ति नीलगुणः । लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम् । उद्भिच्छब्दस्य तु यज्यवगतयागविशेषान्नान्यो वाच्योऽर्थोऽस्ति विशेषवाचित्वात्तस्य ।

अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलशब्दवत्सामानाधिकरण्यम्, किं तर्हि वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दवत्। वैश्व-

---

तस्य चेति । तस्य उद्भिच्छब्दस्य । नीलोत्पलादिशब्दवत् नीलोत्पलादिप्रयोगगतनीलादिशब्दस्येव । वैधर्म्यमुपपादयति तत्र हीति । तत्र नीलोत्पलशब्दयोः । अर्थात् वाच्यात् । उत्पलादिति । मतान्तरानुसारेणेदम् । यद्वा उत्पलत्वादित्यर्थः । नीलगुण इति । उत्पलस्य नील इति व्यधिकरणप्रयोगे नीलशब्दस्य रूपमात्रार्थकत्वदर्शनादनेकशक्तिकल्पनाभिया लाघवेन गुणवाचित्वमेव, न गुणविशिष्टवाचित्वमिति भावः । ननु भिन्नार्थकत्वेऽपि सामानाधिकरण्यं न दृष्टम्, घटः पट इत्यप्रयोगात् । तत्कथं नीलोत्पलशब्दयोः सामानाधिकरण्यम्, तत्राह लक्षणया त्विति । यज्यवगतेति यजि लक्षितेत्यर्थः । नान्य इति । अयं भावः––उत्पलशब्दप्रयोगाभावे नीलशब्दोऽनुत्पलेऽपि स्यात् । नीलशब्दप्रयोगाभावे चोत्पलपदं रक्तोत्पलेऽपि । तत्र द्वयोः सामानाधिकरण्यम् । एवं नीलोत्पलशब्दयोरर्थैक्येऽपि प्रवृत्तिनिमित्तभेदाद्युज्यते सामानाधिकरण्यम् ; अत्र तु नैवमिति । अतः विशेषवाचित्वात् । किं तर्हीति । तर्हि कस्य शब्दस्येव सामानाधिकरण्यमिति प्रश्नः । उत्तरयति वैश्वेति । येनामिक्षाशब्दस्य सामानाधिकरण्यं वक्तव्यम् तस्य वैश्वदेवीशब्दस्य यजिवत् विशेषपरत्वमुपपादयन्नाह वैश्वेति । सर्वनाम हि उपस्थितविशेषवाचि । अतः सर्वना-

देवीशब्दस्य हि देवतातद्धितान्तत्वात्तद्धितस्य च 'सास्य देवता' इति सर्वनामार्थे स्मरणात्, सर्वनाम्नां चोपस्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायामामिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति।

---

मार्थकत्वात्तद्धितो विशेषपरः। अतस्तद्धितान्तो वैश्वदेवीशब्दोऽपि विशेषपर इति। तद्धितस्य देवतातद्धितस्य। सेति सूत्रे निर्देशो देवतापदानुसारात्। विश्वेदेवा अस्या देवतेतीह विशिष्य निर्देशो बोध्यः। सर्वनामार्थ इति अस्येतीदंशब्दस्य सर्वनामत्वादिति भावः। ननु सर्वनामार्थे स्मरणे विशेषवाचित्वं कथं सिद्ध्यति तत्राह सर्वेति। ननु तस्यामिक्षापरत्वेऽनामिक्षायामिदंशब्दनिर्देशः क्वापि न स्यादित्यत उपस्थितेत्युक्तम्। एवं च येन रूपेण यो बुद्धिविषयो भवति स तद्रूपावच्छिन्नस्तेन तदा प्रत्याय्यत इति न दोषः। तच्च रूपं प्रकृते आमिक्षात्वमिति सिद्धमस्य विशेषवाचित्वम्। अपेक्षायामिति। यद्यपि विशेष एव तद्धितार्थः; अथापि यावदामिक्षापदं न श्रूयते तावदामिक्षात्वे बुद्धिविषयत्वासम्भवेन तादृशबुद्धिविषयत्वोपलक्षितामिक्षात्वावच्छिन्नवाचित्वं न सिद्ध्यति। केवलं तु तद्धितस्योपस्थितवस्तुवाचित्वादिह वाच्यतावच्छेदकः को धर्म इति जिज्ञासोत्पद्यत इति। देवतायुक्तामिति। तद्धितस्य देवतात्वं द्रव्यमित्युभयमर्थः। तत्र देवतात्वस्य द्रव्ये निरूपकतासम्बन्धेनान्वयादेवं लभ्यते। एष इति सर्वनामार्थे स्मृत इत्यर्थः। एवकारेण सामान्यवाचित्वव्यवच्छेदः। तर्हि किमर्थमामिक्षापदमित्यत्राहामिक्षेति। आमिक्षापदस्य सन्निहितत्वात्तस्य तद्धितस्य यो विषयो वाच्यस्तदर्पणं भवति। सन्निहितेनामिक्षापदेन तद्विषयः

तथा— श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते ।
तदर्थस्तद्धितेनैव त्रयाणामेकवाच्यता ॥ इति ।

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यमेवं सामान्यस्याविधेयत्वाद्यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम् । तत्सिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । यथाहुः—

'तदधीनत्वाद्यागविशेषसिद्धेः' इति ।

---

समर्प्यत इति यावत् । तद्धितस्य विशेषपरत्वं विस्पष्टयद्वार्तिकधृतं वृद्धवचनं प्रमाणयति श्रुत्येति । श्रुत्यैव श्रवणमात्रेण, शक्त्यैव । उपपदस्य सन्निहितस्यामिक्षेति पदस्य । सर्वनाम्ना अस्येति सर्वनामतः । तदर्थः सर्वनामार्थः । त्रयाणां उपपदसर्वनामतद्धितानाम् । एकवाच्यता एकवाच्यकत्वं एकार्थवाचितेति यावत् । एकवाक्यतेति पाठे तु त्रयाणामित्यस्य सा वैश्वदेव्यामिक्षेति पदानामित्यर्थकत्वं सर्वनाम्नेत्यस्य सेतिपदेनेत्यर्थकत्वं चैव वक्तव्यम् । तस्मात् सर्वनामवत् वैश्वदेवीशब्दस्योपस्थितविशेषवाचित्वात् । एवमिति यथेत्यस्य प्रतिसम्बन्धि । अविधेयत्वादिति अवगतेत्यत्रान्वयः । अर्थवत्त्वमिति संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपेदित्यत्र वैमृधेष्टिसम्बन्धः पौर्णमास्या एव , न तु दर्शस्यापि (पौर्णमासीमिति नामधेयश्रवणात्) दर्शपूर्णमासाभ्यां यजेत स्वर्गकाम इति फलसम्बन्धः षण्णामेव , न तु प्रयाजादेरपीत्येवमस्ति बहुविधं नामधेयप्रयोजनम् । तत्र सर्वत्रार्थपरिच्छेद एव द्वारमिति ।

ननु नामधेयत्वमेवासिद्धम् । तत्किं तदङ्गीकृत्यार्थवत्त्वप्रकारपरिचिन्तया । उद्भिदादिपदानां सोमेन यजेतेत्यादिष्विव गुणपरत्वेनैव सार्थक्यस्य

**नामधेयत्वं च निमित्तचतुष्टयात् । मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति । तत्रोद्भिदा यजेत पशुकाम इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात् ।**

---

वक्तव्यत्वादिति शङ्कां परिहर्तुमाह **नामधेयत्वं चेति** । मत्वर्थेति । मत्वर्थलक्षणाभयं वाक्यभेदभयं तत्प्रख्यशास्त्रं तद्व्यपदेशश्चेति निमित्तचतुष्टयादित्यनुक्त्वा प्रत्येकपञ्चमीग्रहणं एकैकस्य परस्परानपेक्षप्रमाणत्वसूचनाय । निमित्तचतुष्टयादित्युक्तिरतिरिक्तनिमित्तव्यवच्छेदाय । मत्वर्थलक्षणाभयादिति । उद्भिदादिपदं गुणवाचि कर्मवाचि वेति शङ्कायां कर्मवाचित्वरूपनामधेयत्वनिश्चयेऽयमनुकूलतर्कः, यदि गुणवाचि स्यात् तर्हि मत्वर्थलक्षणा स्यादिति । **वाक्यभेदभयात्** यदि गुणवाचि स्यात् वाक्यभेदः स्यादित्यनुकूलतर्कात् । तत्प्रख्यशास्त्रात् । तस्य प्रकृतनामधेयेन विधित्सितस्य गुणस्य प्रख्यात् प्रख्यापकात् प्रापकाच्छास्त्रान्तरात् । तथा चाग्निहोत्रपदं नामधेयम् । न गुणविधायकं शास्त्रान्तरप्रापितगुणबोधकत्वात् । अयं गुणो नाग्निहोत्रादिपदविधेयः शास्त्रान्तरप्रापितत्वादिति वाऽनुमाने तात्पर्यम् । तद्व्यपदेशात् विशिष्टोऽपदेशो व्यपदेशः । स चापदेशे विशेषः प्रकृते उपमानतया । तथा च विधित्सितस्य गुणस्योपमानत्वेन निर्देशादित्यर्थः । तथा चोपमानत्वव्यपदेशविषयविधित्सितगुणकत्वाच्छ्येनादिपदं नामधेयम् न गुणविधायकम् ; अयं गुणो न श्येनपदविधेयः तद्विधेयार्थनिरूपितोपमानत्वव्यपदेशविषयत्वादित्यनुमाने तात्पर्यम् । अर्थापत्तिर्वा विवक्षिता स्यात् ।

क्रमेणोदाहरति तत्रेत्यादिना । उद्भिच्छब्दस्य गुणसमर्पकत्ववादिना किं उद्भिदा यागं भावयेदिति वाक्यार्थ उच्यते, उतोद्भिदा यागं भावयेत् यागेन पशुं भावयेदिति, अथ वोद्भिदा पशुं भावयेदिति, आहो उद्भिद्वता यागेन पशुं भावयेदिति । तत्राद्यास्त्रयः पक्षा न सम्भवन्तीति चतुर्थोऽवशि-

तथा हि उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न गुणविधानं युज्यते, फलपदानर्थक्यापत्तेः ।

न चानेन वाक्येन फलं प्रति यागविधानं तस्मिंश्च गुणविधानं युज्यते वाक्यभेदापत्तेः । नापि गुणफलसंबन्धविधानं सम्भवति परपदार्थविधानेन विप्रकृष्टार्थविधानापत्तेः, धात्वर्थस्य स्वरूपेणाविधानात्तदुद्देशेन वाऽन्यस्य कस्यचिदविधानाद्धातोरत्यन्तपारार्थ्यापत्तेश्च । यज्यानर्थक्यापत्तेश्च ।

न हि तदानेन करणं समर्प्यते, गुणस्य करणत्वेनान्वयात् । नापि फलं, पशोर्भाव्यत्वेनान्वयात् । अथ गुणफलसंबन्धविधाने यागस्याश्रयत्वेन संबन्ध इति चेत् । न । यजेतेत्यत्र आश्रयत्ववाचकपदाभावात् । अथ सिद्धान्ते करणत्वमिवाश्रयत्वमपि लक्ष्यमिति चेन्न ।

---

प्यते । सोऽपि मत्वथलक्षणादुष्ट इति निरूपयति तथा हीति । अत्रोद्भित्पदस्य गुणसमर्पकत्वादिना तत्सार्थक्येनैवार्थस्य वर्णनीयतया पशुं प्रति यागविधानमात्रमिति पक्षे । नोद्भावितः । फलपदं पशुकाम इति पदम् । फलं पशुम् । तस्मिन् यागोद्देशेन । वाक्यभेदेति । अनेकविधानादनेकोद्देशाच्चेति भावः । तृतीयपक्षं निरस्यति नापीति । सम्बन्धविधानं तद्बोधनम् । परपदार्थविधानेन विधिप्रतिपादकतिङन्तपदभिन्नोद्भित्पदार्थविधानेन । विप्रकृष्टार्थेति विलम्बितोपस्थितपदार्थेत्यर्थः । अस्य दोषस्य यजेरुद्देश्यसमर्पकत्वपक्षेऽपि सम्भवादेतत्पक्षासाधारणं दोषं दर्शयति धात्वर्थस्येति । विधिसन्निकृष्टस्य धातोर्विधेयसमर्पकत्वं मुख्यम् । असम्भवे विधेयान्तरापेक्षितोद्देश्यसमर्पकत्वम् । अत्र तूद्भिदा फले जननीये उद्भिदुपकारकक्रियासमर्पकत्वादत्यन्तपारार्थ्यमिति । वस्तुतो वैयर्थ्यमेवेत्याह यजीति । धात्वर्थस्योद्देश्यत्वविधेयत्वातिरिक्तप्रकारेणानन्वय इत्याशयेनोपपादयति न हीति । श्रुतस्यासम्बन्धो न युक्त इत्याशङ्कते अथेति । लघुत्वं दर्शयति

आश्रयत्वापेक्षया करणत्वस्य लघुत्वेन तल्लक्षणाया एव युक्तत्वात् । फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः, तत्त्वं

---

फलायेत्यादिना । यत्र कारकतां यन्निरूपितकारकताम् । तथा च फलोद्देश्यकविधिविषयगुणनिष्ठकरणतानिरूपकत्वमाश्रयत्वम् । गुणस्य व्यापारानाविष्टस्य फलसाधनत्वासम्भवेन स्वस्य व्यापाराविष्टत्वसम्पत्तये किञ्चित्क्रियां प्रति कारकत्वमावश्यकमिति सा क्रियाऽऽश्रयो भवतीति ।

नन्विदं लक्षणमयुक्तं फलेऽतिव्याप्तेः । अथेन्द्रियरूपफलस्य गुणनिष्ठकरणत्वनिष्ठकरणतानिरूपकत्वमेव, न तु प्रथमकरणतानिरूपकत्वमिति चेत्तर्हि फलं प्रति यत्करणं तदेव विधेयमिति गुणनिष्ठकरणत्वमेव विधिविषय इति गुणस्य विधिविषयत्वाभावादसम्भवः । अथ गुणकरणत्वस्य विधिविषयत्वे विशेषणे गुणेऽपि विधिविषयत्वमक्षतमिति लक्षणसमन्वय इति चेत् एवमपि दध्ना जुहोतीति स्थले फलपदेन होमपरिग्रहेण तदुद्देश्यकविधिविषयदधिनिष्ठकरणतानिरूपके तत्रैव होमेऽतिव्याप्तिः । फलत्वं विध्यनधीनेच्छाविषयत्वम्, तच्च होमे नास्तीति चेत् यजेत स्वर्गकाम इत्यत्र स्वर्गे तत्र वार्यते, स्वर्गस्य तथात्वात्, यागस्य च तं प्रति गुणत्वात् । अथ गुणत्वं क्रियानिष्पादकत्वम्, यागस्य च नेदृशगुणत्वमिति चेत् तर्हि मन्थ्यग्रानभिचरन्तीत्यत्राभिचाररूपफलोद्देशेन ग्रहग्रहणाश्रिताया मन्थिनामकग्रहाग्रताया विधानात्तस्या अग्रताया उक्तगुणत्वाभावात्तत्राश्रये ग्रहणेऽव्याप्तिः । न ह्यग्रता कामपि क्रियां निष्पादयति । अथ गुणत्वं क्रियाभिन्नत्वम्, तच्च न याग इति चेत् केयं क्रिया नाम ? न तावत्कर्मत्वजात्याश्रयः क्रिया ; ज्ञानेच्छान्यतररूपस्य यागदानादेः क्रियाभिन्नत्वप्रसङ्गात् । नापि धात्वर्थः क्रिया ; पशुकाम उक्थ्यं गृह्णीयादित्यत्र गुणफलसम्बन्धविधौ उक्थ्यसंस्थारूपगुणस्य संपूर्वकस्थाधातुवाच्यत्वेन क्रियारूपतया क्रियाभिन्नत्वरूपगुणत्वा-

चाश्रयत्वम्। करणत्वं च निकृष्टा शक्तिरिति लाघवम्।

---

भावेन तत्राश्रये ज्योतिष्टोमेऽव्याप्तेः। तस्याः स्तोत्रे परमरूपसंस्थाक्रियायाः स्तोत्रसम्बन्धिक्रतुसापेक्षत्वेन ससम्बन्धिकत्वेन क्रतुरूपाश्रयापेक्षायाः शास्त्रसम्मतत्वात्। एवं यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीत्यादौ क्रियायामपि गुणत्वविवक्षया गुणफलसम्बन्धव्यवहारो दृश्यते। एवमुक्तस्थले गुणनिष्ठकरणतानिरूपकत्वस्य गुणकार्यत्वस्य ज्योतिष्टोमादावभावादव्याप्तिरिति चेत्— उच्यते। अयमत्र पंक्त्यर्थः फलाय विधीयमानो गुणो यत्र यस्मिन् सति कारकतां फलकरणतामापद्यते, स फलोद्देश्यकविधिविषयगुणनिष्ठकरणताप्रयोजक आश्रय इति। अत्र गुण इत्यस्याङ्ग अङ्गत्वार्हः फलसंयोगाभावे स्वाङ्गतार्ह इत्यर्थः। स्वं आश्रयः। तथा च फलसंयोगाभावे स्वाङ्गतार्हेण पदार्थेन फलजननेऽपेक्ष्यमाणत्वमाश्रयत्वम्। दध्नेन्द्रियकामस्य जुहुयादित्यत्र हि दधि इन्द्रियसंबन्धाभावे होमाङ्गत्वमर्हति। होमं चापेक्षते। अन्यथाव्यापारानाविष्टतयेन्द्रियकरणत्वासंभवात्। एवं रीत्या सर्वत्रोहनीयम्। अत्र फलसंयोगाभावे स्वाङ्गतार्हणेत्यनुक्तौ यागादेः प्रयाजादीतिकर्तव्यतापेक्षित्वादितिकर्तव्यतायामतिव्याप्तिः। शेषनिवेशाभावे सोमस्योद्भिद्यागाश्रयत्वापत्तिः, उद्भिद्यागस्य फलसंबन्धाभावे सन्निहितसोमाङ्गत्वसंभवादित्यलं बहुना॥

करणत्वं चेति चस्त्वर्थे। निष्कृष्टा अखण्डा। शक्तिरिति। कर्तृत्वादिकारकाणां कार्यजननार्हतत्तच्छक्तिविशेषरूपत्वाभ्युपगमादिति भावः। ननु धात्वर्थस्याश्रयत्वेऽपि नेदृशाश्रयत्वे लक्षणाङ्गीक्रियते। अपि तु गुणधात्वर्थयोर्वस्तुतो यस्सम्बन्ध उपकार्योपकारकभावोऽन्यो वा तन्मात्रे लक्षणा। अतो न गौरवम्। किं च मास्तु धात्वर्थस्य भावनायामन्वयः।

किं च गुणफलसंबन्धविधाने करणीभूतो गुणस्तन्निष्ठं वा करणत्वं फलोद्देशेन विधेयम् । तत्राद्ये पक्षे करणत्वस्य गुणोपसर्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या । तस्य तृतीयाप्रत्ययार्थत्वात् प्राधान्येनोपस्थितेः ।

यदाऽपि गुणनिष्ठं करणत्वं फलोद्देशेन विधेयं तदाऽपि फलभावनायां करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या । तृतीयाभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य करण-

---

न चानर्थक्यम्, साधुत्वार्थत्वात् । लक्षणालेशस्याप्यभावाच्चेदमेव युक्तम् । अतो दोषान्तरमाह किं चेति । करणीभूतो गुण इति । व्यापारानाविष्टस्य करणत्वासंभवेन ज्ञायमानलिङ्गस्यानुमितिकरणत्ववत् क्रियाकरणत्वविशिष्टगुणस्यैव फलकरणत्वमिति भावः । तन्निष्ठम् गुणनिष्ठम् । लक्षणयैव वाच्या प्रातिपदिकस्य गुणमात्रवाचकस्य करणत्वविशिष्टगुणे लक्षणामङ्गीकृत्योपपादनीया । ननु दध्नेति तृतीयया करणत्वोपस्थापनात्तस्य प्रकृत्यर्थे दधन्यन्वये करणत्वविशिष्टगुणो लब्ध इति कुतो लक्षणेत्यत्राह तस्येति । करणत्वस्येत्यर्थः । प्राधान्येन प्रातिपदिकार्थं प्रतिविशेष्यत्वेन । प्रत्ययार्थकारकस्य प्रकृत्यर्थविशेष्यतयैव शाब्दबोधस्य क्लृप्तत्वादिति भावः । द्वितीयपक्षेऽपि प्रातिपदिके लक्षणां दर्शयति यदापीति । गुणनिष्ठकरणत्वस्य निरूपकतासम्बन्धेनैव भावनायामन्वयोऽस्त्विति शङ्कावारणाय योग्येत्यन्तं करणत्वविशेषणम् । यत् भाव्यनिरूपितकरणत्वम्, तस्यैव भावनायां निरूपकतासम्बन्धेनान्वयः । अस्य तु करणत्वेनैवेति भावः । ननु प्रत्ययस्य प्राधान्येन कारकवाचित्वात्प्रकृत्यर्थस्य गुणस्याधेयतासम्बन्धेन करणत्वेऽन्वये गुणनिष्ठकरणत्वं सिद्धमिति कुतो लक्षणेत्यत्राह तृतीयेति । कारकस्य क्रियायां निरूपकतासम्बन्धेनैवान्वयो दृष्टः । भाव्यनिरूपितकरणत्वेन च भावनायां निरूपकतासम्बन्धेनान्वेति । सा च प्रकृते गुणनिष्ठ-

त्वेनान्वयायोग्यत्वात् । करणशब्देनाभिहितं हि करणकारकं तत्वेनान्वययोग्यं न तृतीयाभिहितम् । करणशब्दादिव तृतीयातस्तृतीयोत्पत्तिप्रसङ्गात् ।

अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या । लक्षणया चोपस्थितकरणत्वस्य करणीभूतस्य वा गुणस्य फलभावनायां यत्करणत्वं तदपि लक्षणयैव वाच्यम् । श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात् ।

---

करणत्वनिष्ठकरणतैव । अतः सैव द्वितीया करणता तृतीयार्थः । अतः प्रातिपदिकस्य गुणमात्रवाचित्वे प्रथमकरणत्वालाभात् गुणनिष्ठकरणत्वपर्यन्ते प्रातिपादिकलक्षणेति । क्रियान्वययोग्यस्येति निरूपकतासम्बन्धेनेति शेषः । तृतीयाभिहितस्येति विशेषणोक्तेः कृत्यं दर्शयति करणशब्देनेति । करणशब्देन करणत्वशब्देन करणकारकं करणत्वम् । तत्त्वेन तृतीयाभिहितकरणताद्वारा । अथ वा करणकारकशब्द उभयत्र प्रयुज्यते करणत्वे करणभूते वस्तुनि च । तत्र करणकारकपदेन करणत्वग्रहणमिति बोधनार्थं तृतीयाभिहितस्येत्युक्तम् । करणभूतवस्तुनः करणकारकपदेन प्रकृतेऽग्रहणमेव विव्रियते करणशब्देनेति । तृतीयाभिहितस्यापि तथाऽन्वयेऽनिष्टमाह करणशब्दादिति । तृतीयात इति । ननु प्रत्ययस्य प्रातिपदिकत्वाभावात् कथं तृतीयाऽऽपाद्यते । उच्यते । प्रत्ययार्थस्यापि करणत्वेनान्वयस्य सूत्रकृत्सम्मतत्वे तस्यापि प्रातिपदिकत्वमेष्टव्यं स्यादिति भावः । अथ वा तृतीयाऽभावेऽपि तत्कार्यमस्तु । तुल्ययुक्त्या कर्मत्वस्यापि कर्मत्वेनान्वयप्रसङ्गेन घटकर्मत्वं जानातीत्यर्थे घटं जानातीति प्रयोगः स्यादिति भावः । अतश्चेति । करणत्वद्वयमध्ये तृतीयाया विशेष्यभूतकरणत्वार्थकत्वादित्यर्थः । एवं पक्षद्वये प्रातिपदिके लक्षणामुक्त्वा प्रत्यये लक्षणां दर्शयति लक्षणया चेति । ननु करणत्वमेव तृतीयार्थः । तत्कुतो लक्षणेत्यत्राह श्रूयमाणयेति । प्राति-

अत एव तन्त्ररत्ने चतुर्थं करणीभूतगोदोहनादेः पश्वर्थत्वं समभिव्याहारादित्युक्तम्। अतश्च गुणफलसम्बन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्मविधानमेव स्वीकार्यम्।

तथा सति हि यजिना लघुभूतं करणत्वमात्रं लक्ष्यते। उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफलसम्बन्धविधा-

---

पदिकस्य केवलगुणशक्ततया तदुपरि तृतीया तन्निष्ठं क्रियानिरूपितकरणत्वमेव ब्रूयात् न पुनः करणीभूतगुणादिनिष्ठं फलनिरूपितं करणत्वम्। अतो लक्षणेति भावः। करणत्ववाचिन्या अपि तृतीयायाः करणत्वविशेषे लाक्षणिकत्वन्नाप्रामाणिकमिति व्यनक्ति अत एवेति। करणीभूतेति। गोदोहनेन पशुकामस्य प्रणयेदित्यत्र। चमसेनापः प्रणयेदिति प्रणयनार्थं चमसद्रव्यम्। पशुकामस्य पुनः पश्वर्थं चमसस्थाने गोदोहनम्। समभिव्याहारात् वाक्यात्। अस्यापि करणत्वस्य तृतीयामुख्यार्थत्वे श्रुतिरेव प्रमाणं स्यात्, न वाक्यमिति भावः। यद्यपि करणत्वसामान्यमेव तृतीयार्थः। अथापि प्रकृत्या गुणमात्रोपस्थितौ तद्गतं क्रियाकरणत्वमेव झटित्युपस्थितम्। प्रकृतेरर्थान्तरस्वीकारे च तन्निष्ठकरणत्वव्यक्त्यन्तरमेव ग्राह्यमासीदिति लक्षणाकार्यं यत् गृहीतार्थत्यागेनार्थान्तरस्वीकरणं तदिहाप्यस्तीत्याशयः। एवं तृतीयपक्षासम्भवमुक्तमुपसंहृत्य चतुर्थं परिशेषयति अतश्चेति। यद्यपि चतुर्थात्तृतीय एव ज्यायान्। अत एव दध्नेन्द्रियकामस्य जुहुयादित्यादौ विशिष्टविधिमनभ्युपेत्य गुणफलसम्बन्धाविधिरिष्टः। अथापि धातुपारार्थ्यादिपरिहार एतत्पक्षावलम्बनं भवतीत्याशयेनेदम्। मत्वर्थमात्रमिति। पूर्वं करणत्वविशिष्टगुणो गुणविशिष्टकरणत्वमित्युभयत्रापि करणत्वांशोऽधिकः, इह तु गुणविशिष्टत्येतन्मात्रमिति। तृतीयायाः प्रतीता-

नाल्लाघवं भवति। धातोरत्यन्तपारार्थ्यादिकं तु न भवत्येव। धात्वर्थस्यैव फलोद्देशेन विधानात्।

अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वे तेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्मविधानं स्वीकार्यमुद्भिद्वता यागेन पशुं भावयेदिति। कर्मनामधेयत्वे तु उद्भिच्छब्दस्य न मत्वर्थलक्षणा। मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसम्भवात्। उद्भिदा यागेन पशुं भावयेदिति।

सम्भवति च मुख्येऽर्थे लक्षणा आश्रयितुं न युक्ता। सन्निकृष्टविधानं तु समानमेव। न चैवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातः गुणसमर्पकत्वे मत्वर्थलक्षणापत्तेरिति वाच्यम्। सोमपदस्य लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या लक्षणाश्रयणात्। उद्भिच्छब्दस्य तु नैवं वाच्योऽर्थः कश्चित्प्रसिद्धः। उद्भिद्यतेऽनेनेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारिण्युपपत्तेः। तत्सिद्धमुद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वमिति।

---

र्थत्यागेनार्थान्तरस्वीकारस्यात्रापि तुल्यत्वात्तदनुक्तिः। एवं प्रातिपदिकलक्षणासत्त्वेऽपि तत्र लाघवं सावधानं द्रष्टव्यमिति कियानपि श्रमः, पारार्थ्याद्यभावादुत्कर्षस्तु झटित्येव प्रतीयेतेत्याशयेनाह धातोरिति। सम्भवतीति। सतीति शेषः। ननूद्भिच्छब्दस्य यागनामधेयत्वे उद्भिदर्थविधानाद्विप्रकृष्टार्थविधानम्, नेत्याह सन्निकृष्टेति। उद्भिदर्थ एव यज्यर्थः स च सन्निकृष्ट इति। समानम् विशिष्टविधिपक्षतुल्यम्। विशिष्टविधित्वादिनो विशेषणमपि कल्पितविधिविधेयमिति गौरवमितीह गूढम्। एवं रूढ्या। मास्तु रूढिः। अवयवयोगेनैव किञ्चित् गुणवाचित्वं भवतीत्यत्राह उदिति। गुणे खनित्रादौ। तत्रोद्भिद्यते विदार्यते भूमिरनेनेति व्युत्पत्तिः। यागे त्वाह फलेति। अत्रोद्भिद्यते उत्पाद्यते फलमनेनेति सेति भावः। इदमत्र

'चित्रया यजेत पशुकामः' इत्यत्र चित्राशब्दस्य वाक्यभेदभयात् कर्मनामधेयत्वम् । तथा हि— न तावदत्र गुणविशिष्टयागविधानं संभवति, 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः ।

प्राप्तस्य च यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने

---

बोध्यम्—'एवं योगप्रदर्शनं योगव्युत्पत्त्यभावे नामत्वं न भवतीति दर्शयितुम् । अत एव सोमपदं न नामधेयम् । वस्तुतोऽस्य योगस्य सर्वसाधारण्यात् प्रकृतयागे उद्भित्पदस्य रूढिरपि स्वीक्रियत-इति केचित् । तत्र च रूढिशक्यतावच्छेदकमुद्भित्पदमेव । न च शब्दादनुपस्थितस्य कथं शक्यतावच्छेदकत्वमिति शंक्यम्; तदंशेऽपि शक्त्यभावेऽपि नियमेनोपस्थिततया शक्यतावच्छेदकत्वसम्भवादित्येकः पक्षः । यजेरत्र यादृशधर्मावच्छिन्नलक्षकत्वं उद्भित्पदस्य तादृशधर्मावच्छिन्नवाचित्वमिति स एव यागनिष्ठधर्मः शक्यतावच्छेदक इत्यपरः । रूढिशक्तिर्नास्त्येव । योगेनैव निर्वाहात् । न च योगार्थमादायान्यत्रापि योगादौ तत्प्रयोगापत्तिः, प्राचीनप्रयोगविरहादेव तदयोगादित्यन्ये ।

द्वितीयप्रमाणस्थलमुदाहृत्योपपादयति चित्रयेति । नन्विह सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्रेव गुणविशिष्टकर्मणः फलोद्देशेन विधानमस्तु । अतः 'अप्राप्तास्तु विधीयन्ते बहवोऽप्येकयत्नतः' इति न्यायेन वाक्यभेदाभावात् कथं नामधेयत्वमित्यतः कर्मविधानासम्भवं दर्शयति न तावदिति । तत्र दध्यादिकम् । संसृष्टं समुदितम् । विहितत्वाद्यागस्येति । इह द्रव्यदेवतासम्बन्धश्रवणात्तस्य यागमन्तरेणानुपपत्त्याऽनुमीयमानो याग इहैव यजेतेति कल्पनया विधीयते । न च चित्रावाक्येन यागो विधीयताम् ! इह तु गुणमात्रमिति वाच्यम्; तथा सति द्रव्यदेवतारूपानेकगुणविधौ वाक्यभेदप्रसङ्गादिति भावः । एवञ्च गुणपरत्वे वाक्यभेद इत्याह प्राप्तस्ये-

वाक्यभेदः । अथ चित्राशब्दात् चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मणि निवेशायोगान्नानेन वाक्येन प्रकृते कर्मणि गुणविधानम्, किं तु प्राणिद्रव्यके कर्मणि । तत्रास्य वाक्यस्यानारभ्याधीतत्वात्, अनारभ्याधीतानां च 'प्रकृतौ वा द्विरुक्तत्वात्' इति न्यायेन प्रकृतिगामित्वात्प्राणिद्रव्यकाणां च यागानां 'दैक्षस्य चेतरेषु' इति न्यायेनाग्नीषोमीयप्रकृतिकत्वात्तदनुवादेनानेन वाक्येन गुणो विधीयते ।

---

ति । विधीयमाने ज्ञाप्यमाने । ननु गुणसम्बन्धमात्रं विधेयम् । नातो वाक्यभेद इत्याशङ्कते अथेति । फलसम्बन्धाविधाने पशुकामपदानुवादासम्भवात्सोऽपि विधेय इति शङ्कायां तस्यानुवादत्वं समर्थयिष्यमाणः यजेः प्रकृतयागपरत्वे तदसम्भवात्, यत्परिग्रहे तस्यानुवादत्वं भवति तस्यैव यज्यर्थत्वं वक्तुं तस्याप्रकृतत्वान्न यजिवाच्यत्वमिति शङ्कायामप्रकृतस्याप्युपस्थापकमस्तीत्याह चित्रेति । अप्राणिष्वपि भूमिराप इत्यादिषु स्त्रीत्वनिर्देशाल्लिङ्गभेदः शब्दनिबन्धन इति शङ्कापरिहाराय स्वभावत इति । प्राणिधर्मत्वेनोपपत्त्यसंभव एवान्यथात्वस्वीकारः, अन्यथा सिंहः सिंहीत्येवं नियतव्यवहारासम्भवादिति भावः । ननु तर्हि प्राणिधर्मत्वान्न कुत्रापि कर्मणि निवेशसम्भव इत्यत आह प्राणिद्रव्यक इति । कर्मणि विधीयमानस्य तस्यानर्थक्यतदङ्गन्यायेन तदीयद्रव्ये निवेशसम्भवान्न दोष इति भावः । तत्र प्राणिद्रव्यककर्मसामान्ये । अस्य तदनुवादेनेत्यत्र तच्छब्दार्थेऽग्नीषोमीये घटकत्वेनान्वयः । द्विरुक्तत्वादिति । विकृतिषु हि प्रकृतितः पशुमतिदिश्य तत्र चित्रत्वं विधेयम् । अतिदेशात्प्रागेव प्रकृतेः साङ्गत्वसम्पत्तये प्राकृतपशौ चित्रत्वं प्रागेव विधेयमित्यभिप्रायः । दैक्षस्येति । अग्नीषोमीयस्य विध्यन्त इतरेषु सवनीयादिषु भवतीति सूत्रार्थः । एवं प्राणि-

दैक्षस्य च ज्योतिष्टोमाङ्गत्वेन स्वतन्त्रफलाकांक्षाया अभावात्पशुकामपदं न फलसमर्पकम्, किं तु अग्नीषोमीयपश्वर्जनाङ्गतया प्राप्तकामनानुवादः। तथा च न वाक्यभेद इति चेत्। तथाऽपि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदात्। विशिष्टकारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव। कारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च।

---

द्रव्यक्रयागपरत्वेऽपि फलसम्बन्धाविधानं कुत इत्यत्राह दैक्षस्य चेति। ज्योतिष्टोमाङ्गत्वेनेति। यदग्नीषोमीयं पशुमालभेतेति विधिवाक्ये फलाश्रवणेन प्रकरणात्तदङ्गत्वस्यावसितत्वादिति भावः। ननु पशुकामपदं किमर्थं? फलसम्बन्धाविधानात्। न चायं प्राप्तानुवादः; स्वतन्त्रफलाभावादेव पशुफलाप्राप्तेः। न चाङ्गिभूतज्योतिष्टोमफलस्याङ्गेऽनुवादः; तस्य सर्वेभ्यो ज्योतिष्टोम इति सर्वफलसाधनतया पशुफलनैयत्याभावादित्यत्राह किन्त्विति। अर्जनाङ्गतया अर्जनार्थतया। अस्य प्राप्तेत्यत्रान्वयः। अग्नीषोमीयस्य पशुद्रव्यकतया तदर्जनकामना नियतेति भावः। गुणमात्रविधावपि गुणद्वयविधानावश्यकतया वाक्यभेदो दुष्परिहर इत्याह तथापीति। ननु नास्ति वाक्यभेदः, तृतीयोपात्ते करणत्वे चित्रत्वस्त्रीत्वयोः सामानाधिकरण्येनान्वयेनोभयविशिष्टस्य करणत्वस्यैकस्यैव विधानादित्यत्राह विशिष्टेति। ननु नात्र गौरवलक्षणो वाक्यभेदः, कारकमात्रे विधिव्यापारात्। विशेषणं तु चित्रत्वादि कल्पितविधिविधेयमित्यतो दोषान्तरमाह कारकस्येति। तृतीयावगतकरणत्वस्य यागभावनान्वयिनः पशुगतत्वात्पशुविधायिनोत्पत्तिवाक्येनैव तस्यापि प्रापितत्वात्तदनुवादेन चित्रत्वं स्त्रीत्वं च विधेयं भवतीति वाक्यभेद इति भावः। ननु नात्र द्रव्यनिष्ठं करणत्वमुच्यते। किं तु चित्रत्वस्त्रीत्वनिष्ठं करणताद्वयं अरुणयैकहायन्येत्यत्रारुण्यनिष्ठमिवोच्यते। तत् द्वयमप्राप्तमेकया तृतीयया विधीयत इति न वाक्यभेद इत्यतो दोषा-

पशुकामपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्वे आनर्थक्यापत्तेश्च । न च नियमतः पश्वर्जनकामना भवति, कामनातः प्रागेव केनचिद्दत्ते पशौ तदभावात् । तथा च पशुकामपदस्य नित्यवच्छ्रवणबाधः ।

दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च । आमिक्षायागानुवादेन वाजिनविधानवत् । 'कृष्णसारङ्गोऽग्नीषोमीयः' इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारङ्गवर्णेनावरुद्धे चित्रत्वस्यानारभ्याधीतेन सामान्यशास्त्रेण विधानानु-

---

न्तरमाह पश्विति । स्वरसतः फलपरस्येति । कामनायाः फलविषयिण्या एव मुख्यत्वात् स्वर्गकाम इत्याद्यनुसाराच्च पशोः फलत्वालोचनादिति भावः । अनुवादत्वमेव न सम्भवतीत्याह न चेति । ननु नियमतो भवितव्यमिति कुतः ? तत्राह तथा चेति । नित्यवच्छ्रवणबाधः नित्येनान्येन तुल्यं नित्यविषयकत्वार्हं वा यच्छ्रवणं तद्बाधः । पाक्षिकत्वगमकविरहेण श्रवणं नित्यत्वमेव गमयतीति नियतप्राप्तानुवाद एव कर्तव्यः । तदसम्भवाच्च फलसम्बन्धो विधातव्य इति वाक्यभेद इति भावः । ननु लब्धेऽपि पशौ पश्वन्तरकामना सम्भावितैव । किं च विधिव्यापाराधिक्यकल्पनापेक्षया कथञ्चिदनुवादत्वकल्पनमपि नातीव दोष इत्यतोऽन्यदाह दैक्षस्येति । ननु पशुशब्दस्य पुंलिङ्गस्य पुंसि स्त्रियां च साधारणत्वेनाग्नीषोमीयं पशुमालभेतेत्युत्पत्तिवाक्यश्रुतस्य पुंस्त्वस्य शब्दगतत्वाङ्गीकारान्न पुंस्त्वावरोधः । न च छागस्य वपाया इति मन्त्रवर्णात्पुंस्त्वप्राप्तिरिति वाच्यम् । मन्त्रवर्णस्याविधायकत्वादित्यतोऽन्यदाह कृष्णेति । अथ वोत्पत्तिशिष्टेति अजोऽग्नीषोमीय इति शाखान्तरवाक्यं पुंस्त्वविधायकमभिसंहितम् । एवं चित्रत्वं न विधेयमित्याह कृष्णेति । विशेषविहितेन अग्नीषोमीयरूपविशेषोद्देशेन विहितेन । स्वेति दैक्षेत्यर्थः । सामान्यशास्त्रेण यागत्वेन या-

पपत्तेश्च । पाञ्चदश्यावरुद्ध इत्र साप्तदश्यविधानम् ।

अथ मा भूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम् । 'सारस्वती मेषी' इति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुणविधानं स्यात् । चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात् । न च प्राकृतेन कृष्णसारङ्गवर्णेन नैराकांक्ष्यान्न चित्रत्वविधानं युक्तमिति वाच्यम् । उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेन्मैवम् ।

न हि चित्रयेत्येकेन पदेन स्त्रीकारकस्योद्देशः चित्रत्वस्य च विधानं सम्भवति । एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः । उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात् । अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र विशिष्टभक्षविधिर्न तु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये ।

मेष्यनुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च । उभयविधाने वाक्यभेदात् । प्रकृतस्य च यागस्य फलाकांक्षाया अनिवृत्तेः ।

---

गोपस्थापकेन शास्त्रेण । न हि विशेषविहिते जाग्रति सामान्यविहितमवकाशं लभते । न वा सन्निधिपठितेऽनारभ्याधीतमिति भावः । सन्निधिपठितावरुद्धेऽनारभ्याधीतविधानानुपपत्तौ दृष्टान्तं दर्शयति पाञ्चदश्येति । विधेयं गुणं मेष्यनुवादिपदं च दर्शयति चित्रयेति । बाधेति । ननु कृष्णसारङ्गवर्णश्चित्रत्वमेवेति कथं बाध इति चेदेवमपि विधिसार्थक्यायान्यादृशचित्रत्वमपि गृह्यत इति तद्वर्णनियमबाध इति । वाक्यभेदेति । एकस्य पदस्य पदद्वयकार्यकारित्वस्वीकारे पदभेदः प्रसज्यते स एव वाक्यभेद इत्युच्यते । विशिष्टेति । प्राथम्यविशिष्टेत्यर्थः । ननु स्त्रीत्वस्य प्राणिधर्मत्वात् यथा यजेतादशयागपरता तथा स्त्रीत्वनिवेशौचित्यान्मेषीयागपरतैव । तदुद्देशेन चित्रत्वविधानेऽर्थान्मेष्यनुवादेन विहितं भवति । तत्राह मेषीति ।

विश्वजिन्न्यायेन फलकल्पने गौरवम् । दधिमध्विल्यानुत्पत्तिवाक्ये-नैतस्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च । चित्राशब्दस्य तु कर्मनामधेयत्वे प्रकृतस्य कर्मणः फलाकांक्षस्य फलसम्बन्धमात्रकरणान्न वाक्यभेदः । प्रकृताया इष्टेरनेकद्रव्यकत्वेन चित्राशब्दस्य तत्रोपपत्तेः । तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयमिति ।

अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्य-शास्त्रात् । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमा-नत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत् । तथाहि—विधिना तावत्तदेव विधेयं यत्प्रकारान्तरेणाप्राप्तम् । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । अग्निहोत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयः स शास्त्रान्तरेण प्राप्तः ।

कथमिति चेत् शृणु । यदि तावदग्नौ होत्रमस्मिन्निति सप्तमी-

---

गौरवमिति । एतद्गौरवपरिहाराय चित्रावाक्येऽनर्थकस्य पशुकामपदस्य तत्र संयोजने एकवाक्यतया प्रतीयमानेऽत्र पदपृथक्काराद्वाक्यभेद इति भावः । अप्रकृतयागग्रहणेनार्थवर्णनप्रकारेषु सर्वत्र यो वाक्यभेदः प्रसजति तमाह दधीति । रूपत्वव्याप्यजातिवचनस्य चित्राशब्दस्य कर्मनामधेयत्वं कथमि-त्यत्राह प्रकृताया इति । यागे कथं स्त्रीत्वमित्यत्रोक्तं इष्टेरिति । पुंलि-ङ्गवत्स्त्रीलिङ्गमपि शब्दनिबन्धनमिति भावः ।

तृतीयं निमित्तं निरूपयति अग्निहोत्रमिति । तत्प्रख्यशास्त्रपदस्यार्थं विवृण्वन्नाह तस्येति । नन्वन्यदपि शास्त्रं प्रापकमस्तु । एतदपि । किं च तत्प्रापकं शास्त्रमित्यत्र विस्तरितुमाह तथा हीति । आद्यं प्रतिवक्ति विधिनेति । द्वितीयं समाधातुमुपक्रमते अग्नीति । नन्वग्निहोत्रपदेऽग्निपदे न वह्निर्वा देवता वोपस्थापयितुं शक्यते । तत्रैकप्राप्तावप्यपरविधानसम्भवा-त्कथं शास्त्रान्तरतः प्राप्तिरिति पृच्छति कथमिति । प्रथमं परिहर्तुमाह यदीति । नात्राग्नौ होत्रं होम इति तत्पुरुषः ; सप्तमीतत्पुरुषस्य शौण्डादि-

समासमाश्रित्य होमाधारत्वेनाग्निर्विधेय इत्युच्येत तदा यदाहवनीये जुहोतीत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम् ।

अथाग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्याग्निरूपदेवतानेन समर्प्यते इति चेत्— न। शास्त्रान्तरेण प्राप्तत्वात् । किं तच्छास्त्रान्तरमिति चेदत्र केचित्— 'यदग्नये च प्रजापतये च सायं जुहोति' इति शास्त्रान्तरेण होमानुवादनाग्निप्रजापत्योर्विधानान्नाग्निहोत्रपदं देवतासमर्पकम् ।

न चोभयविधाने वाक्यभेदः । परस्परनिरपेक्षविधाने हि वा-

---

गणपठितमात्रविषयकत्वेनेहासम्भवात् । होत्रपदस्यौणादिकत्रन्प्रत्ययान्तस्य होमसाधनद्रव्यपरतया तत्पुरुषस्वीकारे होमेऽग्निहोत्राभेदासम्भवाच्च । अतो बहुव्रीहिं दर्शयति अग्नाविति । होमाधारत्वेनेति । होमसाधनद्रव्याधारत्वप्रतीतावपि यदाहवनीये जुहोतीति वाक्यप्राप्तत्वदर्शनायैवं निष्कृष्य कथनम् । प्राप्तत्वादिति । तस्य होमसामान्ये आहवनीयाग्निविषयकतयैतद्विषयकत्वस्यापि सत्त्वादिति भावः । द्वितीयं प्रत्याख्यातुमाह अथेति । अत्र किं तच्छास्त्रमिति प्रश्ने । केचिन्न्यायसुधाकृतो विधिवाक्यमेव शास्त्रमाहुः । अन्ये पुनर्मन्त्रलिङ्गमेव । तत्र प्रथममाह केचिदिति । आहुरिति शेषः । होमानुवादेनेति । अग्निहोत्रं जुहोतीत्यनेन होमस्य विहितत्वादिति भावः । विधानादिति । न च विनिगमनाविरहः । अग्निहोत्रं जुहोतीत्यनेनाग्निविशिष्टहोमविध, वुत्पत्तिशिष्टदेवतावरोधेन यदग्नये, यत्सूर्यायेति वाक्ययोर्देवतामात्रविधानासम्भवेन विशिष्टकर्मान्तरविधायित्वप्रसङ्गात् । नन्वग्नये च प्रजापतये चेति विभिन्नकारकविभक्तिश्रवणाद्भावनायां प्रत्येकान्वयस्यैव वक्तव्यतया विशिष्टान्वयासम्भवाद्वाक्यभेद इत्याशंक्याह न चेति । वाक्यभेद इति । तथा च तत्परिहारायैकतरस्यान्यतः प्राप्तिरावश्यिकेति मन्त्रवर्णस्यैवाग्निप्रापकत्वमिति शङ्कितुराशयः । विधेययोः परस्परान्वयसत्त्वान्न वाक्यभेद इति दर्शयति परस्परेति । अन्वयस्यापेक्षामूलकत्वान्निरपेक्षेत्युक्तम् ।

वाक्यभेदः स्यात्, अग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकं विधिव्यापारात् । चशब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्याख्यातान्वयान्न वाक्यभेदः ।

अत एव ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यविहितदक्षिणानुवादेन 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति वाक्येन गवादीनां विधानं दशमोक्तं संगच्छते । परस्परसापेक्षाणां गवादीनां विधानेन वाक्यभेदाभावात् । अन्यथा दक्षिणानुवादेनानेकेषां गवादीनां विधानं नैव संगच्छेतेति ।

अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयो न तु समुच्चितयोर्देवतात्वं, पृथक्कारकविभक्तिश्रवणात् । चकारार्थस्य विभक्त्यर्थे-

---

अनन्वितेत्येवाभिमतम् । व्यापारः अज्ञातज्ञापनम् । ननु सर्वमिदमपेक्षासत्त्वे ; तत्रैव को हेतुस्तत्राह चशब्देति । चशब्दे सति विशिष्टविधाने सम्मतिं दर्शयति अत एवेति । तस्य गोः । परस्परेति । गवादीनां परस्परसापेक्षाणां सतां विधानेनेत्यन्वयः । नैव संगच्छेतेति । न च दक्षिणाया एव सकलद्रव्यविशिष्टाया अनेन वाक्येन विधिरिति वाच्यम् । तथा सति ऋत्विग्भ्य इत्युक्तवाक्यवैयर्थ्यात् । न हि तेन दक्षिणाया ऋत्विक्सम्बन्धो बाध्यते , विहिताया दक्षिणायाः संप्रदानापेक्षत्वेन ऋत्विजां च कर्मकरतया दक्षिणापेक्षत्वेन तत्सम्बन्धस्य स्वत एव सिद्धेरित्याशयः । ननु परस्परसापेक्षस्य भावनान्वये गौश्चेति वाक्ये तेषां परस्परसापेक्षाणां विधानाद्यथाऽऽनतिसाधनत्वमेकं तथा होमीयदेवतात्वं व्यासज्यवृत्त्येकमेवाग्नीषोमीयवत्स्यात् । तथा चाग्निहोत्रमिति तदेकदेशमादाय नामत्ववर्णनमयुक्तमित्याशङ्कायामाह अग्नीति । पृथगिति । विभक्तिपार्थक्यं हि एकैकस्येतरानपेक्षस्य विभक्त्यर्थसम्बन्धं कुर्वत् देवतात्वभेदं गमयति, यथा व्रीहिभिर्यजेतेति तृतीयापार्थक्यं यवाद्यनपेक्षं व्रीहिगतं करणत्वमिति भावः ।

नान्वयात्तस्याप्राधान्यात् । अतश्च नाग्नीषोमादिवदग्निप्रजापत्यो- र्देवतात्वमिति ।

अन्ये त्वाचार्या आहुः। अग्नये च प्रजापतये च सायं जुहोतीति वाक्यं नाग्नेः प्रापकम्, होमानुवादेन प्रजापतिविधानात् । न च

---

कारकेति । युक्तं गौश्चेत्यत्र प्रथमाया एव सत्त्वेन कारकविभक्त्यभावात् द्रव्याणामेव परस्परसाहित्यावगमात्तावन्निष्ठमेकमानतिसाधनत्वमिति । इह तु कारकविभक्तिश्रवणात्स्वस्वकारकान्वयदशायां तयोर्न साहित्यं प्रतीयते । अन्यथा हि विभक्तिद्वयवैयर्थ्यमिति भावः । ननु देवतयोःसतोःसमुच्चय इत्युक्त्या विभक्त्यर्थदेवतात्वस्य प्रकृत्यर्थेऽन्वयः; देवतात्वविशिष्टयोश्चाग्नि- प्रजापत्योः समुच्चयेऽन्वय इति प्रतीयते । नैतद्युक्तम्, विभक्त्यर्थस्य प्रकृ- त्यर्थेऽन्वयासम्भवात् चार्थस्याप्राधान्यावश्यकत्वाच्च । अतः समुच्चयविशि- ष्टाग्न्यादेर्देवतात्वेऽन्वयो वक्तव्य इति व्यासज्यवृत्त्येव देवतात्वं स्यादित्यत्राह चकारेति । तस्य चकारार्थस्य। विभक्त्यर्थे तदन्वयप्रयुक्तं तस्याप्राधान्यम् । तथा च प्रकृत्यर्थस्य प्रत्येकं विभक्त्यर्थेऽन्वयः, तादृशे विभक्त्यर्थे च चार्था- न्वय इत्यप्राधान्यं रक्षितं भवतीति न व्यासज्यवृत्ति देवतात्वमिति भावः । न चैवं समुच्चयविशिष्टं यदग्निदेवतात्वं यच्च प्रजापतिदेवतात्वं तदुभयविधा- नाद्वाक्यभेद इति वाच्यम्; चकारबलात्परस्परसापेक्षत्वप्रतीत्याऽग्निदेवतात्व- समुच्चयविशिष्टप्रजापतिदेवतात्वस्यैकस्य विधिरित्याशयात् । यद्वा विभ- क्त्यर्थेनान्वयादित्यनेन चार्थस्य प्रकृत्यर्थसम्बन्धो नास्तीत्युक्तम् । एवमपि समुच्चितदेवतात्वद्वयविधाने वाक्यभेद इत्यत्र तस्याप्राधान्यादित्युक्तम् । विभक्त्यर्थस्याप्राधान्यादित्यर्थः । विभक्त्यर्थेनान्वयो नाम विभक्त्यर्थसम्ब- न्धश्चार्थे । तथा च विभक्त्यर्थदेवतात्वद्वयसमुच्चयविधानान्न वाक्यभेद इत्या- शयः ।

द्वितीयं मन्त्रलिङ्गपक्षमाह अन्ये त्विति । अग्नेः प्रापकम् अग्नि- विषयकाज्ञातज्ञानप्रयोजकम् । प्रजापतिविधानात् प्रजापतिमात्रविधा-

विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम् । विधिना हि तदेव विधीयते यत्प्रकारान्तरेणाप्राप्तम् ।

तत्र यथानेन वाक्येन सायंकालो न विधीयते सायं जुहोतीति वचनान्तरेण प्राप्तत्वात्, तथाग्निरपि न विधीयतेऽग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रवर्णादेव प्राप्तत्वात् । मन्त्रवर्णस्यापि देवतासमर्पकत्वमस्त्येव । अत एवोपांशुयाजे विष्ण्वादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम् ।

नन्वेवं प्रजापतिदेवतया अग्नेर्बाधः स्यात् । चतुर्थ्या हि प्रजा-

---

नात् । तत्र प्रकारान्तरप्राप्तस्यैव विधेयत्वे सति । न खलु विधिवाक्ये यावन्ति पदानि तावतामर्था विधेया इत्याशयेनाह यथेति । मन्त्रवर्णात् मन्त्रघटकादग्निप्रकाशकादग्निरिति वर्णसमुदायात् । ननु मन्त्रस्य विध्यघटितस्याविधायकत्वात्कथं प्रापकत्वमित्यत्राह मन्त्रेति । मन्त्रस्य कर्माङ्गतायाः स्वप्रकाशितार्थद्वारैव वक्तव्यत्वात्प्रकाशितार्थभूताया देवतायाः कर्मसम्बन्धाभावे तदसम्भवाच्छ्रुतिः कल्प्यत इति भावः । श्रूयमाणविधौ देवताविधानमस्वीकृत्य मन्त्रतस्तत्कल्पनेऽनुरूपं दृष्टान्तमाह अत एवेति । आदिना प्राजापत्याग्नीषोमाणां ग्रहणम् । मान्त्रवर्णिकम् मन्त्रवर्णसमर्प्यम् । तथा च यथा तत्र विष्णुरुपांशुयष्टव्य इत्येवंविधिवन्निर्देशसत्त्वेऽपि मन्त्रवर्णत एव देवताप्राप्तिस्तथैवेहापि । तत्र तस्योपांशुयाजविध्यर्थवादतयाऽन्यपरत्वम् । अत्राग्निहोत्रमित्यस्य नामधेयतयाऽन्यपरत्वमिति विवेकः । इह मन्त्रवर्णस्य प्रापकत्वासम्भवादवश्यमग्निरपि विधातव्य इत्याशङ्कते नन्विति । एवं अग्नेर्मान्त्रवर्णिकत्वे, प्रजापतिमात्रविधान इति वाऽर्थः । कुत इत्यत्राह चतुर्थ्येति । अस्त्वेतत् । तावता कथं बाध्यबाधकभावः । न खलु चतुर्थीत्वं बाधकत्वे प्रयोजकम् । न वा मन्त्रवर्णत्वं बाध्यत्वे इति शङ्कायां सहेतुकं प्रमाणप्राबल्यदौर्बल्यं प्रदर्श्य तत एव बाधमुपपादयति

पतेर्देवतात्वमवगम्यते, अग्नेस्तु मान्त्रवर्णिकम् । तत्र 'साऽस्य देवता' इति देवतात्वे तद्धितस्मरणवद्यद्यपि देवतात्वे चतुर्थीस्मरणं नास्ति, संप्रदाने चतुर्थीति संप्रदाने तस्याः स्मरणात्, तथाऽपि त्यज्यमानद्रव्योद्देश्यत्वं तावद्देवतात्वम् । तच्च संप्रदानस्वरूपान्तर्गतम्, त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्य संप्रदानत्वात् । अतश्चतुर्थीतः संप्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव । मन्त्रवर्णात्तु न देवतात्वं प्रतीयते, किं त्वधिष्ठानमात्रम् । अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः । यथाहुः—

---

तत्रेति । देवतात्वावगम इत्यर्थः । अस्य विषयतया देवतात्वेऽन्वयः । अथ वा चतुर्थीमन्त्रवर्णयोरित्यर्थः । अस्य 'अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः' इत्यत्र मन्त्रवर्णादावन्वयः । ननु साक्षाद्देवतावाचित्वाभावस्योभयत्र तुल्यत्वात्कथं प्रबलदुर्बलभाव इत्याशङ्कामुद्भाव्य निरस्यति साऽस्येति । तद्धितस्मरणवदिति तथा च युक्तं तद्धितेन देवताप्रापकप्रमाणान्तरबाधनमिति भावः । संप्रदाने संप्रदानत्वरूपार्थे । तथापीति अस्य देवतात्वप्रतीतिरस्त्येवेत्यनेन सम्बन्धः । देवतात्वप्रतीतिप्रयोजकं संप्रदानैकदेशत्वं देवतात्वे उपपादयति त्यज्यमानेति । यद्यपि त्यज्यमानद्रव्योद्देश्यत्वमात्रं न देवतात्वम् । तस्य 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणादावपि सत्त्वेनातिप्रसक्तत्वात् । अतः प्रतिग्रहीतृत्वाभावविशिष्टं तदेव देवतात्वम् । देवतायाश्च मीमांसकबुद्ध्या विग्रहाद्यभावात्प्रतिग्रहासामर्थ्याल्लक्षणोपपत्तिः; अथापि चतुर्थ्या न तावति लक्षणा । प्रथमतश्चतुर्थ्या त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वोपस्थितौ तत्र प्रतिग्रहीतृत्वस्य प्रकृत्यर्थदेवतान्वयबाधे उद्देश्यत्वांशग्रहणेनैवोपपत्तेः । अत उक्तं त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वमिति । संप्रदानत्वादिति । अत्र संप्रदानपदं 'संप्रदाने' 'संप्रदानैकदेशतया' इत्यत्रेव संप्रदानस्वरूपपरम् । स्वरूपं च तन्निष्ठोसाधारणधर्मः । अत एकत्वप्रत्ययोपपत्तिः । अधिष्ठानमा-

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परमिति ॥

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्नेर्बाधः स्यादिति चेत् सत्यम्।

स्याद्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात्। विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते। समुच्चितोभयविधानापेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्।

अतश्च न बाधकत्वम्, निरपेक्षविधानाभावात्। यथा च त्वन्मतेऽग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते

---

त्रमिति मात्रपदेन देवतात्वव्यवच्छेदः। यद्यप्यग्नये जुष्टं निर्वपामीत्यादौ चतुर्थ्यस्ति; अथापि त्यज्यमानद्रव्योद्देश्यत्वे उद्देश्यत्वमात्रं चतुर्थ्याऽवगम्यते। त्यागतत्कर्मद्रव्यादिलाभस्तु यजिधात्वादिसमभिव्याहारे, न त्वन्यदा। अपि च विधिसमभिव्याहृतचतुर्थीतस्तदसमभिव्याहृतमान्त्रचतुर्थ्या दौर्बल्यमेवेति ध्येयम्। पुनःशब्दो देवतात्वाबोधकत्वरूपं वैलक्षण्यं व्यनक्ति। सत्यमिति प्राबल्यदौर्बल्याद्यङ्गीकारः। ननु समुच्चयविशिष्टप्रजापतिविधाने प्रजापतिमात्रविधानाभावाद्गौरवमित्यत्राह समुच्चितेति। अग्निसमुच्चयविशिष्टप्रजापतिविधानेऽग्न्यंशेऽपि विशेषणविधिकल्पनाद्गौरवम्। न तदिदानीमिति भावः। निरपेक्षेति। विधीयमानो हि समुच्चयो निरूपकापेक्षो मन्त्रप्राप्ताग्निबाधे नात्मानं लभत इति भावः। ननु त्वन्मते समुच्चयस्य प्रजापतेश्च विधानम्। मन्मतेऽग्नेः प्रजापतेश्च। न तु समुच्चयस्यापि। उभयोरपि देवतयोश्चतुर्थीरूपतुल्यप्रमाणप्रमिततया मिथो बाधासम्भवादेव तत्सिद्धेः, अतो न मन्मते गौरवमिति शङ्कां भङ्ग्या परिहरति यथा चेति। तथा च त्वयाऽपि समुच्चयो विधातव्यः। अत्यन्तबाधाभावेऽपि पाक्षिकबाधप्रसङ्गात्। अतोऽस्मत्पक्ष एव लाघवमिति भावः।

अत्र यदग्नये चेति वाक्येऽग्निविधानमाचक्षाणानामयमाशयः—अत्र ह्येवं वाक्यजातं श्रूयते, यदग्नये च प्रजापतये च सायं जुहोति । यत्सूर्याय प्रजापतये च प्रातरिति देवताविधिद्वयम् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति एकैकदेवतालिङ्गकं मन्त्रद्वयम् । अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति मिश्रलिङ्गकं देवताद्वयलिङ्गकतया प्रतीयमानं मन्त्रद्वयम् । एषां चतुर्णां मन्त्राणां विनियोजकविधयश्च 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति? सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति ; अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येव सायं होतव्यम् ; सूर्यो-ज्योतिर्ज्योतिरग्निः स्वाहेत्येव प्रातरिति । एषु वाक्येष्वनूद्यमानोऽग्निहोत्रहोमः सायं जुहोति प्रातर्जुहोतीति वाक्यद्वयेन सायं प्रातश्च प्रयोज्यत्वेन चोदित इति नैषु कालो विधेयः । अत्र यदग्नये चेति वाक्यस्याग्निविधायकत्वं परित्यज्य तस्य मान्त्रवर्णिकत्वोक्तिर्न सम्भवति । तथा सति चतुर्थ्युपात्तप्रजापतिदेवतया तस्य बाधप्रसङ्गात् । यदि प्रबलप्रमाणबोधितेनापि दुर्बलस्य न बाधः । तर्हि मिश्रलिङ्गकमन्त्रबलात्सायं होमे सूर्यस्यापि देवतात्वप्रसङ्गः । किं च यदग्नये चेति वाक्येन होमसामान्योद्देशेन प्रजापतिविधानात्तावतैव प्रातर्होमेऽपि तस्य प्राप्ततया यत्सूर्यायेति वाक्यं व्यर्थम् । न हि प्रातर्होमे सूर्यसमुच्चितप्रजापतिविधानार्थं तद्वाक्यं भवति। अग्नेरिव सूर्यस्यापि मन्त्रलिङ्गबलादेव प्राप्तत्वात् । प्रातर्होम एव सूर्यदेवतायाः प्राप्तिरपि सूर्यमन्त्रस्य प्रातर्विनियोगादेव सिद्धा । यत्र मन्त्रो विनियुक्तस्तत्रैव हि तत्प्रकाशितदेवतायाः प्राप्तिः । अग्नेरपि सायंहोमेऽग्निमन्त्रविनियोजकविधिबलादेव सिद्ध्या यदग्नये चेति वाक्ये सायंहोमत्वेनोद्देश्यत्वस्यानावश्यकत्वात् । तथा च तत्रत्यसायंशब्दवैयर्थ्यमप्यापद्यते । अपि च देवताया मान्त्रवर्णिकत्वे मन्त्रे ज्योतिष्ट्वगुणविशिष्टतया तत्प्रकाश-

प्रजापतेर्न पाक्षिकमग्निबाधकत्वं, समुच्चयविधानात्, एवं मन्त्रवर्ण-प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेऽपि न बाधकत्वमिति तुल्यम्।

यस्त्वग्नेर्मान्त्रवर्णिकत्वेऽग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति मिश्र-

---

नाद्विशिष्टस्य देवतात्वं स्यात्। अतो यदग्नय इति वाक्यमेवाग्निविधायकम्। तस्य च होमसामान्योद्देशेन विधाने प्रातर्होमेऽपि प्रसक्त्या सायंकालिकहोमोद्देशेन तद्विधिः। न च सायंपदार्थविशिष्टहुधात्वर्थानुवादे वाक्यभेदः तस्य पदद्वयस्य परस्परानन्वयादिति वाच्यम् लक्षणया सायंशब्दस्य सायङ्कालिकहोमपरत्वात्। हुध तोः साधुत्वार्थतयोपयोगात्। एवं च सूर्यदेवतायास्सायंहोमे विध्यभावान्न मिश्रलिङ्गकमन्त्रबलात्सूर्यस्य सायंहोमे प्राप्तिः। एवं यत्सूर्यायेति वाक्यमपि प्रातर्होमे सूर्यप्रजापतिरूपदेवताद्वयविधायितया सार्थम्। नन्वेवं साक्षाद्विधिनैव सायंहोमेऽग्निप्राप्तया अग्निर्ज्योतिरग्निःस्वाहेति मन्त्रस्य लिङ्गादेव सायंहोमे विनियोगः सिद्ध इति तद्विनियोजकवाक्यं व्यर्थमिति चेन्न; एतद्विध्यभावे मिश्रलिङ्गकमन्त्रस्याग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्यस्य सायंहोमे साक्षाद्विनियोगविधिसत्त्वेन तेन मन्त्रेणायं बाधितः स्यादिति तद्व्यावृत्तये तद्विधिचारितार्थ्यात्। न च मिश्रलिङ्गकमन्त्रविधिरपि मास्तु; विधिबलादेव शुद्धलिङ्गकमन्त्रस्येव तस्यापि प्राप्तिसम्भवादिति वाच्यम्; मिश्रलिङ्गकमन्त्रयोरुभयोरप्यग्निसूर्यदेवताद्वयप्रकाशकत्वेन प्रातर्होमेऽयं सायंहोमे चायमिति नियामकप्रमाणाभावेनाव्यवस्थया प्राप्तिः स्यादिति मिश्रलिङ्गकमन्त्रविध्यावश्यकत्वात्। तथा च तद्विहितमन्त्रविशेषेण शुद्धस्य बाधो मा भूदिति एतद्विधिसार्थक्यम्। एवं वाक्यजातं कृत्स्नमपि सार्थकं भवतीति यदग्नय इति वाक्यमेवाग्निविधायकमिति।

एवमाचक्षाणैर्यानि मान्त्रवर्णिकत्वे दूषणान्युपक्षिप्तानि, तानि क्रमेणानूद्य परिहरति यस्त्वित्यादिना। मिश्रलिङ्गेति। मन्त्रगतलिङ्गे मिश्रत्वं

लिङ्गमन्त्रवर्णबलात् सायंहोमस्य द्विदेवत्यत्वापत्तिरिति । तन्न । अग्नि-समुच्चितप्रजापतिविधानवत्सूर्यसमुच्चितस्याविधानात्प्रबलप्रमाणबाधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात् ।

यत्त्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धे यदग्नये च प्रजापतये च सायं जुहोतीति यत्सूर्याय प्रजापतये च प्रातर्जुहोतीति वाक्यद्वयं व्यर्थमिति ; तन्न । भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात्, सायंहोमेऽग्निसमुच्चितप्रजापतिविधानं, प्रातर्होमे सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति मन्त्रवर्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितम् । न चैतदेकेन वाक्येन सिद्ध्यति । अतोऽर्थवद्वाक्यद्वयम् ।

यत्तु— अग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्याग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्येन सायंहोमे विनियुक्तत्वात् तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेर्यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति । एवं यत्सूर्याय चेति वाक्ये प्रातश्शब्दो व्यर्थ इति । किं च मन्त्रवर्णेन ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनाद्विशिष्टस्यैव देवतात्वापात इति ।

तदपि न, होमानुवादेन देवताद्वयविधानेऽपि मन्त्रवर्णयोर्लिं-

---

देवताद्वयविषयकबाधानुकूलत्वम् । मिश्रे लिङ्गं यत्रेति व्युत्पत्तौ तु मिश्रत्वं देवताया एकविशिष्टत्वरूपम् । अग्नीति । अग्नेरिहाविधानेऽपि अग्नय इत्यनुवादबलाद्वस्तुतस्तन्निरूपितो यः स एव समुच्चयश्चकारेणोपस्थाप्यते । न सूर्यनिरूपित इति भावः । प्रजापतिविधिः प्रातस्सायंहोमयोरित्यादिः । एकेनैवेति होमसामान्योद्देशेन विधानसम्भवादिति भावः । मात्रेति समुच्चयव्यवच्छेदः । सिद्ध्यतीति । न खल्वेकेन समुच्चयेन विशिष्टस्य विधानेऽन्यसमुच्चयविशिष्टविधिः सिद्ध्यतीति । एवं सायंशब्दवैयर्थ्यसम्भवरीत्या । त्वन्मते वैयर्थ्यपर्यालोचने वैयर्थ्यमिदं सोढव्यं भवतीत्याह होमेति । होमानुवादेन सायङ्कालिकहोमानुवादेन प्रातःकालिकहोमानुवा-

ङ्गादेव प्राप्तिसम्भवात्तद्विध्यानर्थक्यात् । मिश्रलिङ्गमन्त्रविधिपर्युदेन च । देवताद्वयविधानेऽपि अग्निप्रजापतिद्वयसूर्यप्रजापतिद्वयविधानेऽपि । तद्विध्यानर्थक्यात् शुद्धलिङ्गमन्त्रविनियोजकविधिद्वयवैयर्थ्यात् । तत्तत्कालिकहोमानुवादेनाग्निसूर्यविधानेन तत्तद्देवताप्रकाशकमन्त्रयोस्तत्तत्काल एव प्राप्तत्वात् न तत्तत्काले मन्त्रव्यवस्थासिद्ध्यर्थत्वं तयोरिति भावः । ननु विध्यभावे लिङ्गादेव विनियोगो यावत्क्रियते, तावन्मिश्रमन्त्रद्वयमेव प्राप्तं भवति ; तस्यापि प्रकृतदेवताप्रकाशकत्वात् साक्षात्तद्विनियोजकविधिद्वयसत्त्वाच्च । एवं चानयोर्मन्त्रयोस्ताभ्यां विधिभ्यां पर्युदासे प्राप्ते पुनरप्यनयोरप्यङ्गभाव आभ्यां विधिभ्यां बोध्यत इति सार्थक्यमिति शङ्कामनुवदन्नाह मिश्रेति । विधानेऽपीति । अत्र शुद्धलिङ्गमन्त्रविधिद्वयवत् मिश्रलिङ्गमन्त्रविधिद्वयमपि व्यर्थमेव । तयोरपि मन्त्रयोर्लिङ्गादेवाङ्गसद्भावात् । न च सायंहोमे प्रातर्होमे च शुद्धलिङ्गमन्त्रयोर्व्यवस्थया विधिमन्तरेव प्राप्तिसम्भवेऽपि मिश्रलिङ्गमन्त्रयोर्न तत्सम्भवः । तयोरेकैकस्यापि देवताद्वयप्रकाशकत्वेन सायंहोमेऽग्निर्ज्योतिरिति मन्त्रस्येव सूर्यो ज्योतिरिति मन्त्रस्यापि प्राप्तिसम्भवात् । एवं प्रातर्होमेऽप्यन्यस्य । तथाच मन्त्रव्यवस्थासिद्ध्यै तद्विधिद्वयमावश्यकमिति वाच्यम् । तर्हि मिश्रलिङ्गमन्त्रविध्योरव्यवस्थाप्राप्तमन्त्रव्यवस्थार्थत्वेनैवोपपत्तौ प्रकरणपाठतयोर्लिङ्गकल्प्यविनियोगयोः शुद्धलिङ्गमन्त्रयोः पर्युदासकरत्वेन सार्थक्यस्याप्रसक्तत्वात् प्रतिप्रसवप्रसक्त्यभावेन शुद्धमन्त्रविधिद्वयवैयर्थ्यस्य वज्रलेपत्वात् । वस्तुतो यदग्नय इति वाक्येनाविहितत्वेन सायं होमे सूर्यस्य, प्रातर्होमेऽग्नेश्चाभावेन मिश्रलिङ्गमन्त्रघटकस्यैकैकस्य देवतावाचिपदस्य तन्मन्त्रघटकदेवतान्तरवाचि पदसमानार्थकत्वमेव लक्षणया वक्तव्यम् । एवं च मिश्रालिङ्गमन्त्रयोरपि उपक्रमस्थपदे लक्षणापेक्षया जघन्यपद एव तस्याः युक्तत्वेनाग्निरिति मन्त्रस्य सायंहोमे सूर्य इति मन्त्रस्य प्रातर्होमे च व्यवस्थयैव प्राप्तिः ।

दस्तयोः प्रतिप्रसवार्थं विधानेऽपि तद्विधिगतयोः सायंप्रातःशब्दयोरानर्थक्यं, विधीयमानयोर्व्यवस्थयैव प्राप्तिसम्भवात्। तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात्। अनुवादत्वोक्तिस्तूभयत्र तुल्येति।

---

अतो विधचतुष्टयस्यापि वैयर्थ्यमित्युत्पश्यामः । इदमपिना सूचितम् । तद्विधिगतयोः शुद्धलिङ्गमन्त्रविधिद्वयगतयोः । ननु होममात्रोद्देशेन देवताविधाने कथं व्यवस्था भवितुमर्हतीत्यत्राह तदिति । व्यवस्थितत्वादिति । यदग्नये, यत्सूर्यायेति वाक्याभ्यां सायंप्रातःकालिकत्वविशिष्टहोमोद्देशेनैवाग्निसूर्यविधानेनान्यत्र तत्प्रकाशकमन्त्रप्रसक्त्यभावादिति भावः । उभयत्र तुल्येति। त्वन्मते मन्त्रविधिवाक्ये सायंशब्दस्यानुवादत्वे मन्मते प्रजापतिवाक्ये तस्य तथात्वमिति न कश्चिद्विशेषः । अतः प्रजापतिवाक्ये देवतान्तरविधानप्रयुक्तगौरवात् अपिशब्दसूचिताद्दोषात् वक्ष्यमाणदोषाच्च त्वन्मतं त्याज्यमिति ।

केचिदिह यदग्नय इति वाक्ये केवलहोमोद्देशेन प्रजापतिविधानं स्वीकुर्वन्ति । एवं तर्हि एकेनैव वाक्येन मन्त्रविधिव्यवस्थिताग्निसूर्यसमुच्चयस्य व्यवस्थया सिद्धौ यत्सूर्यायेति वाक्यानर्थक्यमिति चेत् तद्वाक्यं पूर्ववाक्ये यदग्नय इत्यादिपदानीवार्थवाद एवेत्याहुः । अन्ये तु शुद्धलिङ्गमन्त्रप्रयोगे शुद्धस्येव मिश्रलिङ्गमन्त्रप्रयोगे सूर्यस्यापि सायं, अग्नेरपि प्रातर्देवतात्वमङ्गीकृत्य मिश्रलिङ्गमन्त्रयोर्लक्षणामस्वीकृत्य यदग्नय इत्यनुवादस्य तत्तत्कालिकसर्वदेवतोपलक्षकत्वमूरीकृत्य सायंहोमोद्देशेन तद्देवतोपलक्षितप्रजापतिविधानमेवाद्रियन्ते । एवं प्रातर्वाक्येऽपि । ग्रन्थकारस्य त्वयमाशय उन्नीयते । यदग्नय इत्यनुवादबलाच्चकारेण तदीयसमुच्चयस्यैव झटित्युपस्थित्या तद्विशिष्टप्रजापतिविधानमेव युक्तम् । एवञ्च तत्तत्समुच्चयविशिष्टविधायित्वेन वाक्यद्वयं सार्थकम् । भिन्नवाक्यत्वेन प्रतीयमानत्वात् कस्य विधित्वं कस्यार्थवादत्वमित्यत्र विनिगमकादर्शनाच्चोभयोर्विधित्वमेव युक्तम् । मिश्रलिङ्ग-

मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य। यदग्नये चेति वाक्येऽग्नेः पूर्वाहुतिरित्यत्र च केवलस्यैवाग्नेः सङ्कीर्तनात्केवलस्यैव देवतात्वावगतेः।

यथा ह्युपांशुयाजे विष्ण्वादेर्मान्त्रवर्णिकत्वेऽपि न गुणविशिष्टस्य देवतात्वम्, विष्णुरुपांशुयष्टव्य इत्यर्थवादे केवलस्यैव सङ्कीर्तनात्तद्वदिति।

---

मन्त्रयोः सूर्याग्निपदयोरग्निसूर्यलक्षणा च 'धूम एवाग्नेर्दिवा ददृशे नार्चिः। तस्माद्दिवाग्निरादित्यं गतो रात्रावादित्यस्तमि'ति वाक्यानुसारेणाग्न्यादेरेवादित्यादित्वारोपेण प्रवृत्तिसम्भवान्नात्यन्तं दोषाय। एवं च यदग्नय इति पृथङ्निर्देशोऽप्युपपद्यते। अत्र सायमादिपदयोश्च केवलमनुवादकत्वमेव, न विशिष्टलक्षकत्वम्, प्रयोजनाभावात्। सायमादिपदे हि प्रजापतिविध्योर्मन्त्रविधिषु च श्रूयेते। तत्र मन्त्रविधिषु तयोः सार्थक्यमस्त्येव। एते हि मन्त्राः स्वाहाशब्दघटितत्वादेव होमाङ्गत्वेन निश्चीयन्ते, न त्वन्यकर्माङ्गत्वेन। अतो मन्त्रविधिषु होमस्योद्देश्यत्वमनावश्यकम्। परं तु कस्य कदा होमाङ्गत्वमिति तावदवगन्तव्यम्। एवं च मन्त्रविधयो मन्त्राणां तत्तत्कालसम्बन्धबोधनेनैव चरितार्थाः। तावतैवाग्न्यादेव्यवस्थापि सिद्धेति न तत्र सायमादिपदे लक्षणा। प्रजापतिवाक्ये च तस्य होमाङ्गत्वं न प्रमाणान्तरावगतमिति होमोद्देशेनैव स विधातव्यः। अतः सायमादिरनुवाद एव। एवं च सर्वं वाक्यं सार्थकमिति।

किंचेति प्रसञ्जितं परिहरति **मान्त्रवर्णिके**ति। **केवलस्ये**ति ज्योतिष्ट्वगुणवाचकपदमन्तरेणेति यावत्। **गुणविशिष्टस्य** इदं विष्णुर्विचक्रमे इत्यादिमन्त्रोक्तविक्रमादिविशिष्टस्य। ननु यदग्नये चेति वाक्येनाग्निप्राप्तिवादिनामपि अग्निसमुच्चितप्रजापतिविधायिनोऽस्यैव विधेर्नाग्निविधायकत्वं संमतम्। अपि त्वार्थिकविशेषणविधिकल्पनयैवेति किमस्मिन् पक्षेऽधिकं

अतश्च मान्त्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौरवा-पत्तेरन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते। होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च ।

न च चकारश्रवणान्न वाक्यभेद इति वाच्यम्। चकारार्थो हि समुच्चयः । तं च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात्तदा प्रधा-नस्यानेकविशेषणसंग्राहकत्वादारुण्यादिविशिष्टक्रयविधान इव कार-कद्वयसमुच्चयविधाने वाक्यभेदो न भवेत् । न च चकारः समुच्चयं प्राधान्येन ब्रूते परोपसर्जनत्वेनैवाभिधानात् ।

अत एव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्र-तिपादितम्। समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न चकारः। यदि हि प्राधान्येन ब्रूयात्तदा तत्प्रतिपन्नः समुच्चयः क्रियागुणैः सम्बध्येत। समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् च शोभनश्च द्रष्टव्य इति

---

गौरवम् । न च विशिष्टविधित्वे मत्वर्थलक्षणा । पदानां परस्परान्वयस्यात्र चकारबलात्सम्भवेन विशिष्टलाभात् । न च मन्त्रविधीनां वैयर्थ्यम् ; प्रजापतिवाक्ययोः सायंप्रातश्शब्दयोरनुवादत्वमङ्गीकृत्य होममात्रोद्देशेन देवतान्तरविशिष्टप्रजापतिविधानस्वीकारादव्यवस्थाप्राप्तौ व्यवस्थापरतयैव तत्सार्थक्यादित्यतोऽग्निप्रजापतिविधानासम्भवं दर्शयति होमेति । चकार-श्रवणाद्वाक्यभेदपरिहारः किं चकारार्थेऽग्निप्रजापत्योरन्वयस्वीकारात् किं वा एकस्य चार्थे तस्य देवतान्तरे तस्य भावनायामित्यन्वयस्वीकारात् ? आद्यं दूषयति तं चेत्यादिना। प्राधान्येन ब्रूयादिति समुच्चेयोभयप्रकारकसमु-च्चयविशेष्यकबोधप्रयोजको भवेदित्यर्थः । परोपसर्जनत्वेनैवाभिधाना-दिति समुच्चेयपदार्थनिरूपितप्रकारताशालिबोधजनकोपस्थितिजनकत्वादित्य-र्थः । प्रतिपादितमेवोपपादयति समुच्चयेति । शोभन इति गुणः । द्रष्ट-

प्रयोगः स्यात् । समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इतिवत् धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति ।

अतश्चकारः समुच्चयं प्राधान्येन न ब्रूते येन प्रधानस्यैकस्य विधानान्न वाक्यभेदो भवेत् । किं तु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते । समुच्चितौ अग्निप्रजापती इति प्रधानद्वयविधाने च वाक्यभेदः स्यादेव । यथा ग्रहोद्देशेन सम्मार्गैकत्वविधाने ।

---

च्य इति क्रिया । ननु चकारस्य प्रतिसम्बन्ध्यपेक्षत्वात्केवलप्रयोगो नाऽऽपाद्यः । धवः खदिरश्च शोभन इति प्रतिसम्बन्धिसहप्रयोगस्त्विष्यत एवेति चेत् एवमपि समुच्चयशब्दप्रयोग इव चशब्दप्रयोगेऽपि प्रतिसम्बन्धिवाचकात् षष्ठी स्यात् तदाह समुच्चयेति । इत्यपीत्यपिना शोभनपदग्रहणम् । प्रधानद्वयविधाने समुच्चयविशेष्यभूतार्थद्वयविधाने । ननु धवखदिरयोः समुच्चय इत्यत्र षष्ठ्यर्थ आधेयत्वम् । तस्य समुच्चयेऽन्वयः । धवः खदिरश्चेत्यत्र तु धवखदिरयोरेवाधेयतासम्बन्धेन चार्थेऽन्वयः । अत आधेयतासंसर्गकसमुच्चयविशेष्यकबोधं प्रति चशब्दज्ञानं कारणमिति न षष्ठीप्रयोगापत्तिः । न च धवखदिरौ चेति प्रयोगापत्तिः ; चार्थे द्वन्द्व इति समासकरणादेव समुच्चये लब्धे व्यर्थत्वादेव पुनश्चकाराप्रयोगात् । एवं प्रधानभूते च चार्थे समभिव्याहृतपदयोः प्रथमान्तत्वे प्रातिपदिकार्थयोराधेयतासम्बन्धेन विशेषणत्वम् । अन्यविभक्त्यन्तत्वे च परिपूर्णं पदं पदान्तरेणान्वेतीति न्यायेन प्रातिपदिकार्थयोर्विभक्त्यर्थेऽन्वयः । विभक्त्यर्थयोराधेयतया चार्थे । न च तर्हि अग्निकारकप्रजापतिकारकसमुच्चयोऽस्तीति स्थले अग्नये च प्रजापतये चास्तीति प्रयोगोऽस्त्विति वाच्यम् ; चार्थप्रकारीभूतार्थस्य चकाराभावे यत्रान्वयो युक्तः ; चार्थस्यापि तत्रान्वय इति नियमाङ्गीकारेणादोषात् । न ह्यग्निकारकमस्तीतिस्थले अग्नये अस्तीति

यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्तथाऽपि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नम्, विभक्त्यभिहितस्य कारकद्वयस्य क्रियापसर्जनत्वेन समुच्चयोपसर्जनत्वाभावात्। कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रियातोऽन्येन सम्बध्यते। कारकसमुच्चयः करणसमुच्चय इति। विभक्त्यभिहितं तु क्रिययैव, कारकाणां तथैवान्वयात्।

अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनैवोच्यते। कारकद्वयं च प्रधानम्। एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव। यथाहुः—

अनेकपदसम्बद्धं यद्येकमपि कारकम्।
तथाऽपि तदनावृत्तैः प्रत्ययैर्न विधीयते॥ इति॥

---

प्रयुज्यते। तद्वत्। अतश्चार्थप्राधान्यसम्भवान्न वाक्यभेद इत्यत्राह यद्यपीत्यादि। अत्र समुच्चयप्राधान्ये धवः खदिरश्च शोभनाविति द्विवचनानुपपत्तिः। द्वन्द्वसमासे चार्थप्राधान्यप्रसङ्ग इत्येवं दोषा यद्यपीति सूचितः। क्रियोपसर्जनत्वेन भावनासाक्षाद्विशेषणत्वेन। कृदन्तादीति यद्यपि कृतामेव कारकार्थकत्वात् कृदादीत्यलम्। अथापि केवलकृत्प्रयोगस्यासाधुत्वात् तावन्मात्रेण कारकोपस्थित्यभावाच्च कृदन्तेत्युक्तम्। आदिना तदर्थकसर्वनामग्रहणम्। अनेकेति (२. २. ५.) चार्थे कारकद्वयान्वयस्येष्टत्वे वाक्यभेदाभावादियं कारिका न सङ्गच्छेतेति भावः। यद्येकमपीति यद्यप्येकमित्यन्वयः। अयमर्थः—चकारबलादग्निप्रजापत्योः समुच्चयलाभात् अग्नीषोमयोरिव समुच्चितोभयगतं कारकं यद्यप्येकम्। अथापि तत् कारकं नानावृत्तैः प्रत्ययैर्विधीयते। न ह्यग्नीषोमस्थल इवेह प्रत्यय एकः। अपि त्वग्नये प्रजापतय इति प्रत्येकं भिन्न एव। अत एककारकवाचिनोऽपि प्रत्ययस्यावृत्तिदर्शनात् तत्तत्कारकविभक्त्युपस्थापितस्य तस्य परस्परानन्वयेन

यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधाने न वाक्यभेदस्तथा कारकद्वयविधानेऽपीति । तन्न । न हि गौश्चाश्वश्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवादयो विधीयन्ते । उक्तरीत्या वाक्यभेदापत्तेः । चकारेण कथंचित्परिहारेऽपि गवादीनामनेकेषां द्वादशशतसङ्ख्यायाश्च विधाने वाक्यभेद एव । आध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यन्तस्य सहश्रुतत्वेन चास्यैकवाक्यत्वमित्युक्तं दशमे ।

अतोऽनेन वाक्येनोभयविशिष्टा दक्षिणैव विधीयते । विशिष्ट-

---

भावनायामेवान्वयात् प्रतिप्रत्ययं विधिव्यापारस्य कल्पनीयतया विध्यावृत्त्या वाक्यभेद एवेति । अत्र यद्यपीत्यनेन वस्तुतोऽग्निप्रजापत्योर्देवतयोः सतोरेव समुच्चयाद्देवतात्वरूपकारकभेद एवेति सूचितम् । उक्तरीत्या चार्थस्य समुच्चेतव्यार्थविशेषणतया प्रधानानेकत्वरूपेणोक्तेन प्रकारेणेत्यर्थः । ननु यदग्नये चेति वाक्ये कारकश्रवणात् तस्य चार्थेऽन्वयाभावादस्तु तत्प्राधान्यम् । गौश्चेति वाक्ये तु प्रथमैव श्रूयत इति समुच्चयं प्रति गवादीनां विशेषणत्वमिति शक्यं गवादिसमुच्चयरूपधर्मस्य दक्षिणारूपधर्म्युद्देशेन विधानम् । अतो न वाक्यभेद इत्यत्राह चकारेति । एवेति स्यादेवेत्यर्थः । ननु वाक्यद्वयत्वे इष्टापत्तिः अत्राह आध्वर्यवेति । उभयेति । गवादिद्रव्यगोगतसंख्योभयेत्यर्थः । दक्षिणैव विधीयत इति । दक्षिणात्वमानतिसाधनत्वम् । आनतिश्च फलम् । फलसाधनत्वावच्छिन्नं च न विधेयम् । तदत्र देयपदाध्याहारेणानत्युद्देशेनोभयविशिष्टदानं विधीयत इत्यत्र तात्पर्यम् । तत्र तत्र दक्षिणायां गोरेव द्वादशत्वसाधनाधिकरणे(१०-३-११)धेन्वा कृत्स्नदक्षिणाबाधाधिकरणे च(१०-३-१४)। तत्र प्रथमे सेति वाक्यम् , द्वितीये अनेकेति वाक्यम् । अनुवादत्वेऽपरितोषादाह ऋत्विगिति । ननु दक्षिणाशब्दस्यानतिसाधनपरत्वात् यागकर्तृत्वाच्च ऋत्विजामानत्यपेक्षत्वाद्दक्षिणाऋत्विक्सम्बन्धो विधिं विनैव सिद्ध इत्यत्राह दक्षिणेति । आदिना सदस्य-

विधानाच्च न वाक्यभेदः । अत एव पार्थसारथिमिश्रैर्दशमे तत्र तत्र सोभयविशिष्टा विधीयते इति, अनेकगवाद्यात्मिकैका दक्षिणा विधीयत इति चोक्तम् ।

न चैवं ऋत्विग्भ्यो दक्षिणां ददातीत्यस्यानर्थक्यं तस्यानुवादत्वात् । ऋत्विक्सम्बन्धपरत्वाद्वा । दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां चमसाध्वर्य्वादीनां च तत्सम्बन्धः स्यात् । एतद्वाक्यसत्त्वे च न भवति, ऋत्विक्शब्दस्य ब्रह्मादिगतऋतुयजननिमित्तत्वेन चमसाध्वर्यूणामृत्विक्त्वाभावस्य तृतीये उक्तत्वात् ।

अतश्च गौश्चाश्वश्चेत्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः । 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यत्र तु न विशिष्टविधानं, होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात् । अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदाद्गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते । किं तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमोद्देशेन विधीयते ।

अतश्च नेदमग्नेः प्रापकं किं तु मन्त्रवर्ण एव । अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकम्, किं तर्हि नामधेयमेव । तत्सिद्धमेतत्तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति ।

---

परिग्रहः । न भवतीति । तथा च तत्र परिसंख्या विधेः फलमिति भावः । ननु ऋत्विक्त्वं ऋतुयजनकर्तृत्वम् । तच्च वसन्ताख्यर्तुकालिकयागप्रयोगकर्तृत्वम् । तत् सर्वत्राविशिष्टमित्यत्राह ऋत्विगिति । सोमे सप्तदश ऋत्विज इति निर्देशबलात्तदवृत्ति ब्रह्मादिमात्रवृत्ति ऋतुयजनमेव निमित्तमिति सिद्धापरिसंख्येति । गौरवापत्तेश्चेति । एकस्यैवानेकविशेषणविधिकल्पकत्वापेक्षया मन्त्रलिङ्गादेकविधिकल्पनम्, अत्राविशिष्टविधिकल्पनमित्येवोचितमिति भावः । एवमग्निहोत्रे तत्प्रख्यशास्त्रमुपपाद्याग्निहोत्रवाक्ये देवताविधानाशक्त्या तन्नामधेयत्वं तस्येत्याह अतश्चेति । विध्यतिरिक्तस्यापि वि-

एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधोऽग्न आज्यस्य व्यन्त्वित्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात्समिधो यजतीत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात्कर्मनामधेयानि । यथाहुः—

'विधित्सितगुणप्रापि शास्त्रमन्यद्यतास्त्विह ।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥' इति दिक् ॥

श्येनेनाभिचरन्यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यप-

---

धिकल्पकत्वेन तत्प्रख्यशास्त्रत्वं नायुक्तमिति बोधयितुमन्यदुदाहरति एवमिति । आदिना तनूनपादग्न आज्यस्य व्येत्वित्यादिपरिग्रहः । विधित्सितगुणप्रापि । विधातुमिष्टो यो गुणस्तत्प्रापकम् । ननु जुहोतीति सायंहोमः प्रातर्होमश्चाभिधीयते । न च प्रातर्होमेऽग्निरस्ति तत् कथं नामत्वम् ? उच्यते एक एव हि होमः प्रातरप्यभ्यस्यते । अतोऽभ्यासभेदेऽप्यभ्यस्यमानैक्यान्न दोष इति । इदमभिसन्धाय दिगिति ।

चतुर्थं प्रमाणमुदाहरणं प्रदर्श्योपपादयति श्येनेनेति । तद्व्यपदेशादित्यस्यार्थमाह तेनेति । तेन विधित्सितगुणेन उपमानं सादृश्यकरणं उपमेयतया निर्देश इति यावत् । प्रकृतार्थस्येति शेषः । ननु श्येनशब्दो नामधेयं श्येनसदृशत्वेन प्रकृतार्थस्य कीर्तनादित्युक्ते हेतोर्न पक्षवृत्तित्वमित्यत्राह तदन्यथेति । तथा चार्थापत्तिप्रमाणमिदम् । अतो न हेतुपक्षवार्तेति भावः । नन्वत्र यद्यपि न श्येनगुणविशिष्टयागविधानं युक्तम् विशिष्टविधाने गौरवात् । अथापि अभिचारमुद्दिश्य श्येनगुणविधानमस्तु । यागस्य ज्योतिष्टोमस्य प्रकृतत्वादाश्रयत्वम् । न च श्येनगुणस्य विधेयत्वेऽर्थवादेऽयमिति श्येनशब्दार्थ एव ग्राह्य इति तस्य तदुपमेयत्वासम्भव इति वाच्यम् । अयमिति श्येनशब्दार्थ एव निर्दिष्ट इत्यत्र गमकाभावात् । यागस्यैव निर्देशसम्भवात् । अस्तु वा श्येन एवायम्पदार्थः । अथापि कथं तस्य श्येनोपमेयत्वं बाधि-

देशात्तेन व्यपदेशः उपमानं तदन्यथानुपपत्त्येति यावत् । तथा हि यद्विधेयं तस्य स्तुतिर्भवति । तद्यद्यत्र श्येनो विधेयः स्यात्तदार्थवादैस्तस्यैव स्तुतिः कार्या । न च यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यनेनार्थवादेन श्येनः स्तोतुं शक्यः । श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानेन स एव स्तोतुं शक्यते । उपमानोपमेयभावस्य भिन्ननिष्ठत्वात् । यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दस्य तद्व्यपदेशाद्यागनामधेयत्वम् । तत्सिद्धं निमित्तचतुष्टयान्नामधेयत्वम् ।

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं केचिन्नामधेयत्वे निमि-

---

तम् । अतः कथमत्र नामधेयत्वमित्यत्रोपपादयति तथा हीति । भवतीति । विधेयादर्थान्तरस्तावकत्वेऽर्थवादस्य विध्येकवाक्यत्वं न स्यादिति भावः । तत् तस्मात् विधेयस्यैव स्तोतव्यत्वात् । ततः किमित्यत्राह न चेति । आदत्त इति मत्स्यादिकमिति शेषः । भ्रातृव्यं शत्रुम् । द्विषन्तमिति तात्कालिकद्वेषोक्तिः । श्येनोपमानेन श्येनसदृशतया निर्देशेन । अर्थान्तरस्तुतेः श्येनभिन्नपदार्थस्तुतेः । यदि तावत् 'श्येनो यथा ह वै मत्स्यं निपत्यादत्ते एवं द्विषन्तं भ्रातृव्यं निपत्यादत्त' इति स्यात् तदा श्येनस्तुतिर्भवेत् । इह तु श्येनमुपमानतया निर्दिश्यायमिति तत्प्रतिनिर्देशात् तत्सदृश एव स्तुत्य इति भावः। तस्यैव तदुपमानत्वमस्तु नेत्याह न चेति । भिन्ननिष्ठत्वात् । तथैव दर्शनात् । प्रसिद्धं ह्युपमानम् अप्रसिद्धमुपमेयमिति भावः । तद्व्यपदेशान्नामधेयत्वमिति । श्येनपदं वाक्यशेषानुसारात् श्येनसदृशपरं यागे गौणमिति भावः ।

पूर्वं नामधेयत्वं च निमित्तचतुष्टयादित्यनेनाभिप्रेतं निमित्तान्तरव्यवच्छेदं विस्पष्टयिष्यन् निमित्तान्तरमङ्गीकुर्वतां मतमुपक्षिपति उत्पत्तीति ।

त्तमाहुः । वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वमुत्पत्तिशिष्टगुणबलीयस्त्वात् । उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासम्भवात् ।

तथा हि न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं युक्तमिति वक्तुं शक्यम् , वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य यागस्योक्तत्वात् । साऽस्य देवतेत्यस्मिन्नर्थे हि तद्धितस्मरणम् । तत्रास्यशब्दस्य तद्धितान्तर्गतस्य यद्यपि सूक्तहविषोरिति स्मृतेः सूक्ते हविषि वा मुख्यत्वमव-

---

स्थलं दर्शयति वैश्वदेवेनेति । सन्ति चातुर्मास्याख्यानि कर्माणि । चातुर्मास्यशब्दः 'चतुर्थे चतुर्थे मास्येकैकेन पर्वणा यजेते'ति वाक्यान्तरात् मासचतुष्टयपूर्वापरभावापन्नपर्वसामान्यवाची । तत्र चत्वारि पर्वाणि वैश्वदेववरुणप्रघास-साकमेध-शुनासीरीयाख्यानि । तत्र प्रथमे पर्वणि 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमित्यष्टौ यागा विधीयन्ते । तत्सन्निधावाम्नायते वैश्वदेवेन यजेतेति । तत्रेत्यर्थः । कर्मनामधेयत्वम् यागाष्टकनामधेयत्वम् । इहोक्तनिमित्तेष्वन्यतमसत्त्वे विद्यमानस्याप्युत्पत्तिशिष्टगुणबलीयस्त्वस्याप्रयोजकत्वप्रसङ्गात्तदसम्भवमाहोक्तेति । नन्वाग्नेयोऽष्टाकपालः आग्नेयं सूक्तमिति द्रव्ये सूक्ते चैव तद्धितदर्शनात्कथं तस्य यागवाचित्वमित्यत्र स्मृतिं दर्शयति सेति । अत्र अस्येति सामान्यत एव निर्देशाद्यागपरत्वमपि संभवतीति भावः । ननु 'सूक्तहविषोरेवेष्यत' इति वार्तिककृता कात्यायनेन नियमितत्वात् अस्येति सामान्यशब्दोऽपि सङ्कोचयितव्य इति न यागस्योक्तत्वमिति शङ्कते तत्रेति । तत्र सूत्रे । अस्यशब्दस्य अस्येतिशब्दस्य । तद्धितान्तर्गतस्य तद्धितार्थकवाक्यान्तर्गतस्य । हविषि वेति वाकारेण न युगपदुभयाभिधानमिति सूचितम् । सूक्तहविषोरिति स्मृतिः न तद्धितस्य पृथक्पृथक्तत्तदर्थकत्वपरा अनेकश-

गतं तथाऽपि सर्वनाम्नामुपस्थितवाचित्वात् सूक्तहविषोश्चात्रानुपस्थितत्वाद्यजेतेत्युपस्थितं यागमेवास्यशब्दोऽभिधत्त इति न यागे मत्वर्थलक्षणा । विश्वदेवरूपैकदेवताविधानाच्च न वाक्यभेदः ।

नापि तत्प्रख्यशास्त्रान्नामत्वम् । यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः, तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम् । यथाऽग्निहोत्रशब्दे । अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः । तत्रामिक्षायागे यद्यपि विश्वेदेवाः प्राप्ताः वैश्वदेव्यामिक्षेति तथाऽपि सप्तसु तेषामप्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधाने न तत्प्रख्यशास्त्रमन्यत् येन तद्वशान्नामत्वं स्यात् ।

न चामिक्षायागस्यैवैतन्नामेति वाच्यम् । वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेः । वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽनेनानूद्येत । न च तदनुवादेनास्ति किञ्चित् कृत्यम् । प्राचीन-

---

क्तिकल्पनात् । अतस्तद्धितः अस्येति शब्दबलात् उपस्थितव्यक्तिपरः । तत्र च यथा सूक्तस्य हविषो वोपस्थितिर्भवति, तथा प्रयोगः कर्तव्य इति स्मृत्यभिप्रायः । छन्दसा तु स्वतन्त्रेण यजिसमभिव्याहारेण प्रयोगात् सूक्तहविर्वाचकपदाभावादुपस्थितयागपरत्वमवर्जनीयमित्याभिसन्धाय समाधत्ते तथाऽपीति । एकदेवतेति । विश्वदेवव्यक्त्यनेकत्वेऽपि तद्गतं देवतात्वं व्यासज्यवृत्त्येकमिति भावः । अथ वा एकदेवतेत्यस्यैकपदोपात्तदेवतेत्यर्थः । यद्वा एकेति केवलेत्यर्थः । देवतामात्रविधानान्न वाक्यभेद इति । वैश्वदेवशब्दस्य तत्प्रख्यान्नामधेयत्वं मन्यमानेन किं प्रकृताग्नेयादियागाष्टकनामत्वमभिमतम् उतामिक्षायागमात्रस्य? नाद्यः, अष्टसु तत्प्रख्यापकशास्त्राभावात् नान्त्यः, वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेरित्याहात्र चेति । तत्र तद्विधाने यागसप्तकोद्देशेन विश्वदेवविधाने इष्टे । येन शास्त्रसद्भावेन । तद्वशात् तत्प्रख्यप्रमाणात् । सिद्धान्तिरीत्याऽत्र फलं दुर्वचमिति वैयर्थ्यमुपपाद-

प्रवणे वैश्वदेवेन यजेतेति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाऽप्येतद्वाक्यमामिक्षायाग एव सम्बन्धोपपत्तेः । विश्वदेवसम्बन्धात्तस्य ।

आग्नेयाद्यशेषप्रकृतयागनामत्वे तु न वैश्वदेवेन यजेतेति वाक्यानर्थक्यम् । तदा ह्यनेनाष्टौ यागा अनूद्यन्ते । अनुवादेन चैकप्रतीत्यारूढत्वात् समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिद्ध्यति । एवं च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति । तद्वाक्यस्यासत्त्वेऽनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसम्बन्धः स्यात् । अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसम्बन्ध एवैतद्वाक्यप्रयोजनम् । एवं च वैश्वदेवोऽष्टानां नामधेयम् ।

---

यति वैश्वेति । कुत इत्यत्राह विश्वेति । वैश्वदेवीमामिक्षामिति वाक्येनानुषक्तनिर्वपतिपदघटितेन विशिष्टयागविधानाद्यागस्य वैश्वदेवत्वमवगतमिति भावः । वाक्यानर्थक्यं परिहरिष्यन् यागाष्टकनामधेयत्वं तावदुपपादयति तदा हीति। अष्टनामत्वे एकवचनं विरुद्ध्यत इत्यत्राह । एकेति ततस्समुदायप्रतीत्या तद्गतैकत्वविवक्षया एकवचनमिति भावः । नामधेयमिति तद्धितार्थे यागे स्वदेवताकयागघटितसमुदायघटकत्वसम्बन्धेन विश्वदेवरूपप्रकृत्यर्थान्वयात्सर्वनामत्वम् । सार्थक्यमाह एवं चेति । आमिक्षायाग एवेति । यजेरविशेषेणाखिलयागवाचिनो यथा सन्निधानाद्यागाष्टकमात्र एव सङ्कोच इष्यते । तथा वैश्वदेवपदसमभिव्याहाराद्विश्वदेवदेवताकत्वेनावगतामिक्षायाग एव सङ्कोचः स्यादिति तत्रैव देशसम्बन्धः स्यात् । तद्वाक्यसत्त्वे तु तद्वैयर्थ्यपरिहाराय यजिपारतन्त्र्यं वैश्वदेवपदस्य परिकल्प्य यज्युपस्थितयागाष्टकपरत्वं स्वीक्रियत इतीष्टसिद्धिरिति भावः । अतश्चेति वाक्यान्वयव्यतिरेकसत्त्वेऽष्टसु देशसम्बन्धान्वयव्यतिरेकसत्त्वादित्यर्थः । एवं च ईदृशप्रयोजनसद्भावात् ।

न च तत्र तत्प्रख्यशास्त्रं निमित्तं संभवति । सप्तसु विश्वदेवाप्राप्तेः । अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति ।

नापि तद्व्यपदेशात् । तादृशस्य व्यपदेशस्यानुपलम्भात् । अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम् । तथा हि वैश्वदेवेन यजेतेत्यत्र न तावदप्रकृतकर्मानुवादेन देवताविधानं संभवति तेषामत्रानुपस्थितेः । नापि देवताविशिष्टकर्मान्तरविधानं संभवति गौरवापत्तेः । अष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधात् ।

अतोऽनेन प्राकृतकर्मानुवादेन देवता विधीयन्त इति वक्तव्यम् । तत्रामिक्षायागे विश्वदेवप्राप्तेः सप्तसु यागेष्वनेन वाक्येन विश्वेदेवा विधीयन्त इति वक्तव्यम् । न च तत्सम्भवति । तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् । आकांक्षया हि सम्बन्धो भवति । आग्नेयादि-

---

तत्र अष्टनामत्वे । तादृशस्य विश्वेषां देवानामुपमानत्वगमकस्य । ननु यत्रोत्पत्तिवाक्ये देवता न प्राप्ता तत्र तद्विधायकत्वमस्तु । वाजिभ्यो वाजिनमित्यत्रेव विशिष्टकर्मान्तरविधायकत्वं वा । अस्तु वा गुण उत्पत्तिविशिष्टः, अथापि कथं तस्य बलीयस्त्वम्, विकल्पेनैवोभयेषां निवेशोपपत्तेरित्यत उपपादयति तथा हीति । अप्रकृतत्वादेवेत्याह तेषामिति । गौरवापत्तेः । अदृष्टकल्पनविशेषणविधिकल्पनाद्यापत्तेः । ननु नामधेयत्वे वैश्वदेवपदे लक्षणाङ्गीकर्तव्या । अस्माकं तु श्रुत्यैव विश्वेदेवदेवत्ययागपरत्वान्नैवमित्यत आह अष्टाविति । नवप्रयाजा इज्यन्ते, न वाऽनूयाजाः, अष्टौ हवींषि, द्वावाघारौ, द्वावाज्यभागौ त्रिंशत्सम्पद्यन्त इति त्रिंशदाहुतिसम्पत्तिवाक्य इत्यादिः । विरोधादिति नव हवींषि एकत्रिंशत्सम्पद्यन्त इति वक्तव्यत्वादिति भावः । प्रकृतकर्मेति आग्नेयसौर्यादीत्यर्थः । तत् सप्तोद्देशेन तद्विधानम् । तेषां आग्नेयादीनाम् । नन्ववरोधः कथमित्यत्र बलीयस्त्वे युक्तिमाह आकांक्षयेति । उत्पत्तिशिष्टैरित्यनेन स्ववाक्योपात्तत्वेन

यागानां हि देवताकांक्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वदेवविधानं युक्तम्। अतश्चोत्पत्तिशिष्टगुणवलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति । यथाऽऽहुः—

गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपरः।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥ इति।

अन्ये त्वाचार्या आहुः । यश्शब्दो यत्र कर्मणि यद्गुणसम्बन्धं बोधयति स चेत्सम्बन्धः शास्त्रान्तरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात् । तच्च शास्त्रान्तरं विधिर्वाऽर्थवादो वेत्यत्रानादरः । तत्राग्निहोत्रशब्देऽग्निसम्बन्धबोधकं शास्त्रान्तरं विधिरेव। वैश्वदेवशब्दश्च विश्वदेवसम्बन्धं कर्मणि बोधयति। विश्वदेवसम्बन्धश्चाष्टसु यागेषु 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इत्यर्थवादावगतः ।

---

शीघ्रोपस्थितत्वं विवक्षितम् । तत्र तेषु यागेषु । अतश्च उत्पन्नशिष्टान्वयात्प्रागेवाकांक्षाशामकत्वात् । नावकाश्यः नावकाशमर्हति । विषमशिष्टत्वात् विकल्पोऽपि न भवति । तस्मात् उत्पत्तिशिष्टगुणबलीयस्त्वात् नामधेयमित्येव युज्यते । एवं केषांचिन्मतमुक्त्वा स्वसम्मतमन्येषां मतमाहान्य इति। ननु तत्प्रख्यशास्त्रं नाम विधित्सितगुणप्रापि शास्त्रम्। न खलु विधातुमशक्यो गुणो विधित्सितो भवति । न च विधित्सितस्य गुणस्य प्रापकं विधिभिन्नं भवति। विधिमन्तरापि प्राप्तुमर्हस्य शास्त्रे विधेयत्वासम्भवात्। प्रकृते च 'यद्विश्वेदेवा' इत्यर्थवादोक्तं विश्वदेवकर्तृकत्वं न नो विधित्सितम् विधातुमशक्यं च । अतो नात्र तत्प्रख्यशास्त्रमिति शङ्का मा भूदिति वक्ष्यमाणशास्त्रस्य तत्प्रख्यत्वं वक्तुं पीठिकामारचयति य इति। यद्गुणसम्बन्धं यं गुणसम्बन्धम्। तत्र विध्यर्थवादयोः। अग्निहोत्रशब्दे तद्विषये। विधिरेव मन्त्रवर्णकल्पितो विधिरेव । अवगत इति। अयं भावः—

न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किंचित्प्रमाणमस्ति । अत एव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमशब्दः 'तानि वा एतानि ज्योतींषि य एतस्य स्तोमाः' इत्यर्थवादावगतं ज्योतिःसम्बन्धं निमित्तीकृत्य सोमयागे प्रवर्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति । एवं प्रकृतेऽपि द्रष्टव्यम् । पञ्चमप्रकारकल्पने प्रमाणाभावात् । अत एव वैश्वदेवाधिकरणे वार्तिककारैरेवमुपसंहृतं 'तत्प्र-

---

तत्प्रख्यशास्त्रमित्यस्य न विधित्सितगुणविधायकवाक्यान्तरमित्यर्थः किं तु प्रकृतपदबोध्यार्थप्रतिपादकवचनान्तरमिति । तत्र गुणविधिवादिना पूर्वपक्षिणा तद्धितावगतस्य सम्बन्धस्य तद्देवताकत्वरूपत्वबुद्ध्या आक्षेपे कृते सिद्धान्तिना तत्कर्तृकत्वरूपसम्बन्धस्यापि तदर्थत्वसम्भवात् अर्थवादेन तस्योपात्तत्वात्तत्प्रख्यमस्तीत्युच्यत इति । अर्थवादस्यापि तत्प्रख्यत्वमभ्युपगतमिति दर्शयति अत एवेति । एतानि त्रिवृत्पञ्चदशसप्तदश एकविंश इत्येतानि । स्तोमाः स्तोत्रीयासंख्याः । स्तोत्रीया स्तोत्रसाधनीभूता ऋक् । स्तोत्रम् प्रगीतमन्त्रसाध्यगुणि(देवता)निष्ठगुणाभिधानम् । अवगतमिति । अत्र समानाधिकरणनिर्देशेन स्तोमे ज्योतिराख्यावत्त्वस्य एतच्छब्देन सोमयागनिर्देशात् षष्ठ्या तादृशस्तोमसम्बन्धस्य चावगमादिति भावः । प्रवर्तमान इति । ज्योतींषि स्तोमा यस्य सोमयागस्येति विग्रहादिति भावः । एवं ज्योतिष्टोमशब्द इव । अस्मदभिप्रायो वार्तिकारूढ एवेत्याह अत एवेति । अत्र 'एकदेशस्थैरपि विश्वदेवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्व'मिति विशिष्टं वाक्यम् । तत्र यद्यपि देवतासमर्पकतत्प्रख्यमेव वर्णितम् । अथापि विश्वदेवकर्तृकत्वसमर्पकार्थवादरूपतत्प्रख्यस्यापीदमुपलक्षणमिति भावः । यद्वा विश्वदेवकर्तृकत्वमङ्गीकृत्य वा तत्प्रख्यत्वमुच्यताम् । मीमांसकमते देवताविग्रहाद्यभावात्तत्कर्तृकत्वासम्भवात् प्रकारान्तरेण

ख्यतयैव सर्वेषां नामधेयत्वम्' इति । यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तम् तद्गुणविध्यसम्भवे युक्त्यभ्युच्चयमात्रम् । तत्सिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति ।

---

वा तत्प्रख्यत्वमुच्यताम् । पञ्चमप्रकारकल्पनन्त्वयुक्तमिदम् । अत एव वार्तिककारस्तत्प्रख्यं दर्शितवानिति तात्पर्यम् । गुणान्तरावरुद्धत्वादिति वार्तिकस्य गतिं वक्तुमाह यच्चेति । अत्रैवं तत्प्रख्यनिरूपणं बोध्यम् । वैश्वदेवेन यजेतेति यजिना प्रकृतानामष्टानां कीर्तनादेकशब्दोपादानबलात्समुदायस्तावत्सिद्ध्यति । तत्रैकदेशे आमिक्षायागे विश्वेदेवसम्बन्धस्य वैश्वदेव्यामिक्षमिति वाक्येन ज्ञातत्वात् विश्वदेवदेवताकामिक्षायागघटितसमुदायघटकत्वेन रूपेण सर्वनामत्वं निश्चीयते । न च सप्तसु विश्वदेवगुणविधानेन वाक्यसार्थक्यं युक्तम्, उत्पत्तिशिष्टगुणसत्त्वेनं तदसम्भवात् । न चाष्टसु मध्ये सप्तविषये उत्पत्तिशिष्टगुणबलीयस्त्वं नामत्वे निमित्तम् । एकयागविषये च तत्प्रख्यमिति वाच्यम् । उत्पत्तिशिष्टबलीयस्त्वेन गुणविध्यसम्भवे सिद्धेऽपि सप्तसु वैश्वदेवशब्दप्रवृत्तौ वक्तव्यस्य विश्वदेवदेवताकयागघटितसमुदायघटकत्वरूपनिमित्तस्य तत्प्रख्यशास्त्रबलादेव ज्ञेयतया सर्वत्र तत्प्रख्यस्यैव निमित्तत्वार्हत्वात् । अत उत्पत्तिशिष्टबलीयस्त्वेन गुणविधाने निरस्ते तत्प्रख्यमेकदेशस्थं प्रवृत्तिनिमित्तसमर्पणेन नामधेयत्वं गमयतीति ।

पशुसोमाधिकरणे ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिषु तद्धितेनेन्द्रवाय्वादिदेवताद्रव्यसम्बन्धश्रवणात् तस्य यागमन्तराऽनुपपत्तेः प्रतिवाक्यं द्रव्यदेवताविशिष्टो याग एव गृह्णातिना लक्षणया विधीयते । एवं विहितानां यागानां सोमेन यजेतेति यजिस्समुदायानुवाद इत्याशंक्योत्तरमुक्तम् । 'न यागविधिः । अपि तु देवताविशिष्टग्रहणविधिरेव । यागविधिस्तु सोमेन यजेतेत्यत्रैव, यजिश्रवणात् इत्युक्तम् । तद्वदिहापि वैश्वदेवेन यजेतेति वाक्यस्यानुवादत्वमुपेक्ष्यामिक्षायागविधायित्वमस्त्विति शङ्कते

ननु पशुलोमाधिकरणे ऐन्द्रवायवं गृह्णातीत्यादौ न यजिकल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तम् । तेन न्यायेन वैश्वदेव्या-मिक्षेत्यत्रापि यजिकल्पना मास्तु । वैश्वदेवेन यजेतेत्यत्र प्रत्यक्ष-यजिश्रुतेः । एवं चानेनैव वाक्येन देवताविशिष्टकर्मविधानमस्तु । तस्य च द्रव्याकांक्षायां वैश्वदेव्यामिक्षेति द्रव्यविधानमस्तु । एवं च न वाक्यद्वयस्याप्यनुवादत्वम् । नाप्यष्टौ हवींषीत्यनन्यगतिकलिङ्ग-विरोधो भवेदिति चेन्मैवम् ।

वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पने आमिक्षा किमनुवादेन विधीयत इति वक्तव्यम् । विश्वदेवानुवादेन द्रव्यविधाने द्रव्यस्य देवताङ्गत्व-मेव स्यात्, न यागाङ्गत्वम् । किं च वैश्वदेवीशब्दो देवतातद्धित-त्वादामिक्षां तत्त्वेन ब्रूत इत्युक्तम् । तत्र विश्वदेवानुवादेन द्रव्यवि-धानं वैश्वदेवीशब्देनैव कर्तव्यम्, पदश्रुतेः । यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः न तूपपदेनेत्युक्तं भावा-

---

नन्वित्यादिना । न यजिकल्पनम् न गृह्णातेर्यज्यर्थकत्वकल्पनम् । ननु तत्र विशिष्टग्रहणरूपक्रियान्तरविधानान्न वाक्यभेदः अत्र वैश्वदेव्यामिक्षेति वाक्ये क्रियान्तराश्रवणात् प्राप्तयागानुवादेन द्रव्यदेवतोभयविधौ वाक्यभेद इत्यत्राशयं स्पष्टयति एवं चेति । अनेन वैश्वदेवेन यजेतेत्यनेन । इति इत्यनेन । प्राप्तदेवतोद्देशेन द्रव्यविधौ अर्थात्तद्देवत्ययागस्य द्रव्याकांक्षाऽपि शाम्यतीति भावः । न च लिङाख्याताश्रवणात्कथं विधिरिति वाच्यम् भावयेदित्यस्य कल्पनीयत्वात् । वाक्यद्वयस्यापि वैश्वदेवीवाक्यस्येव वैश्वदेवेनेति वाक्यस्यापि । वैश्वदेवेनेति वाक्ये आमिक्षावाक्यविहितक-र्मभिन्नकर्मविधानपक्षे प्रागापादितो यो दोषः स न स्वपक्ष इत्याह नापीति । किमनुवादेन कस्यानुवादेन । तत्र तद्धितस्य द्रव्यवाचित्वे सति । वैश्व-देवीशब्देनैव उद्देश्यसमर्पकतया गृहीतेन तच्छब्देनैव । न त्वामिक्षाशब्देन । अत्र हेतुः पदश्रुतेरिति । यथेति यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः, न तूपपदेन, तद्वत् वैश्वदेवीशब्देनैव कर्तव्यमित्यन्वयः । उक्तदृष्टान्तस्य प्रामाणिकत्वदर्शनायोक्तम् 'इत्युक्तं भावार्थाधिकरणे' इति ।

र्थाधिकरणे तद्वत् । तत्र च वषट्कर्तुः प्रथमभक्ष इतिवदेकप्रसरताविरोधः । अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्तव्यम् ।

अतश्च पशुसोमाधिकरणन्यायवैषम्यम् । ऐन्द्रवायवं गृह्णातीत्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात् । यजिकल्पने च वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तम्, रूपद्वयश्रवणात् । एवं चाग्नेयोऽष्टाकपालः सौम्यश्चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेतिवाक्यस्य प्रायपाठो रक्षितो भवति । अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानमत्र च द्रव्यमात्र-

---

न खल्वपदार्थ एव स्वार्थ इत्यभिसन्धाय पदश्रुतिः स्वकार्यं झटित्यर्थोपस्थापनरूपमकृत्वा जोषं स्थास्यतीति । तत्र च अनुवादविधानयोरेकपदकार्यत्वे च सति । इतिवत् इत्यत्रेव । अनुवादेनापीत्यपिर्वक्ष्यमाणविधानसमुच्चये, वार्थे वा । कर्तव्यमिति । तृतीयाविपरिणामेन वैश्वदेव्यामिक्षया यजेतेति वाक्याकारो वाच्य इति भावः । यदि ऐन्द्रवायववाक्ये द्रव्योद्देशेन देवतामात्रविधानमुक्तं स्यात् । यदि वा देवताविशिष्टग्रहणं विधातुं न शक्येत, तर्हि तत्रापि यजिकल्पनं स्यात् । न त्वेवमिति वैषम्यमुपपादयति ऐन्द्रेति । विशिष्टेति । ग्रहणे देवतावैशिष्ट्यं तद्देवताकमन्त्रोच्चारणकालिकत्वरूपम् । नन्वस्तु यजिकल्पनम् अथापि वैश्वदेववाक्यमवैयर्थ्याय देवताविशिष्टयागविधायकम् । आमिक्षावाक्यं यागानुवादेन द्रव्यविधायकमित्यत्राह यजीति । नन्ववैयर्थ्याय नीरूपवाक्ये एवाग्निहोत्रं जुहोतीत्यत्र कर्मविधानं स्वीकृतम् । किमुतैकरूपवति वैश्वदेववाक्ये इत्यत्रान्यदाह एवं चेति प्रायपाठः यागविधायिवाक्यक्रमे पाठः । तेषां वाक्यानां द्रव्यदेवताविशिष्टयागविधायित्वात्तत्साहित्यादस्यापि तथात्वमवगम्यत इति भावः । अन्यथा यागविधायित्वाभावे । यज्यभावात्तत्रैव कथं यागविधानमित्यत्रोक्तं कल्पितेत्यन्तम् ।

विधानमिति वैरूप्यं प्रसज्येत ।

किं च वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य देवतासमर्पकत्वे 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इत्येतस्यार्थवादस्यात्यन्तमेव निरालम्बनत्वं स्यात् । एतदर्थवादाद्धि वैश्वदेवशब्दो विश्वदेवकर्तृकत्वेन कर्मणि प्रवृत्त इति ज्ञायते । न देवतासमर्पकत्वेन ।

किं च वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम् । तथा च तया न वाजिनं बाधितुं शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागाङ्गत्वं स्यात् । तथा च विकल्पः । स चाष्टदोष इति । तस्माद्वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम् । इतर-

---

वैरूप्यमिति एतेनामिक्षावाक्ये द्रव्यविशिष्टयागविधिः । वैश्वदेववाक्ये यागानुवादेन देवताविधिरिति पक्षोऽपि निरस्तः । वाक्यशेषेणापि विरोध इत्याह किं चेति । दोषान्तरमाह किं चेति । यागविधित्वे देवताविशिष्टयागविधित्वे । नेति । आमिक्षावाक्ये प्राप्तयागानुवादेन द्रव्यमात्रविधानादिति भावः । नेति । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति वाक्ये प्रकृतयागानुवादेन विधातुं शक्यत्वात् वाजिनस्येति भावः । ननु वाजिनवाक्ये कर्मान्तराकल्पनाल्लाघवादिष्टापत्तिरित्यत्र दोषमाह तथा चेति । विकल्प इति । द्रव्यस्य यागनिर्वृत्तिरूपदृष्टप्रयोजनकत्वादेकैकेनैव तत्सम्भवेन युगपदुभयस्वीकारासम्भवादिति भावः । विकल्पस्यैव कथं दोषत्वं तत्राह स चेति । अष्टेति । आमिक्षा कदाचित् गृह्यतेऽन्यदा वाजिनम् । तत्रामिक्षाप्रयोगे वाजिनशास्त्रस्यानुष्ठापकत्वं नास्ति । अतस्तत्रानुष्ठापकत्वरूपप्रामाण्यस्य विद्यमानस्य त्यागः, अननुष्ठापकत्वरूपाप्रामाण्यस्वीकारः । पुनर्वाजिनानुष्ठाने तस्मिन्नेव शास्त्रे पूर्वस्वीकृताप्रामाण्यपरित्यागः, त्यक्तप्रामाण्यस्वीकारश्चेति वाजिनशास्त्रे चत्वारो दोषाः । एवं

स्य त्वनुवादत्वम् । अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत् । तत्सिद्धं वैश्वदेवशब्दस्य कर्मनामधेयत्वम् । तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम् ।

अनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरत्वेन निषेधानां

---

वाजिनप्रयोगे आमिक्षाशास्त्रे प्रामाण्यत्यागाप्रामाण्यस्वीकारौ । पुनरामिक्षाऽनुष्ठाने पूर्वस्वीकृताप्रामाण्यत्यागत्यक्तप्रामाण्यस्वीकाराविति चत्वारो दोषा इत्याहत्याष्टौ दोषा विकल्पे । तथोक्तमिति प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देन यागाष्टकग्रहणेन तत्र देशसम्बन्धसिद्धिः प्रयोजनमनुवादस्येत्युक्तमित्यर्थः । नन्वनुवादाभावेऽपि सर्वेषां देशैक्यं सिद्ध्यति, न त्वामिक्षायागमात्रस्य । तस्य फलसम्बन्धे सति तदन्येषां फलवत्सन्निधावफलं तदङ्गमिति न्यायेन तदङ्गत्वे च, साङ्गप्रधानं प्रतिदेशस्यैकस्यैव प्रयोगविधिना विधानेन सप्तस्वपि तत्प्राप्तिसम्भवात् । अतोऽनुवादो व्यर्थ इति चेन्न ; अङ्गत्वमन्तरा सर्वेषां फलसम्बन्धसिद्धिरूपप्रयोजनस्यैव विद्वद्वाक्ये दर्शाद्यनुवादस्येव वैश्वदेवानुवादस्य सम्भवादित्याक्षेपसमाधाने अभिसन्धायाह इत्यास्तां तावदिति । वैश्वदेवशब्दस्य नामधेयत्वमुपसंहरति तदिति । नामधेयानामर्थवत्त्वमुपसंहरति तदेवमिति ॥

यन्नामधेयानि सकृत्स्मृतानि
परिच्छिदातीतफलप्रसूनि ।
विनम्य गोविन्दमिमं विधेय
परिच्छिदाख्यायत नामधेयम् ॥

---

विधिमन्त्रनामधेयानन्तरं निषेधानां प्रयोजनवदर्थपर्यवसायित्वं दर्शयति अनर्थेति । अनर्थो नरकादिः । तद्धेतोः कर्मणः । पुरुषार्थानुबन्धि-

पुरुषार्थानुबन्धित्वम् । तथा हि—यथा विधयः प्रवर्तनामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति, 'एवं न कलञ्जं भक्षयेत्' इत्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्ज-भक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति ।

ननु कथं निषेधानां निवर्तनाप्रतिपादकत्वम्। यावता न भक्ष-येन्न हन्तव्य इत्येवमादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये

---

त्वमिति । इष्टप्राप्तेरिवानिष्टाप्राप्तेरपि पुरुषार्थत्वादनिष्टहेतुकर्मतो निवृत्तौ निषेधेन कृतायां तत्कर्माननुष्ठाने सामग्र्यभावादनिष्टानिष्पत्त्या तथाविधपुरु-षार्थसम्पादकार्थबोधकत्वमित्यर्थः । अत्रोदाहरणं—न कलञ्जं भक्षयेत्; ब्रा-ह्मणो न हन्तव्य इत्यादि । एवं निषिद्धत्वमेव निषेधगम्यानिष्टसाधनता-कत्वरूपमधर्मत्वमिति ज्ञेयम् । ननु कर्मणः कलञ्जभक्षणादेरनर्थहेतुत्व-मसिद्धम् । लिङादेः प्रेरणाभिधायकस्य निवर्तकत्वायोगादित्यत्राह तथा-हीति । विधयः केवललिङादयः । निषेधाः नञ्समभिव्याहृतलिङादयः । सति निवर्तनाभिधायित्वे सर्वं संगस्यते । तदेव न, प्रेरणाभिधायित्वादि-त्याशङ्कते नन्विति । ननु निषेधानामपि विधीनामिव प्रेरणाप्रतिपादनपरत्वे नञोऽन्वयो न सम्भवतीति को वाक्यार्थ इत्यत्राह यावतेति । यावता प्र-त्युतेति यावत् । आदिना न पिबेदित्यादेर्ग्रहणम् । ननु ब्राह्मणो न हन्त-व्य इत्यत्राव्यवधानं स्यात् । न कलञ्जं भक्षयेदित्यादौ तु कथम्? यावता कलञ्जाद्यव्यवधानमेव दृश्यत इति चेत् अत्र परिहारो 'न भक्षयेदि' ति कलञ्जपदपरिहारेणाभिसंहितः । तिङन्तघटितेषु वाक्येषु दूरस्थस्यापि नञ-स्तिङन्तान्वय एव स्वरसतः प्रतीयत इति । अभावस्य धात्वर्थेनान्वये अभावानुयोगिकधात्वर्थप्रतियोगिकसम्बन्धे । अवगम्यमान इति शेषः । यदुच्चारणाव्यवहितपूर्वोच्चारणविषयत्वं नञः, तदर्थप्रतियोगिकाभावपरत्वमेव 'घटो न पटः,' 'भूतले न घटः' इत्यादौ दृष्टमिति भावः ।

धात्वर्थवर्जनकर्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयेत । ततश्च यथा यजेतेत्यादौ यागकर्तव्यता वाक्यार्थः एवं निषेधेषु तत्तद्धात्वर्थवर्जन-कर्तव्यता वाक्यार्थो न निवर्तनेति चेत्—मैवम् ।

अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात् । न ह्यन्योपसर्जनमन्येनान्वेति । मा भूद्राज-पुरुषमानयेत्यत्र राज्ञ आनयनान्वयित्वम् । ततश्चाव्यवधानेऽपि नञ-र्थस्य न धात्वर्थेनान्वयः । आरुण्यस्येवैकहायन्या । नापि कलञ्जादि-पदार्थैरन्वयः । तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञोऽर्थेनान्वयायोगात् , एकहायन्या इवारुण्येन ।

---

नन्वेवं भक्षणाभावस्याकृतिसाध्यत्वान्न विधिस्पर्शः सम्भवति तत्राह धात्वर्थ-वर्जनेति । वर्जनं नाम, नाहं करिष्य इत्येवं तदभावसङ्कल्पः । कर्तव्यतैव वर्जनकृतिविषयकप्रवर्तनैव । सर्वत्र निषेधेषु । एवं विहितं वर्जनमश्रुत-फलं विश्वजिदादिवत् कल्प्येन फलेन संभन्त्स्यत इति निषेधानामपि विधि-तुल्यत्वमेवेति, कर्मानर्थहेतुत्वनिवृत्तिकरत्वाद्यभिधानमसङ्गतमिति सूचयितुं विधिसादृश्यमभिदधत् निवर्तनावाचित्वाभावं निगमयति ततश्चेति । उपस-र्जनत्वेनेति प्रकृतिप्रत्यययोर्मध्ये 'प्रत्ययः प्राधान्येनेति स्मृतेरसंकुचितप्र-सरत्वादिति भावः । कुत इत्यत्राह मा भूदिति । राज्ञ आनयनान्वयित्वं यथा मा भूदित्यर्थः । अन्यथा तथाऽन्वयस्वीकारे इदं स्यादिति यावत् । आनयनान्वयित्वमिति । समासे तस्य पुरुषोपसर्जनत्वादिति भावः । अन्योपसर्जनस्यान्येनान्वयासम्भवादेव कलञ्जाद्यन्वयोऽपि न भवतीत्याह ना-पीति । भिन्नपदस्येति । यदि तावत् अकलञ्जम् अब्राह्मण इति नञ्घटितमेकं पदं स्यात् , स्यादेव नञर्थोपसर्जनत्वम् । इह तु नञ्पदं भिन्नमिति नैवमिति भावः । एकेति । उक्तपूर्वमेवेदम् । दार्ष्टान्तिके

अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन सम्बध्यते तस्य प्राधान्यात्, क्रयभावनयेवारुण्यादीनि। तत्रापि नाख्यातांशवाच्ययार्थ-

---

विभक्तिनिर्देशानुसारेण विभक्तिव्यत्यासः। प्रत्ययार्थस्याप्यन्योपसर्जनत्वे नञर्थस्य तेनाप्यन्वयासम्भवः स्यात्। तत्प्राधान्यमेव तु मीमांसकसम्मतमिति स्मरयति तस्येति। भावनयेति कारकद्वारेति शेषः। आदिना एकहायन्यादिपरिग्रहः। ननु अन्योपसर्जनमन्येन नान्वेतीत्यस्य ह्ययमर्थः—अन्योपसर्जनं तदितरोपसर्जनं न भवतीति। एवमत्र अन्येनान्वयायोगादित्यस्यान्यं प्रति नञर्थस्य विशेष्यत्वायोगादित्यर्थः। पूर्वपक्षिणो धात्वर्थवर्जनकर्तव्यतेत्यनेन नञर्थस्य विशेष्यताया एवोक्तत्वेन तस्यैव निषेध्यत्वात्। एवं च 'आरुण्यस्यैवैकहायन्या' 'क्रयभावनमेवारुण्यादीनि' इति दृष्टान्तो न सङ्गच्छते; आरुण्यस्यैकहायनीविशेष्यत्वस्य क्वचिदप्याशंक्य परिहृतत्वाभावात्, आरुण्यादीनां क्रयभावनाविशेष्यत्वाभावाच्चेति चेत्—उच्यते। अन्योपसर्जनमन्येन नान्वेतीत्यस्य, अन्यविशेषणमन्येन न सम्बध्यते अन्यं प्रति विशेष्यं विशेषणं वा न भवतीति सामान्यतोऽर्थः। एवं चान्योपसर्जनं तदितरोपसर्जनं न भवति। पदार्थः पदार्थैकदेशेन नान्वेतीति न्यायद्वयमेकेन क्रोडीकृतं भवतीति ग्रन्थकाराशयः। एवं च प्रकृतघट्टे विशेष्यत्वं विशेषणत्वं वा न विवक्षितम्। तच्चौचित्यानुसारेण पश्चात्पर्यालोचनीयम्। परस्परासम्बन्धमात्रं तु प्रतिपाद्यत इति तावन्मात्रेण दृष्टान्तोपपत्तिः। अत एवात्राव्यवस्थया विभक्तिनिर्देशः। न चैवं सत्यारुण्यादिकारकाणामर्थभावनासम्बन्धोऽपि न स्यात् तस्याः शब्दभावनोपसर्जनत्वादिति वाच्यम्; न्यायस्य ह्ययमर्थः—अन्योपसर्जनं जातं पश्चादन्यसम्बन्धं न लभत इति। इह त्वर्थभावनायाः शब्दभावनोपसर्जनत्वप्राप्तेः प्रागेव कारकान्वय इति न दोष इति।

आरुण्यादेरिव नञर्थस्य नार्थभावनायामप्यन्वय इत्युपपादयति तत्रापीति। प्रत्ययार्थेऽपीत्यर्थः। भावनयेति। नञर्थः सम्बध्यत इत्यनुषङ्गः।

भावनया तस्या अपि लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितत्वात् । अतो लिङ्त्वांशेन नञ् सम्बध्यते । तस्य सर्वापेक्षया प्राधान्यात् ।

नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। नास्तीत्यत्र ह्यस्तीति सत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति। तदिह लिङर्थस्तावत् प्रवर्तना। अतस्तेन सम्बध्यमानो नञ् प्रवर्तनाप्रतिपक्षां निवर्तनां गमयति। विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवन्निषेधवाक्यश्रवणेऽयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापाररूपनिवर्तनायाः प्रतीतेः ।

अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः । एवं च विधि-

---

उपस्थितत्वादिति । नञ्शून्यवाक्येषु तथैव व्युत्पत्तेरिति भावः । अतः वाक्यघटकपदान्तरार्थैरर्थभावनया चासम्बन्धात् । लिङ्त्वांशेन तद्वाच्यप्रवर्तनया । नञ् नञर्थः । सर्वापेक्षयेति । साक्षात्परम्परया वा सर्वस्याप्यर्थस्य तदन्वितत्वादिति भावः । नन्वेवमप्यभाववाचित्वान्नञः प्रवर्तनाभाव इत्येवार्थः सिद्ध्यति , न निवर्तनेत्यत्र तत्सिद्धिमुपपादयति नञश्चेति । स्वसम्बन्धीति स्वसमभिव्याहृतपदार्थेत्यर्थः । यत् बोधकत्वमेष स्वभावः इति विधेयानुरोधाल्लिङ्गभेदः । तत् स्वसम्बन्धिप्रतिपक्षबोधकत्वात् । अस्य गमयतीत्यनेनान्वयः । इह न भक्षयेदित्यादौ । अस्य नञित्यनेनान्वयः । तेन लिङर्थेन लिङेति वा । प्रवर्तनाप्रतिपक्षेण निवर्तनारूपेणैव भाव्यमित्यत्र गमकं दर्शयति विधीति । एवं व्युत्पत्तिभङ्गायोगात् प्रतीत्यनुरोधाच्च निवर्तनैव वाक्यार्थ इति निगमयति अतश्चेति । पुरुषार्थानुबन्धित्वस्य प्रकारान्तरेण संभवेऽप्युक्तयुक्त्या निवर्तनावाक्यार्थपक्ष एव युक्त इतीदं वृद्धसंमतिसूचनेन द्रढयितुमाह एवं चेति । उभयत्र विधौ निषेधे च ।

निषेधयोर्भिन्नार्थत्वं सिद्धं भवति । हननादिवर्जनकर्तव्यतावाक्यार्थपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात् । तच्च न युक्तम् । यथाऽऽहुः—

अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः ।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥ इति ।

तथा— फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।
पञ्चधाऽत्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः ॥ इति ।

यन्मते इष्टसाधनत्वं लिङर्थस्तन्मतेऽपि लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति । सर्वथाऽपि तु नञः प्राधान्यात् प्रत्ययेनान्वयः । यदा तु तदन्वये किञ्चिद्बाधकं तदाऽ-

---

अन्तरमिति बृहट्टीकावचनमिति सोमनाथः । इदमेव न्यायसुधाकृद्वचनेन विवृणोति तथेत्यादिना । फलेति । एतद्विवरणमपि तत्रैव—

"विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः ।
प्रेरितोऽस्मीति पूर्वे धीर्वारितो स्मीति चापरे ॥
विषयस्येष्टहेतुत्वं विधिना च प्रमीयते ।
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ॥
विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम् ।
रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥
नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् ।
लिङाद्यनुगृहीतस्तु नञ्निषेधस्य बोधकः ॥" इति ।

निवर्तनायाः प्रवर्तनां प्रत्येव प्रतिपक्षत्वात् प्रवर्तनां विहाय विशिष्येष्टसाधनत्वलिङर्थत्वमते निवर्तनाबोधासंभव इति तत्र कथं नञः प्रधानान्वय इत्यत्राह यन्मत इति । नञ इति अन्वय इत्यनेनान्वेति । प्राधान्यादिति । प्रत्ययस्येत्यर्थसिद्धम् ।

गत्या धात्वर्थेनान्वयः।

तच्च बाधकं द्विविधम्। तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च तेन च बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्युदासाश्रयणं भवति। तदभावे निषेध एव—

पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्। इति,
प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्॥

इति च तयोर्लक्षणम्। तत्र नेक्षेतोद्यन्तमादित्यमित्यादौ पर्युदासाश्रयणम्, तस्य व्रतमित्युपक्रमात्।

---

उक्ते सर्वत्र निवर्तनैव वाक्यार्थ इत्यर्थेऽपवादं दर्शयति यदा त्विति। धात्वर्थेनेति अप्रधानपदार्थेनेत्यर्थः। तेन नानूयाजेष्वित्यस्य संग्रहः। द्वयेन तदन्यतरेण। तदभावे बाधकाभावे। ननु नञ्घटितं वाक्यं निषेधः। तत् कथं पर्युदासो निषेध इति तत्र विभागः? तत्राह पर्युदास इति। यत्र वाक्ये। उत्तरपदेन 'नामधात्वर्थयोगी तु नैव नञ्प्रतिषेधकः' इत्युक्तरीत्या अप्रधानेन क्रियावाचकप्रत्ययभिन्नेन पदेन। क्रिययेति। यद्यपीदं नवीनमीमांसकमत एव संगच्छते। तैर्नञर्थस्यार्थभावनायामेवान्वयस्वीकारात् कलञ्जभक्षणप्रवृत्तिरभावप्रतियोगिनीति। तन्मते शब्दभावनापेक्षयाऽप्यर्थभावनाया एव विशेष्यत्वात् न अन्योपसर्जनमिति न्यायविरोधोऽपि। निषेधस्थले अर्थभावनायाः स्वाभावप्रयोजकत्वसम्बन्धेन निवर्तनायामन्वय इति प्राञ्चः। निवर्तनारूपव्यापारस्यैव स्वप्रयोज्याभावप्रतियोगित्वसम्बन्धेनार्थभावनायामन्वय इति ते। तथा च क्रिययाऽर्थभावनया सह नञिति तन्मत एव युक्तम्। अथापि क्रिययेति पदं प्राचीनमते क्रियार्थकलिङ्त्येतत्परम्। 'पर्युदासस्स विज्ञेयो यत्र पूर्वपदेन नञ् इति, प्रतिषेधस्स विज्ञेयो यत्रोत्तरपदेन नञ् इति च तयोर्लक्षणम्। उत्तरपदं प्रत्ययः। तदन्यत्पदं पूर्वपदम्' इति क्वचित्पाठो लक्ष्यत इव। तदापि तात्पर्यमेकमेव।

तत्तद्बाधकस्थलं दर्शयति तत्रेति। बाधकद्वय इत्यर्थः। तस्य व्रतमि-

तथा हि व्रतशब्देन कर्तव्योऽर्थ उच्यते । अतश्च स्नातकस्य कर्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् किं तत्कर्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यन्तमित्यादौ कर्तव्य एवार्थो वक्तव्यः, आकांक्षिताभिधानात् । अर्थान्तरोक्तौ च पूर्ववाक्यस्य साकांक्षत्वेनाप्रामाण्यं स्यात् । न हि कर्तव्यार्थस्य वक्तव्यत्वेनोपक्रमेऽग्रे च तदनभिधाने पूर्ववाक्यस्य निराकांक्षत्वं सम्भवति । न च साकांक्षस्य प्रामाण्यम्, गौरश्वः पुरुषः इत्यादावपि तत्प्रसङ्गात् ।

किं च नेक्षेतेत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात् अर्थान्तरोक्तेः । अतश्चास्मिन् वाक्ये कश्चित्कर्तव्य एवार्थो वक्तव्यः । तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते । तत्सम्बन्धे कर्तव्यार्थोक्तेरनुपपत्तेः । प्रत्ययाच्चावतारितो नञ् धातुना सम्बध्यते । तत्सम्बन्धे च न नञः प्रतिषेधकत्वम् । विधायकसम्बन्धेनैव तस्य प्रतिषेधकत्वात् । प्रतिषेधकत्वस्य विधायकप्रतिपक्षत्वात् ।

नामधातुयोगे तु न नञः प्रतिषेधकत्वम् । तयोरविधायकत्वात् यथाऽऽहुः—

नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः ।
वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥ इति ।

---

त्युपक्रमादित्यनेनान्वयः । तस्य बाधकत्वमुपपादयति तथा हीति । आकांक्षिताभिधानादिति आकांक्षितस्याभिधेयत्वादित्यर्थः । गौरित्यादि । प्रत्येकं किं करोतीत्याकांक्षासद्भावेन तदपरिपूरणात्तत्राप्रामाण्यमिष्टम् । तत्रापि प्रामाण्यं प्रसजेदिति भावः । नन्वाकांक्षिताभिधानं तत्प्रकरणगतेन नञ्रहितवाक्यान्तरेण स्यादित्यत्राह किं चेति । तथा च तादृशवाक्यस्येवास्यापि तदेकवाक्यत्वाध्यवसायात् तद्भङ्गो न कार्य इति भावः । प्रत्ययाच्चावतारित इत्यनेन धातोरितरापेक्षया सन्निहितत्वं सम्बन्धे नियामकं स्फोरितम् । तयोः नामधात्वोः । नामधात्वर्थयोगी नामार्थधात्वर्थान्वययोग्यर्थकः । नाममात्रमुदाहरति वदत इति । अब्राह्मणशब्दोऽन्यसा-

अतश्च नेक्षेतेत्यत्र नञो धातुयोगान्नञीक्षतिभ्यामीक्षणविरोधी कश्चनार्थः प्रतिपाद्यते ।

ननु तदन्यतद्विरुद्धतदभावेषु नञिति सत्यपि स्मरणे नञः स्वसंसृष्टाभाव एव शक्तिः, लाघवात्। न तु तदन्यतद्विरुद्धयोः, तयोरभावघटितत्वेन गौरवात् । अनेकार्थत्वस्य चान्याय्यत्वात्। अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव , न तु तद्विरुद्धार्थबोधकत्वमिति चेत्। सत्यम्। नञोऽभाव एव शक्तिः । स्मरणं तु प्रतीत्यभिप्रायं न शक्त्यभिप्रायम् । नामधात्वर्थयोगीत्यपि प्रतीत्यभिप्रायम्।

तथाऽपि नेक्षेतेत्यत्र प्रत्ययस्य नञाऽसम्बन्धात्तेन तावत्कश्चिदर्थो विधेयः। तत्र न तावद्धात्वर्थो विधातुं शक्यते , नञा तदभावबोधनात्। नापि तदभावो विधातुं शक्यते , अभावस्याविधेयत्वात्। अतश्च नञीक्षतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते । स चेक्षणविरोधी लक्ष्यमाणः पदार्थो नेक्षे इत्यनीक्षणसङ्कल्पः, तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्ये-

---

मान्यवाची । अधर्मशब्दो धर्मविरोधिवाची । न कश्चिदिह प्रतिषेधवाचीत्यर्थः । वदतीति पाठे इत्यत्रेत्यध्याहृत्य अब्राह्मणाधर्मावित्यत्र नञ् अन्यमात्ररूपं विरोधिरूपं चार्थं वदतीति व्याख्येयम् । नेक्षेतेति प्रकृतमेव धातूदाहरणम्। ईक्षणविरोधीति । ईक्षणान्यप्रतिपादकत्वे तत् अन्यदत्र विधेयं इदमिति न ज्ञायेत । विरोध्यर्थकत्वे तु न तावान्क्लेश इति भावः। शङ्कते नन्विति। स्वसंसृष्टाभावे स्वसंसृष्टः स्वसमभिव्याहृतपदार्थः तत्प्रतियोगिकत्वोपलक्षितेऽभावे । ननु विरुद्धादावेव शक्तिरस्तु तत्राह लाघवादिति। अभावघटितत्वेनेति। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाववानन्यपदार्थः । विरुद्धत्वं सहानवस्थानरूपम् भिन्नाधारत्वादिरूपं वेति तयोरभावघटितत्वम् । सर्वत्र शक्तिस्वीकारे आह अनेकेति । स्मरणं निर्वहति स्मरणं त्विति। प्रतीत्यभिप्रायमिति। प्रतीतिश्च शक्त्यभावेऽपि वृत्त्यन्तरेणोपपद्यत इति भावः। एवं तर्हि कथं प्रकृते विरोध्यर्थकत्वमित्यत्राह तथाऽपीति। पदार्थान्तरस्य चक्षुर्मीलनादेः। सर्वक्रिया-

क्षणविरोधित्वे सर्वक्रियाऽविनाभूतत्वेन सङ्कल्पस्यैव लक्षणात् । स एव नेक्षेतेत्यत्र कर्तव्यतया विधीयते अनीक्षणसङ्कल्पेन भावयेदिति । भाव्याकांक्षायां च एतावता हैनसा वियुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते ।

एवं चात्र पापक्षयार्थसङ्कल्पस्य कर्तव्यतया विधानात्तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवति । तत्सिद्धं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात्पर्युदासाश्रयणमिति ।

नानुयाजेषु येयजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदाश्रयणम् । तथा हि यद्यत्र प्रधानसम्बन्धलोभान्नञः प्रत्ययसम्बन्धः स्वीक्रियते तथा सत्यनेन वाक्येनानुयाजेषु येयजामहः प्रतिषिध्यते इति वक्तव्यमनुयाजेषु येयजामहं न कुर्यादिति । न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति प्राप्तिसापेक्षत्वात्प्रतिषेधस्य ।

अत एव नान्तरिक्षे न दिवीत्यस्य न प्रतिषेधत्वमन्तरिक्षे चय-

---

विनाभूतत्वेनेति । स्नातकप्रकरणे या या क्रिया निषिद्धेव प्रतीयते तत्र तत्र तदभावसङ्कल्पो विरोधीत्युक्तावनुगमो भवति । अन्यादृशं विरोधित्वमनुगतं दुर्वचमिति भावः । ननु विधित्वे फलं कल्पनीयमित्यत्र न कल्पनीयमित्याशयेनाह भाव्येति । यद्वेदृशनञ्घटितवाक्यस्यापि पुरुषार्थानुबन्धित्वं दर्शयति भाव्येति । एतावता अनीक्षणसङ्कल्पमात्रेण ॥

द्वितीयं बाधकं स्थलदर्शनेनोपपादयति नानूयाजेष्विति । आश्रावयेति चतुरक्षरम् । यजेति द्व्यक्षरम् । येयजामह इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः इत्यनारभ्यश्रुतेन यजतिषु सर्वत्र येयजामहोऽपि विहितः । इदञ्च येयजामह इति पदद्वयं होत्रा याज्यावचनाव्यवहितपूर्वं सर्वत्र प्रयुज्यते । अथ श्रूयते 'नानूयाजेषु येयजामहं करोतीति । तदाश्रयणम् पर्युदासाश्रयणम् । पर्युदासानाश्रयणे विकल्पप्रसक्तिं तदाश्रयणे तदभावं चोपपादयितुमाह तथा हीति । अत एव प्राप्तिं विना प्रतिषेधासम्भवादेव । नान्तरिक्ष इत्यादि । न पृथिव्यामग्निश्चेतव्य इति

नाप्राप्तेः । अत एव ब्राह्मणो न हन्तव्य इत्यस्य नित्यवद्धननिवर्तकत्वमुपपद्यते । सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्तते कदाचिच्च रागाद्यभावे न प्रवर्तते । तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागाविरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्तितव्यम् ।

प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः ।

अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोध-

---

हिरण्यनिधानवर्जितपृथिव्यामग्निचयननिषेधस्यायमर्थवादो 'नान्तरिक्षे न दिवी'ति । न पुनस्तद्वत् पृथक्प्रतिषेधकत्वम् अन्तरिक्षादौ चयनकरणस्याप्रसक्तत्वादित्यर्थः । नन्वप्राप्तप्रतिषेध एवाभ्युपगम्यतामित्यत्र दोषं वक्तुमाह अत एवेति । नित्यवद्धननिवर्तकत्वम् सर्वदा हनननिवर्तकत्वम् । कदाचित् रागे सति । सर्वो हि कलञ्जभक्षणादौ रागे सति प्रवर्तते । रागश्च 'इदं मे बलवदनिष्टाननुबन्धीष्टसाधन'मिति ज्ञाने सति, न त्वन्यदा । तत्र निषेधस्याप्राप्तनिषेधत्वमस्ति न वा । अस्ति चेत् प्राप्तनिषेधो न स्यात् । प्राप्तनिषेधे हि प्राप्तिप्रयोजकं प्रवर्तमानपुरुषगतं रागादिकं बाधितव्यं स्यात् । न चाबाधेनोपपत्तौ बाधो युक्तः । अतो निषेधस्याप्रवृत्तविषये चारितार्थतया सर्वमपि निषिद्धमपेक्षायां सत्यामशृंखलमनुष्ठेयमापद्यते । अतः प्राप्तनिषेधत्वमात्रं स्वीकार्यम् । एवं च स्वयं निवृत्ते निषेधव्यापाराभावान्निषेधो हननादेरनिष्टसाधनत्वज्ञानमुत्पादयन् पूर्वोक्तबलवदनिष्टाननुबन्धित्वज्ञाने भ्रान्तित्वं कल्पयन् तदधीनं रागं बाधमानः प्रवर्तमानमेव निवर्तयन् प्रमाणं भवति । एवं च यदा यदा पुरुषः प्रवर्तते तदा तदा शास्त्रबलान्निवर्तते, अन्यदा च स्वयमेव निवृत्त इति सिद्धं नित्यवद्धननानिवर्तकत्वम् । निवृत्ति-

कत्वम् । व्रीहीनवहन्यादित्यस्यैवावघातनियमबोधकत्वम् । यथा खलु व्रीहीनवहन्यादिति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रवर्तते वैयर्थ्यात्, किं तु दलनादौ प्रवृत्तं प्रति । एवं न हन्यादिति शास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्तते वैयर्थ्यात्, किं तु हनने प्रवृत्तं पुरुषं प्रति, कर्तव्यत्वेन प्रसक्तस्य प्रतिषेधाद्यत्कर्तव्यं तन्नेति ।

अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या । सा न तावद्धननादाविव रागतः संभवति । अतो यजतिषु येयजामहं करोतीति शास्त्रात्सा वक्तव्या । शास्त्रप्राप्तस्य च प्रतिषेधे विकल्पः स्याच्छास्त्रेण भ्रान्तिनिमित्त-[राग]स्येव शास्त्रान्तरस्यात्यन्तबाधायोगात् ।

---

नियमबोधकत्वमिति । न शास्त्रस्य नियमबोधने तात्पर्यम् । किं तु प्रवृत्तिकालप्राप्तानिवृत्तिबोधन एव । अर्थात्तु नियमः सिद्ध्यतीति ध्येयम् । हेतुमाह कर्तव्यत्वेनेति । कर्तव्यत्वेन प्रसक्तस्य, 'यत्कर्तव्यं तन्ने' ति प्रतिषेधादित्यन्वयः । प्रकृतमनुसरति अतश्चेति । ननु प्राप्तिसापेक्षत्वेऽपि कथं विकल्पप्रसक्तिः, न हन्तव्य इत्यादौ तदभावात् । तत्राह सेत्यादि । नेति सुखकरत्वाभावादलौकिकत्वाच्चेति भावः । यजतिष्विति । 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इति वाक्यमेव येयजामहमात्रनिष्कर्षेणैवंरूपेण शास्त्रकृतो लिखन्ति । यजतिशब्दः श्तिपा निर्दिष्टो धात्वर्थको लक्षणया यागपरः । ननु 'यदाहवनीये जुहोती'त्यनेन होमसामान्यस्याहवनीयरूपमधिकरणं प्राप्तम् । पदे जुहोतीत्यनेनाश्वमेधिकहोमविशेषे विहितेनाश्वपदन्यासरूपाधिकरणेन प्रतिषिध्यते । न तत्र विकल्प इष्टः । तद्वदिहापि यागसामान्ये प्राप्तो येयजामहोऽनुयाजरूपे विशेषे प्रतिषिद्ध्यत इति

न च पदशास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु येयजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्। शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता। न हि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षाऽस्ति। निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा।

एवं च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्। स च न युक्तः। विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति। न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति। व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य। द्विरदृष्टकल्पना च स्यात्। विधेर्हि एवं ज्ञायते यदनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति। निषेधाच्च तदकर-

---

न विकल्प इत्याशङ्कामनूद्य परिहरति न चेति। बाध्यबाधकभावः अत्यन्तबाध्यबाधकभावः। परस्य विशेषशास्त्रस्य। निरपेक्षता सामान्यशास्त्रानपेक्षता। विधेरस्त्यपेक्षा विध्यपेक्षाऽस्तीत्यर्थः। प्राप्तिसापेक्षत्वस्योक्तत्वादिति भावः। विकल्प इति अत्यन्तबाधे विध्यंशवैयर्थ्यम्। बाधात्यन्ताभावे च निषेधवैयर्थ्यमिति। अद्य तु न बाधो नाप्यबाध इति। एवं विकल्पः साधितः। तस्यानिष्टत्वं दर्शयति स चेति। पक्षे शास्त्रान्तरानुष्ठाने। अप्रामाण्यम् अननुष्ठापकत्वरूपम्। एवमनुष्ठानदशामादाय विकल्पस्यायुक्तत्वमुक्तम्। अथार्थालोचनदशामादायाह द्विरिति। यद्यपि विकल्पस्थले समुच्चयवैलक्षण्याय वैकल्पिकतत्तदर्थजन्यमदृष्टमेकमेव। अथाप्येकस्यापि तस्य जनकभेदेन कार्यकारणभावभेदः कल्प्य इति द्विरित्यनेन सूच्यते। तदकरणादिति कश्चनोपकारो भवतीत्यनुषङ्गः। अनृतवदना-

णादिति ज्ञायते । अनृतवदनाकरणादिव दर्शपूर्णमासयोः । स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः । अतश्च विकल्पो न युक्तः । प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणम् ।

किं तु नञः अनुयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात् । अनुयाजव्यतिरिक्तेषु येयजामहं करोतीति । अत्र च वाक्ये येयजामहः कर्तव्यतया न विधीयते यजतिषु येयजामहं करोतीत्यनेनैव विहितत्वात् । किं तु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते—यत् यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति । एवं च सामान्यशास्त्रस्य विशेषापेक्षिणः नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्तव्यतया प्राप्तः । अनुयाजेषु तु स न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः ।

लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यम् । अतश्च पर्युदासाश्रयणे न किञ्चिद्बाधकम् । तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्पर्युदासाश्रयणमिति ।

ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण

---

देर्निषिद्धस्यानुष्ठानं प्रधानगतयोग्यताप्रतिबन्धकमिति प्रतिबन्धकाभावविधयाऽननुष्ठानस्य प्रधानगतयोग्यताजनकत्वम् । प्रकृते च विहितस्योपकारजनकत्ववत् निषेधबलेन निषिद्धक्रियाभावविशिष्टेतराङ्गानां प्रधानोपकारजनकत्वस्य वक्तव्यतया कारणकोटिप्रवेशादकरणरूपस्याभावस्योपकारप्रयोजकत्वं बोध्यम् । नन्वनुयाजव्यतिरिक्तेष्वपि यजतिषु येयजामहस्य सामान्यवचनप्राप्तत्वादनेन वाक्येन न तत्र तद्विधिरित्यत्राह अत्र चेति । प्राप्तः शास्त्रसिद्धः । नाप्रामाण्यमिति । विकल्पे कादाचित्कमप्रामाण्यम् अत्यन्ताप्राप्तप्रतिषेधे

यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्ते सङ्कोचनात् पर्युदासस्योपसंहारादभेदः स्यात् । उपसंहारे हि सामान्ये प्राप्तस्य विशेषे सङ्कोचो भवति । यथा पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणमाग्नेयं चतुर्धा करोतीत्याग्नेये सङ्कोच्यत इति चेन्न । तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य, तदन्यमात्रसङ्कोचार्थत्वात् पर्युदासस्येति केचित् ।

अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो व्यापारविशेषो विधेः । पर्युदासस्तु—

पर्युदासस्तु (स्स) विज्ञेयो यत्र पूर्व(त्रोत्तर)पदेन नञ् ।

इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः सम्बन्धः । अतोऽनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः ।

एवं सत्यप्यभेद आशङ्क्येत यदि यत्र पर्युदासस्तत्रावश्यमुप-

---

चाप्रसिद्धार्थबोधपरत्वादप्रामाण्यम् । तदिदानीं नेत्यर्थः । पुरोडाशसामान्ये आग्नेयाग्नीषोमीयपुरोडाशसामान्ये । चतुर्धा करणम् इष्टशिष्टस्य ऋत्विग्भ्यो दानार्थं क्रियमाणम् । तन्मात्रेत्यादि । तन्मात्रे यः सङ्कोचः तदर्थत्वादित्यर्थः । मात्रपदं स्पष्टार्थम् । पर्युदासस्थले उपसंहारसम्भवेऽपि न तावतोभयोरैक्यप्रसक्तिरित्यन्येषामाशयः ; तमाहान्ये त्विति । शब्दार्थविवेचनेन भेदं दर्शयति उपेति । विशेषे सङ्कोचनरूपः विशेषमात्रवृत्तित्वबोधनरूपः । प्रत्ययातिरिक्तेनेति अस्य विवरणं धातुना नाम्ना वेति । प्रत्ययातिरिक्तेन नञः सम्बन्धः पर्युदासः । ननु कारिकायां यत्रेत्युक्त्या स इति परामर्शात् वाक्यविशेषः पर्युदास इति ज्ञायते । तत् कथं सम्बन्धः पर्युदास इति । उच्यते, वाक्यं नाम समभिव्याहारः परस्परपदसम्बन्ध एवेति । नन्वेवमर्थभेदेऽपि यत्र पर्युदासस्तत्रोपसंहार इति उपसंहारोक्त्यैव पर्युदाससिद्धौ भिन्नवन्निर्देशः किमर्थ इत्यत्राहैवमिति । अभेदशङ्का कदा

संहारः स्यात् । न चैतदस्ति । नेक्षेतोद्यन्तमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात् । न हि तत्राग्नेयेचतुर्धाकरणमिव सामान्ये प्राप्तं किञ्चिद्विशेषे संकोच्यते । पापक्षयोद्देशेनानीक्षणसंकल्पमात्रविधानात् ।

प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजामहस्यानुयाजव्यतिरिक्तेषु संकोचनाद्यदि विधेरुपसंहारविधित्वं संभवति नैतावता किञ्चिद्विरुध्यते । विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन क्रियत इति भवति विरोधः । न चात्र विधिर्नास्ति नञोऽनुयाजपदसम्बन्धेन विधेर्विधायकत्वस्याव्याघातात् । अत्र हि पर्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पकः आग्नेयपदवत् । उपसंहारस्तु विधिरेव ।

न च अत्र तन्मात्रसंकोचाभावान्नोपसंहार इति वाच्यम् । तन्मात्रसंकोच इति कोऽर्थः । आग्नेयमात्रे संकोचो वा, सामान्य-

---

स्यात्? यदि पर्युदासस्थले सर्वत्रोपसंहारः स्यात् तदा । न च तत्र सर्वत्रोपसंहारसत्त्वमिति । ननु तत्राप्युद्यदनुद्यदुभयसाधारण्येन प्राप्तस्येक्षणस्यानुद्यतिसङ्कोचः क्रियते, नेत्याह पापेति । कार्यम् कार्यभूतः । अव्याघातात् अक्षतत्वात् । तर्हि पर्युदासकार्यं किमित्यत्र विवेचयति अत्र हीति । नञनुयाजपदयोरेव पर्युदासत्वात् तयोस्तदर्थोपस्थापकत्वादिति भावः । तथा च पर्युदासकार्यमनुयाजव्यतिरिक्तेत्यर्थबोधनम् ; विधिकार्यं तत्र येयजामहसत्त्वबोधनमिति भावः ।

पूर्वं कैश्चिदुक्तमनूद्य दूषयति न चेति । तच्छब्दस्य बुद्धिस्थव्यक्तिवाचित्वात् आग्नेयनिदर्शनेनोक्तस्य तस्य तन्मात्रविषयकत्वं प्रतीयते । यदि तादृशं सर्वमभिप्रेत्योक्तम्, तदा द्वितीयार्थः प्रतीयते इति मनसिकृत्य पृच्छति तन्मात्रेति । इति कोऽर्थः इत्यस्य कोऽर्थः । ननूपसंहारस्थले आग्नेयपुरो-

प्राप्तस्य विशेषमात्रे संकोचो वा । आद्येऽनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारो न स्यादाग्नेयसंकोचाभावात् । द्वितीये चतुर्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये संकोचवदनुयाजानुयाजसाधारण्येन प्राप्तस्याननुयाजेषु संकोचादुपसंहारः स्यादेव ।

एतावांस्तु विशेषः । आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थिताः । प्रकृते तु पर्युदासेन तस्योपस्थितिरिति । उपसंहारन्यायस्त्वविशिष्ट एव । यच्च तदन्यमात्रसंकोचनार्थत्वात्पर्युदासस्येति । तन्न । नेक्षेतेत्यत्र सत्यपि पर्युदासे संकोचाभावात् । न ह्यत्र सामान्ये प्राप्तं तदन्यमात्रे संकोच्यते संकल्पमात्रविधानादित्युक्तमित्यास्तां तावत् । तत्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणमिति ।

---

डाशः उपसंहारस्थलभूतः विशेषरूपेण निर्दिश्यते । ननु पर्युदासस्थले 'नानुयाजेष्विति अनुयाजभिन्नप्रयाजादीनां विशेषरूपेणोपस्थितिर्नास्ति, किं तु अनुयाजभिन्नत्वेन रूपेणेति वैलक्षण्यादुपसंहारपर्युदासभेदोऽस्तु इत्यत्र, सत्यमस्ति वैलक्षण्यम् अथापि तदविवक्षितम् उपसंहारशब्दवाच्यस्य सङ्कोचस्याक्षतत्वात् पर्युदासस्थलेऽप्युपसंहार इष्यत इत्याह एतावानिति । अथ तदुक्तं पर्युदासलक्षणं दूषयितुमुपन्यस्यति । ननु नेदं लक्षणपरम् किं तूपसंहारत्वेन शङ्कितस्य पर्युदासस्योपसंहाराद्वैलक्षण्यमात्रकथनरूपमिति चेत् । अस्त्विदं कथमपि । पर्युदासस्थलेऽपि क्वचिदुपसंहारत्वं इष्यत एव । इदमभिप्रेत्याहास्तां तावदिति । द्वितीयं बाधकमुपसंहरति तदिति । विकल्पप्रसक्त्या पर्युदासाश्रयणमित्युक्तौ यदि पर्युदासाश्रयणेन विकल्पो निवारयितुं शक्यते तदैव । तदाश्रयणेऽपि विकल्पो दुर्निवारश्चेत् नञ आख्यातान्वय-

यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते । यथा नातिरात्रे षोडशिनं गृह्णातीत्यत्र । अत्र ह्यतिरात्रे षोडशिनं गृह्णातीति शास्त्रप्राप्तमतिरात्रे षोडशिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्युदासो नाश्रीयतेऽशक्यत्वात् यद्यत्र नञः षोडशिपदेन सम्बन्धः स्वीक्रियेत तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्तत्र चातिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधः । अत एवातिरात्रपदेन न नञः सम्बन्धः । अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधात् ।

अतश्चात्र पर्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते विकल्पोऽपि स्वीक्रियतेऽनन्यगतेः । अतश्चैतत्सिद्धम्—यत्र तस्य व्रतमित्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः, यथा न कलञ्जं भक्षयेदिति । यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः, यथा नातिरात्रे षोडशिनं गृह्णातीति ।

---

स्वाभाव्येन प्रतिषेध एव स्वीकर्तव्य इति सिद्ध्यति तदाह यत्र त्विति । अतिरात्रे तन्नामकसंस्थाकज्योतिष्टोमे । षोडशी ग्रहविशेषः । किमत्र नञः षोडशिपदेन सम्बन्धाङ्गीकारेण पर्युदास इष्यते किं वाऽतिरात्रपदेन ? नाद्य इत्याह यदीति । विरुद्धस्मृत्यादिकल्पितश्रुतेरप्रत्यक्षत्वात्तद्विरोधो नायुक्त इत्यतः प्रत्यक्षेति । न द्वितीय इत्याहात एवेति । एवं धातुना नञन्वयेऽपि अभावार्थकत्वे कर्तव्यत्वाभावादविधेयत्वम् । अग्रहणसङ्कल्पविधौ चान्यत् सङ्कल्प्यते, अन्यदनुष्ठीयत इति स्यात् । ग्रहणव्यतिरिक्तस्य कर्तव्यत्वविधाने चात्रोक्त एव विधिविरोध इति ध्येयम् । अनन्यगतेः गत्यन्तराभावात् । एवं क्वचिन्निषेधाभावं (पर्युदासं) तदपवादं च निरूप्य निषेधस्थलमुपसंहरति अतश्चेति । गृह्णातीत्येतत्सिद्धमित्यन्वयः । एवं च नञ्घटितवाक्येष्वपि पर्युदासवाक्यस्य विधिकोटिप्रविष्टत्वात्तदतिरिक्तस्य निषेधापरपर्यायस्यैव पूर्वोक्तमनर्थहेतुत्वबोधनेन सार्थक्यं बोध्यम् ।

एतावांस्तु विशेषः । यत्र विकल्पापादकः प्रतिषेधः, तत्र प्रतिषिद्ध्यमानस्य नानर्थहेतुत्वम् । उभयोरपि विधिप्रतिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः प्रसज्यते, प्राप्तिश्च रागतः, प्रतिषेधश्च पुरुषार्थस्तत्र निषिद्ध्यमानस्यानर्थहेतुत्वम् । यथा कलञ्जभक्षणस्य ।

दीक्षितो न ददाति न जुहोतीत्यादिषु तु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात् तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वम्, रागतःप्राप्त्य-

---

ननु विकल्पाङ्गीकारेण प्रतिषेधस्वीकारे प्रतिषिध्यमानस्यानर्थहेतुत्वम्, तस्यैव विधीयमानत्वेनार्थहेतुत्वमिति विरुद्धमापद्यते । अतोऽयमर्थहेतुरयमनर्थहेतुरिति नियामकाभावाद्याकुलमिदमित्याशङ्कायां, न सर्वस्यापि निषेधवाक्यस्य नरकादिदुःखात्मकानर्थहेतुतेत्याहैतावांस्त्विति । विकल्पापादकः विकल्पसम्पादकः । तत्र नातिरात्रे षोडशिनं गृह्णातीत्यादौ । तर्हि किमर्थं प्रतिषेध इति चेत्, एतदभावेऽपि क्रतोरङ्गाभावप्रयुक्तवैगुण्यं नास्ति, करणे तु विशेषतः फलमिति बोधनाय । अतो न तद्वैयर्थ्यम् । एवं चाविकल्पस्थले सर्वत्रानर्थहेतुतेति सिद्ध्यति । तत्रापि अनिष्टरूपानर्थहेतुत्वस्याविशिष्टत्वेऽपि न सर्वत्र दुःखात्मकानर्थहेतुता ; अपि तु यत्र पुरुषार्थत्वेन प्रतिषेधस्तत्रैवेत्याह यत्र त्विति । 'न विकल्पः प्रसज्यते' इत्येतावत्यनुपरम्य प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थ इत्युक्तम्, तत्र प्राप्तिश्च रागत इति किमर्थमित्यत्राह दीक्षित इति । तुल्यार्थत्वाभावेनेति । दीक्षितेन क्रतुमध्ये दानहोमादिकरणे क्रतुवैगुण्यमेव । न तु क्रतोर्बहिर्दानहोमादेः पुरुषापेक्षितपुण्यसम्पादकतया पुरुषार्थत्ववत् क्रतुमध्यकृतस्य तस्य पुरुषानिष्टदुःखकरपापापादकतया पुरुषार्थत्वमिति । तथा च यत्र न विकल्पः प्रसज्यत इत्येतावदुक्ताविदं ग्राह्यं स्यादिति तद्व्यावृत्तये प्राप्तिश्च रागत इत्युक्तमिति भावः । प्रतिषेधश्च

भावात् । रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्येपि नानर्थोत्पत्तिः । यथा स्वस्त्र्युपगमनादिप्रतिषेधे । रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिद्ध्यमानस्यानर्थहेतुत्वमिति दिक् । तत्सिद्धं निषेधानां पुरुषार्थानुबन्धित्वम् । एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम् ।.

प्रकृतमनुसरामः । तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यम्, एवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः

---

पुरुषार्थ इत्यस्यावश्यकतां दर्शयति रागत इति । तदनुष्ठानात् निषेधोल्लङ्घनेन तत्करणे सति । स्वेति । अनुमतस्यापि स्वस्त्रीसङ्गमस्य क्रतुमध्ये प्रतिषेधः । तथा च क्रतुमध्यपाठाद्यभावेन क्रतूद्देश्यकत्वासंभवेनानारभ्याधीतविधिवत् यत्र पुरुषोद्देश्यकत्वेन निषेधः तत्र सर्वत्रानर्थ इत्येव निष्कर्ष इत्याशयेनाह रागत इति । रागतः प्राप्तस्येत्यविवक्षितम् । पुरुषार्थत्वेन प्रतिषेध इत्येतावदेव निष्कृष्टम् । वैकल्पिकनिषेधक्रत्वर्थनिषेधयोः साफल्यप्रकारस्य स्पष्टमनुक्तत्वादाह दिगिति । निषेधसार्थक्यमुपसंहरति तदिति ।

अत्रामुत्र च दुःखदुर्विषपरीहाराय, सत्कर्मणां
साफल्याय हरिः स जातु विहितापेक्षाकृते च श्रुतौ ।
यानध्यापिपदादरेण भविनो भव्यान्निषेधानिमे
सारोद्धारपरेण सङ्कलनया सम्यग्विविच्योदिताः ॥

एवं 'स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मक' इत्यारब्धमर्थवादातिरिक्तभागसार्थक्यवर्णनमुपसंहरति एवमिति । सर्वस्य अर्थवादातिरिक्तस्य सर्वस्य । पुरुषार्थानुबन्धित्वम् पुरुषापेक्षितेष्टानिष्टप्राप्तिपरिहाररूपप्रयोजनवदर्थपर्यवसायित्वम् ।

प्रकृतम् शब्दभावनाया लिङुपात्ताया अपेक्षितेतिकर्तव्यतालक्षकत्वस्यार्थवादेष्वानर्थक्यानुपपत्त्या वर्णनम् । यथेत्यस्य प्रतिसम्बन्धि एव-

स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम्। ते चार्थवादा द्विविधाः विधिशेषा निषेधशेषाश्च। तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्त्वम्।

बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोऽरोदीदित्यादीनामर्थवादानां तु निषेध्यनिन्दकतयेति। अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते।

---

मिति। आनर्थक्यानुपपत्तेरित्यत्रान्वेति। ननु विधिमन्त्रादिव्यतिरिक्तः भवदुक्तार्थवादविलक्षणश्च 'सोऽरोदी'दित्यादिर्वेदभागोऽस्ति। न हि तेन किमपि कार्यमवगम्यते, न वा कस्यचित्स्तुतिः क्रियते। अतस्तस्येवास्यापि कुतो न वैयर्थ्यमिति शङ्कायां तस्याप्यर्थवादत्वेन प्रकृततुल्यत्वमिति वक्तुं विभजते ते चेति। बर्हिषि तद्वति बर्हिःशब्दस्य लक्षणा। याग इत्यर्थः। सोरोदीदिति। 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। यदश्रु अशीर्यत तद्रजतं हिरण्यमभवत्। पुराऽस्य संवत्सरात् गृहे रुदन्ति, यो बर्हिषि रजतं ददाती'ति कृत्स्नं वाक्यम्। स इत्यग्निरुच्यते। तस्यैवावयवव्युत्पत्त्या रुद्र इति नाम। निन्दकतयेति अर्थवत्त्वमित्यनुषज्यते। तथा च लक्षणया निन्दापरत्वान्न तेषामपि वैयर्थ्यमिति भावः। अतश्चेति। न चार्थवादशक्यार्थावगममात्रेणैव स्तुतेर्निन्दायाश्च मनसा गृहीततया तावतैव प्रवृत्त्याद्युपपत्तौ किमर्थं लक्षणेति वाच्यम्; लक्षणाऽभावे वाच्यार्थस्य विध्यन्वयासम्भवेनाम्नायस्य क्रियार्थत्वं व्याहन्यत इत्याशयात्। अतश्च वाच्यार्थावगत्या गृहीतस्तुतिलक्षकत्वमिति वाच्यार्थज्ञानाधीनज्ञानविषयत्वरूपसम्बन्ध एवेह लक्षणा। लक्षणा च बोध्यसम्बन्धः, न तु

तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्तव्यतात्वेन संबध्यते। परमप्रकृतं तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यिका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दी भावना लिङ्त्वांशेनोच्यत इति।

ननु केयं शाब्दी भावना। उच्यते। पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः। स एव विध्यर्थः लिङादिश्रवणेऽयं मां प्रवर्तयतीति नियमेन प्रतीतेः। यत्तु इष्टसाधनत्वं विध्यर्थ इति, तन्न। तथा सति इष्टसाधनमितिशब्दस्य विधिशब्दः पर्यायः स्यात्। न च पर्यायत्वं युज्यते। सन्ध्योपासनं ते इष्टसाधनं तस्मात्त्वं कुर्विति सह प्रयोगात्, पर्यायाणां च सह प्रयोगाभावात्। अतश्च व्यापारविशेष एव विध्यर्थः। स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः। वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तम्।

---

शक्यसम्बन्ध इति ध्येयम्। ग्रन्थादौ सा च लिङ्त्वांशेनोच्यत इत्यारब्धमुपसंहरति परमेति। परमप्रकृतमित्यस्य वक्ष्यमाणेत्यारभ्येतीत्यन्तेनोक्तं विशेष्यम्।

प्राग्विधेः शाब्दभावनार्थकत्वमित्येतावदेवोक्तम्। तत्र विशेषव्युत्पादनायारभते नन्विति। अत्र केषांचिन्मतमाह पुरुषेत्यादिना केचिदाचार्या इत्यन्तेन। अन्येषां मतमनूद्य दूषयति यत्त्विति। विधिशब्दो लिङादिः। पर्याय एकार्थकः। शब्दस्य पर्यायः तदुपस्थाप्यार्थोपस्थापकः। अभावादिति। न हि घटं कलशमानयेति कश्चित् प्रयुङ्क्त इति। प्रेरणापरपर्याय इति वक्ष्यमाणं लोकवेदसाधारणं धर्मं गूढं हृदि निधाय। लोके लिङादेः पुरुषाभिप्राय एव शक्तिग्रहात् शक्तिग्रहणस्य व्यवहारादिमूलकत्वात् वेदे स्वर्गादिवत् लिङादिव्युत्पादकवाक्याभावाच्च कथं शक्तिग्रहः? य एव लौकिकास्त एव वैदिका इति न्यायेन लोकप्रयुक्तानां वेदेऽर्थान्तरकल्पनं

ननु लोके शब्दनिष्ठे प्रेरणापरपर्याये व्यापारे शब्दप्रयोगाभावेन शक्तिग्रहाभावात्कथं तस्य विधिशब्दात्प्रतिपत्तिरिति चेत् सत्यमेतत्। तथाऽपि बालस्तावत्स्तन्यदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्तनाज्ञानजन्यत्वावधारणात्तद्विधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्तनाज्ञानमनुमिमीते ।

यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात्प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम् । तथाप्यन्यप्रेरितप्रवृत्तौ प्रवर्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेन प्रवर्तनाज्ञानस्यैवाध्यवसानम् ।

---

चायुक्तमिति लौकिकार्थ एव कश्चिद्वक्तव्य इति शङ्कते नन्विति । दानादाविति । प्रवृत्तेरित्यनेन सम्बध्यते । स्वेत्यादि । स्वाभिप्रायरूपा या प्रवर्तना तद्ज्ञानेत्यर्थः । प्रयोजकवाक्येति अनुष्ठापकपुरुषवाक्येत्यर्थः । प्रयोज्यवृद्धेति । अनुष्ठाप्यस्य नियोज्यस्य वृद्धस्य शब्दार्थव्युत्पत्तिमत इत्यर्थः । अनुमिमीत इति । अनुमानप्रयोगश्च—अयं प्रयोज्यवृद्धः परगतप्रवर्तनागोचरज्ञानवान् तदीयशब्दसमनन्तरभाविप्रवृत्तिमत्त्वात् मन्मातृवदिति । दृष्टान्ते परशब्देन मात्रपेक्षयाऽन्यस्य बालस्य ग्रहणम् । ननु प्रवृत्तिसामान्यं प्रति प्रवर्तनाज्ञानं न कारणम् । भोजनादौ स्वस्य जायमानायामपरप्रेरितायां प्रवृत्तौ व्यभिचारात् । इष्टसाधनताज्ञानं तु सर्वप्रवृत्तिसाधारणकारणम् । अतः काचित्कप्रवर्तनारूपकारणानुमानापेक्षया साधारणेष्टसाधनत्वानुमानमेव प्रयोज्यवृद्धप्रवृत्तावपि युक्तमित्याशयेन शङ्कते यद्यपीति । प्रवृत्तिसामान्यदर्शने एवमेव । प्रवृत्तिविशेषदर्शने तु विशेषकारणानुमानमेव युक्तम् । अत एव प्रवृत्तिमात्रमनुमाने हेतुतया नोक्तम् , अपि तु प्रयोजकशब्दश्रवणसमनन्तरभाविप्रवृत्तिरेवेत्याशयेन समाधत्ते तथाऽपीति । अन्य-

तच्च प्रवर्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति। तत्र चावापोद्वापाभ्यां प्रवर्तनायां विधिशक्तिमवधारयति। प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति। एवं च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्तनात्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण, तथैव शक्तिग्रहात्। विशेषरूपेण तु प्रतीतिर्लक्षणयैव।

एवं च वैदिकलिङादिश्रवणेऽपि प्रवर्तनासामान्यमेव प्रतीयते।

---

प्रेरितेति अन्यप्रयुक्तशब्दश्रवणसमनन्तरभावीत्यर्थः। आवाप आगम आवृत्तिः गामानयेः तण्डुलं पचेरित्यादौ। उद्वापस्त्यागो व्यावृत्तिः गामानयतीत्यादौ। एवं प्रवर्तनावाचित्वमुक्तम्। अथ वेदसाधारण्यसम्पादनाय सामान्याकारेण तद्वाचित्वं लोकेऽपि स्थापयति स चेति। प्रैषः प्रवृत्तप्रवर्तनम्। आदिपदेनातिसर्गविधिनिमन्त्रणादयो ग्राह्याः। अतिसर्गः कामचारानुज्ञा। व्यभिचारित्वादिति। यत्र प्रैषो न तत्र विधिः यत्र विधिर्न तत्र प्रैष इति प्रैषत्वादेरननुगतत्वादेकार्थपरत्वेऽन्यत्र प्रयोगायोगादिति। अनुगमकाकारसम्भवे प्रत्येकशक्त्यानन्त्यस्वीकारोऽपि न युक्त इत्यपि तात्पर्यम्। लक्षणयैवेति। यथा द्रव्यपदेन द्रव्यत्वेन घटप्रतीतावपि घटत्वेन रूपेण तत्प्रतीतिर्लक्षणयैव तथेति भावः। एवं चेत्यादि अयं भावः—लौकिकविविधप्रवर्तनासु व्यभिचारभिया यथा प्रत्येकं न शक्तिः तथा वैदिकशब्दनिष्ठव्यापारेऽपि तत्त्वेन न शक्तिः। यथा च प्रैषादितः प्रवृत्तिदर्शनेन तेषां सर्वेषामपि प्रवर्तनात्वकल्पना लोके। तद्वद्वैदिकलिङर्थश्रवणेन प्रवृत्तिदर्शनात्तस्यैव प्रवर्तनात्वस्य वैदिकार्थेऽपि कल्पना। अतश्च लोके वेदे च प्रवर्तनात्वेन रूपेण तद्बोध इति न लौकिकवैदिकभेदः। विशेषस्तु प्रैषादाविव प्रमाणान्तरावसेय इति। अभिधेति। 'अर्थात्मभावना

तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदेऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापार इति कल्प्यते । अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना । सैव च प्रवर्तनात्वेन रूपेण विध्यर्थ इति । अयमेव चार्थः—

'अभिधाभावनामाहुरन्यामेव लिङादयः'

इति वार्तिकस्य । अभिधीयते अनेनेति व्युत्पत्त्याऽभिधाशब्देन विधिशब्द उच्यते । तद्व्यापारात्मिका भावना लिङादिवाच्येति केचिदाचार्याः ।

अन्ये त्वाहुः । सत्यं प्रवर्तनासामान्यं विध्यर्थः । तथैव शक्तिग्रहात् । प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना । अपौरुषेये च वेदे प्रैषादेरसम्भवात्कश्चित्पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः । विधिशब्दाभिधेयप्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात् । तत्र कोऽसौ व्यापारविशेष इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते । तस्यापि प्रवृत्त्यनुकूलत्वात् । सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्तते । अन्यप्रेरितो यदीष्टसाधनतां न जानाति तदा नैव प्रवर्तते । स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव । अन्यथा विधेः प्रवर्तकत्वानुपपत्तेः । अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण विध्यर्थः ।

---

त्वन्या सर्वाख्यातेषु गम्यत' इत्युत्तरार्धम् । अर्थभूते आत्मनि वर्तमाना भावना अर्थात्मभावना । अर्थत्वं शब्दभिन्नत्वम्, लक्षणया लिङाद्याख्यातार्थत्वं वा । मण्डनमिश्रास्तु इष्टसाधनत्वं प्रवर्तनेत्याचक्षाणा अपि न तस्य तत्त्वेनार्थत्वं नैयायिका इवातिष्ठन्ते । अपि तु प्रवर्तनात्वेनैव रूपेण प्रतीयमाना प्रवर्तना नेष्टसाधनत्वातिरिक्ता केषांचिन्मत इव शब्दनिष्ठा काचिदिति निरूपयन्ति तदाह अन्ये त्विति । स्वतन्त्रप्रेरणावादेऽपि इष्टसाधनत्वातिरिक्तशब्दनिष्ठव्यापाररूपप्रेरणावादपक्षेऽपि ।

एवं च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति । किं च शब्द एको व्यापारः स्पन्दाद्यतिरिक्तः कल्पनीयः । तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा कारणत्वेन क्लृप्तस्य प्रवर्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वम्, शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम्, विधेश्च प्रवर्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्तनात्वेन रूपेण ज्ञातस्य विध्यर्थत्वकल्पनम् लाघवात् , अन्यनिष्ठत्वाच्च ।

---

आक्षिपेत्यस्य ज्ञानेऽन्वयः । लोकसिद्धमिति । लोके हि लिङादिना अन्यनिष्ठः स्वभिन्नपुरुषगत एवाभिप्रायरूपो व्यपार उच्यत इति । अक्लृप्तस्येति । स्वप्रवृत्तौ भोजनादिविषयिण्यामिष्टसाधनत्वमेव कारणत्वेन क्लृप्तम् । परप्रवृत्तौ च प्रयोजकपुरुषगताभिप्राय एव तथा । अतो नास्य व्यापारविशेषस्य कुत्रापि क्लृप्तत्वम् । अतो व्यापारः तत्र कारणतावच्छेदकं प्रवर्तनात्वं च कल्पनीयमिति भावः । शब्दस्य लिङादेः । परनिष्ठव्यापारो गुर्वादिगताभिप्रायरूपः । क्लृप्तस्येति । यत्र लिङ्बोध्यव्यापारत्वं तत्र परनिष्ठत्वमिति लौकिकलिङादौ व्याप्तिदर्शनादिति भावः । वरमित्यादि । स्वप्रवृत्त्यादाविष्टसाधनत्वं हेतुत्वेन क्लृप्तम् । एवं च वेदे प्रवर्तनात्वस्य कारणतावच्छेदकत्वे तदाश्रयप्रैषादीनां पुरुषगतानां तत्रासंभवे च सति स्वप्रवृत्त्यादिसाधारण्येन प्रवृत्त्यनुकूलतयेष्टसाधनत्वमुपस्थितं भवतीति स एव व्यापार इति युक्तमिति ।

ननु विधिर्हि पुरुषं यागादौ प्रवर्तयति । न च यागादेरिष्टसाधनत्वाभावे विधेः प्रवर्तकत्वं घटते इतीष्टसाधनत्वं विधिगतप्रवर्तकत्वान्यथानुपपत्तिकल्प्यमिहोत्रविश्वजिदादाविति सर्वमीमांसकोक्तम् । यदि विधिः प्रेरणारूपं स्वगतं व्यापारं नाह । कुतस्तर्हि तस्य प्रवर्तकत्वम् ? कुतस्तरां

न च विधेः प्रवर्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनात् प्रेरणानभिधाने च विधेः प्रवर्तकत्वाभावाद्धात्वर्थस्य समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यम्। प्रवर्तनाभिधानेनैव तत्प्रतेपि विधेः प्रवर्तकत्वात् विध्याभिहितस्य च प्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात् समीहितसाधनत्वाक्षेपकत्वात् ।

न चेष्टसाधनत्वस्य विध्यर्थत्वे सन्ध्योपासनं ते इष्टसाधनं तत् त्वं कुर्विति सहप्रयोगानुपपत्तिरिति वाच्यम्। इष्टसाधनत्वस्य विशेषरूपेण विधिनाऽनभिधानात् । प्रवर्तनात्वेन रूपेणाभिधानात् । सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः । पाञ्चालराजो द्रुपद इत्यादौ । तस्मात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण वि-

---

चेष्टसाधनत्वाक्षेपकत्वमित्याशङ्क्याह न चेति । प्रवर्तनाभिधानेनैवेति ।

अयमर्थः—किमिष्टसाधनत्वस्य विध्यर्थत्वे तस्य यागादिगतत्वेन विधिगतत्वाभावाद्विधेः प्रवर्तकत्वं न भवतीति प्रश्नः, किं वा साक्षादिष्टसाधनत्वस्योक्तत्वेन तदाक्षेपकत्वोक्तिर्न युक्तेति । नाद्यः, इष्टसाधनत्वस्य प्रवर्तनात्वेऽपि तद्बोधनस्यापि परम्परया प्रवृत्तिप्रयोजकत्वेन गामानयेति वाक्यं मां प्रवर्तयतीति लौकिकवाक्य इव वेदेऽपि लिङः प्रवर्तनाभिधायकत्वमेव प्रवर्तकत्वमिति सम्भवात् । नान्त्यः, इष्टसाधनत्वस्य विध्यर्थत्वेऽपि सामान्यरूपेणैव तदर्थत्वात्तत्त्वेन तस्याक्षेपोक्तियोगादिति । न च यागस्येष्टसाधनत्वाश्रयत्वेन यागो मां प्रवर्तयतीति प्रयोगोऽस्त्विति वाच्यम् यागस्य भावित्वेन तद्गतव्यापारस्य लडुपात्तवर्तमानकालकत्वबाधेन तथा प्रयोगासंभवात् । न च यागो मे प्रवर्तक इति प्रयोगापत्तिः ; तत्राप्यस्तीत्यध्याहारे बाधात् । यद्वेष्टापत्तिरेवेति ॥

सहप्रयोगासंभवमनूद्य वारयति न चेति । ननु सामान्यस्य विशेषापेक्षायां पाञ्चालराजो द्रुपद इत्यत्र विशेषप्रयोगः। न खलु विशेष उक्ते सामान्याकांक्षाभवति । अतस्सन्ध्योपासनं त इष्टसाधनमिति प्रथमं विशेषो

ध्यर्थः। सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना।

उक्तवार्तिकस्यापि अयमेवाभिप्रायः । अभिधीयते साऽभिधा समीहितसाधनता सैव प्रवर्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना तां लिङादय आहुरिति । यथाऽऽहुः—

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनामिति ॥

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इति । आख्यातत्वांशेनार्थी भावनोच्यते । ननु केयमार्थी भावना। कर्तृव्यापार इति चेन्न। यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः।

---

कत्यैवालमिति चेत् अतिरिक्तव्यापारवादिमतेऽपि किमर्थः प्रयोगः ? इष्टसाधनत्वाक्षेपार्थं हि लिङाव्यापारबोधनम् । प्रथमवाक्येनैवेष्टसाधनत्वं शाब्दं ज्ञातमिति व्यर्थं हि तन्मतेऽपि तद्वाक्यमिति। लिङ्कृतव्यापारबोधजनितेष्टसाधनताज्ञानमेव प्रवर्तकमिति चेत् अस्माकमपि लिङ्कृतेष्टसाधनताज्ञानमेव प्रवर्तकम् । एवं च तत्त्वं कुर्वित्यस्यावश्यकत्वे सन्ध्योपासनं त इष्टसाधनमिति व्यापारविशेषव्युत्पादनार्थमिति भावः । नन्वस्याश्शब्दनिष्ठत्वाभावे शाब्दीभावनेति कथं मीमांसकव्यवहार इत्यत्राह सैव चेति । तेन प्रवर्तनात्वेन। तथा च या लिङादिशब्दविशेषोपस्थाप्यैव सतीभावना भवति ; भावनात्वं प्रवृत्त्यनुकूलत्वं लभते सा शाब्दीभावनेति भावः । पुरुषप्रवृत्तिं भावयतीति भावनाशब्दार्थ उक्तः। पुंसामिति। इष्टाभ्युपायत्वात् इष्टसाधनत्वादन्योऽर्थः पुंसां क्रियाविषयकप्रवृत्तिजनको न भवति। प्रवर्तनेत्यस्य प्रवृत्तिहेतुधर्मोऽर्थः। अत इष्टसाधनत्वं प्रवर्तना भावनेत्यर्थः।

आदौ 'आख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते। सा च द्विविधा शाब्दी भावना आर्थी भावना चेत्युक्तम्। तत्र लिङ्त्वांशेन शब्दभावनोच्यत इतीदमिह निगमितम् । अथ परिशेषसिद्धमर्थभावनाया आख्यातत्वांशवाच्यत्वं विवेचयिष्यन्नाहाख्यातेति। कर्तृव्यापार इति। व्यापार

न चेष्टापत्तिः, तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेत्। अत्राहुः। सत्यं न यागो भावना किं तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः स भावना। स एव चाख्यातांशेनोच्यते। यजेतेत्याख्यातश्रवणे यागे यतेतेति प्रतीतेर्जायमानत्वात्।

यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन्, देवदत्तो गमनं करोतीति करोतिप्रयोगदर्शनात्, वातादिना स्पन्दमाने तु, नायं करोति किं तु वातादिनाऽस्य स्पन्दो जायत इति प्रयोगात्करोत्यर्थस्तावत्प्र-

---

एवार्थः। स च कर्त्रन्वितः सन् कर्तृव्यापारो भवतीति भावः। प्रत्ययार्थत्वाभावादिति। प्रत्ययार्थत्वे पौनरुक्त्यं स्यादिति भावः। न च विशेषधर्मपुरस्कारेण प्रकृत्यभिहितस्यैव व्यापारत्वरूपसामान्यधर्मपुरस्क्रिययाऽऽख्यातवाच्यतेति वाच्यम् विशेषे बुद्धे सामान्यजिज्ञासाभावेन तथोक्तेर्व्यर्थत्वात्। न चाख्यातार्थव्यापारस्य प्रकृत्यर्थयागाद्यनुकूलत्वस्वीकारादुभयोर्भेद एवेति शंक्यम्, तर्हि यागाद्यनुष्ठानौपयिकज्ञानसम्पादनकर्तर्यपि परम्परया यागजनकव्यापारसत्त्वेन यजत इति प्रयोगप्रसङ्गात्। न चान्वयव्यतिरेकाभ्यां यैर्व्यापारैःसह जन्यजनकभावकल्पना तत्समुदायोऽर्थ इति वाच्यम्, तादृशकलापस्यैकक्षणवर्तित्वाभावेन यजेत इति वर्तमानव्यपदेशायोगात्। न चैकैकस्तादृशो व्यापारो यथासम्भवं ग्राह्य इति शंक्यम्; यागादिरूपार्थज्ञानस्यापि तदनुष्ठानकारणत्वेन केवलं विदुष्यपि यजत इति निर्देशप्रसङ्गात्। अतो न व्यापारार्थकत्वमिति। न यागो भावनेति याग इति सामान्यतः कर्तृव्यापारोपलक्षणम्। यः प्रयत्नः स भावनेति यत्तच्छब्दघटनया, प्रयत्नमात्रमाख्यातार्थः स्वर्गेच्छाजनितत्वयागविषयकत्वादिकं पुनरुपलक्षणतयोक्तमत इति द्योतितम्। एवं करोतिपर्यायतयाऽपि यत्नार्थकत्वं वक्ष्यन् करोतेर्यत्नार्थकत्वं साधयति यश्चेति। प्रयत्नपूर्वकं गमनादिकं करोति प्रयत्नेन गमनादिकं निष्पादयति, प्रयत्नजन्यगमनादिमान् भवतीत्यर्थः। वातादिना स्पन्दमान

यत्नः । करोतिसामानाधिकरण्यं चाख्याते दृश्यते । यजेत यागेन कुर्यात्, पचति पाकं करोति, गच्छति गमनं करोतीति ।

अतश्च करोतिसामानाधिकरण्यात् प्रयत्नस्याख्यातवाच्यत्वम् । न च रथो गच्छतीति प्रयोगानुपपत्तिः, रथे यत्नाभावादिति वाच्यम् । वोढृश्वगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः ।

यन्मतेऽप्यन्योत्पादानुकूलं व्यापारसामान्यं भावना तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धेः रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति । अतश्च प्रयत्न एवार्थीभावना । यथाहुः—

प्रयत्नव्यतिरिक्तार्थी भावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ इति।

अन्ये त्वाहुः । भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना । यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । कुठारेण च्छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन् व्यापारे कृते कुठारेण छेदनं भवतीति । एवं यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत यस्मिन् व्यापारे कृते यागात् स्वर्गो भवतीति । स च व्यापारः क्वचिदुद्यमननिपातनादिः, क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः, कथंभावाकांक्षायां विशेषरूपेण पश्चादवगम्यते । अन्योत्पादानुकूलत्वेन सामान्यतस्त्वाख्यातादेव ।

---

इति वातादिजन्यस्पन्दवतीत्यर्थः । करोति सामानाधिकरण्यम् करोति समानार्थकत्वम् । यत्नाभावादिति । देवदत्तः करोतीत्यादौ देवदत्तपदस्य शरीरपरत्वपक्षे करोत्यर्थयत्नस्यावच्छेदकतयाऽन्वयवदिह शङ्कितुमपि न शक्यम् । रथस्य यत्नावच्छेदकत्वस्याप्यभावात् । व्यापारार्थकत्वादिनोऽप्यौपचारिक एव प्रयोग इत्याह यन्मत इति । न यागो भावना, नापि यागोत्पादानुकूल एव । किं तु यागादिजन्यफलोत्पादे परम्परया हेतुः यागादिकरणापेक्षितो व्यापारो भावनेति मिश्रमतमाह अन्ये त्विति । न च केवलं विदुषि यजते इति प्रयोगापत्तिः; अर्थज्ञानस्यासाधारणव्यापारत्वाभावात् । लकारार्थकालस्य धात्वर्थेऽन्वयाच्च । भावकेति भावयितुरित्यर्थः ।

रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते। रथस्तथागमनेन व्याप्रियते यस्मिन्व्यापारे कृते गमनात् ग्रामप्राप्तिर्भवतीति प्रतीतेः । न त्वत्र गमनमात्रमाख्यातार्थः तस्य धातुनोक्तत्वात् । तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरात्रा-न्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते । पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात् । उद्यम्य निपात्य कुठारेण च्छिनत्तीतिवत् ।

एवं देवदत्तः प्रयतत इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः। तस्य धातुनोक्तत्वात् । व्यापारविशेषापेक्षायां चेच्छादिः पश्चादव-गम्यते , उद्यमननिपातनवत् ।

---

व्यापारार्थकत्ववादी स्वमत औपचारिकत्वाभावं साधयति रथ इत्यादिना । अयं भावः––धात्वर्थेन फले साधनीये अपेक्ष्यमाणः सर्वोऽपि व्यपार आख्यातार्थः । गच्छतीत्यत्र गमनमुत्तरदेशसंयोगावाच्छिन्नक्रिया । तया ग्रामप्राप्तिरूपसंयोगसाधनाय पूर्वदेशविभागप्रयत्नादिरपेक्ष्यत इति स इहाख्यातार्थ इति । विभजनं विभागः संयोजनं संयोगः । यत्नार्थकत्व-वादिभिर्यतत इच्छति जानातीत्यादौ यत्नाद्यनुकूलयत्नाभावाल्लक्षणा स्वीकर्त-व्या । सास्माकं नेत्याह एवमिति । पश्चादवगम्यत इति आख्यातात् व्यापारत्वेन बुध्यते पश्चाद्विमर्शे सति इच्छात्वादिना तदवगम इति । इच्छ-तीत्यत्र ज्ञानम् , जानातीत्यत्र च तदनुकूलमनःप्रणिधानादिर्व्यापार इति ध्येयम् । ननु करोतिपर्यायत्वादाख्यातं यत्नार्थकमिति भ्रमः । विरुद्धो हेतुरि-त्याह करोत्यर्थ इति । करोतेराख्यातस्य च पर्यायत्वं सर्वसंप्रतिपन्नम् । अचे-तनकर्तृकाख्यातप्रयोगश्चैवम् ; रथो गच्छति, वातः स्पन्दत इत्यादेर्बहुलमु-पलम्भात् । अतो मुख्ये संभवत्यौपचारिकत्वस्यान्याय्यत्वादाख्यातस्यानु-गतव्यापारार्थकत्वे सिद्धे तत्पर्यायतया करोतिरपि तदर्थक एव सिद्ध्यति । कथञ्च क्रियासामान्यवाचिनः करोतेरचेतनेष्वसम्भावितः प्रयोग इति भावः।

तथा च सर्वत्रानुगतत्वादन्योत्पादानुकूलव्यापारसामान्यमेवा- ख्यातार्थः, न तु प्रयत्नमात्रम् । रथो गच्छति देवदत्तः प्रयतत इत्यादिषु तदभावात् । न चात्रौपचारिकत्वं वक्तुं युक्तम्, मुख्ये सम्भवति तस्यान्याय्यत्वात् । करोत्यर्थोऽप्यन्योत्पादानुकूलो व्यापार एव न प्रयत्नमात्रम्, करोतेश्चेतनाचेतनकर्तृकाख्यातसामानाधिकर- ण्यादिति । तत्सिद्धमन्योत्पादानुकूलो व्यापार आर्थी भावनेति ।

सैव चाख्तांशेनोच्यते भावयेदिति । तस्याश्च भाव्याकांक्षायां स्वर्गादि भाव्यत्वेन सम्बध्यते । करणाकांक्षायां यागादिः करणत्वेन- सम्बध्यते । प्रयाजादय इतिकर्तव्यतात्वेन । एवं च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात्सिद्धं यागादेर्धर्मत्वं प्रयोजनमुद्दिश्य वेदेन विहितत्वादिति ।

सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः । श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः । न च तदर्पणबु- द्ध्याऽनुष्ठाने प्रमाणाभावः ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

इति स्मृतेः । अस्याश्चाष्टकादिस्मृतिवत् प्रामाण्यादित्यन्यत्र वि- स्तरः ॥

---

एवं परमप्रकृतस्य धर्मलक्षणस्य समन्वयाय तदनन्तरेण कृत्स्नेनै- तावता प्रबन्धेन 'यजेत स्वर्गकाम' इत्यादौ शाब्दबोधप्रक्रियामुपवर्ण्य लक्षणं समन्वितं दर्शयन् धर्मत्वमुपसंहरति एवं चेति । कर्मणां तात्त्वि- कमुपयोगं वक्ष्यन्नाह सोऽयमिति । श्रीगोविन्दार्पणबुद्ध्या श्रीगोवि- न्दार्पणरूपया बुद्ध्या । अस्य कर्मणः श्रीगोविन्द एव प्राधान्येन कर्ता भोक्ता समाराध्यश्चेति बुद्ध्याऽर्वाचीनफलाभिसन्धिविधुरया । अत्र श्रीगो- विन्देति निर्देशात् श्रियो गोविन्दस्य च तुल्यं समाराध्यत्वादिकमप्यध्यवस्यति । ननु स्मृतिरियं कथं प्रमाणम् ? अश्रुतित्वादित्यत्राहास्याश्चेति । अनुपल-

क्वाहं मन्दमतिः क्वेयं प्रक्रिया भाट्टसंमता ।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः ॥
ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः ।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥

इति श्रीमदनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्यायप्रकाशनामकं मीमांसाप्रकरणं समाप्तम् ॥

श्रीरस्तु ।



---

अथश्रुतिविरोधायाः स्मृतेराचारस्य च प्रामाण्यमष्टकादिस्मार्तादिधर्मोदाहरणेन स्मृतिपादे निर्णीतं तत्रैव द्रष्टव्यम् । स्मृतेः प्रत्यक्षपरिकलितसकलश्रुत्यर्थ-परमर्षिप्रणीततया श्रुतिमनुमाय प्रमाणता, आचारस्य च स्मृतिम् ततः श्रुतिं चानुमायेति तत्रैव विस्पष्टमिति संक्षेपः ।

एवं कुमारिलभट्टपरिष्कृतपूर्वमीमांसाप्रक्रियायां सुखप्रवेशौपयिकं सरलसन्दर्भं प्रकरणं प्रणीय प्रबन्धसमाप्तौ नैच्यं गौरवं उपकारं चानुसन्धत्ते क्वाहमिति । गोविन्दगुरुपादयोरिति गोविन्दस्य पादयोः गुरोश्च पादयोरित्यर्थः । अनेन च—

परा भक्तिर्देवे भवति च गुरौ चेदनवधि-
र्मनीषा निर्दोषा चुलकयति तत्त्वार्थमखिलम् ।
अतोऽर्थ्या धीरर्थ्या यदि, चरत धर्म्ये बहुफले
पथीति प्राज्ञोऽयं प्रणतगुरुदेवः स्फुटयति ॥

भक्ताग्रेसरोऽयमुक्तरीत्या वाचिकं धर्ममिमं श्रीगोविन्दे समर्पयति ग्रन्थरूप इति ॥

संप्रति काश्यां जयतां श्रीचिन्नस्वामिशास्त्रिपादानाम् ।
अयमहमन्तेवासी तत्सेवातन्त्रतन्त्रविज्ञानः ॥

पथ्यास्वाद्यपवित्रसह्यतनयापाथःपरिष्वङ्गिणी
प्रख्याता निरवद्यविद्यपरिषत्संपत्समृद्ध्योन्नता ।
श्रीमत्पञ्चनदस्थसंस्कृतकलाशाला विशालान्तरा
यत्सौकर्यमिह व्यधादहमतोऽप्यस्यां कृतज्ञोऽधिकम् ॥

चात्स्यः सच्चक्रवर्ती विमलगुणनिधेश्चक्रवर्त्यार्यसूरेः
सूनुः साहित्यमर्मस्फुटविदधिगतो यः शिरोमण्यभिख्याम् ।
तर्के वेदान्तशास्त्रेऽप्यधिकपरिचयः प्राक् प्रवृद्धेऽपि मध्ये
क्षीणे भूयः प्रचारं भजति च कुतुकं तन्त्र इत्थं बिभर्ति ॥

विशिष्टेष्वपि तन्त्रेषु विनीतो वीरराघवः ।
आपदेवकृतं न्यायप्रकाशं व्याकरोदिति ॥

विश्राणनाय भजतां परमार्थबुद्धे-
स्संरक्षणाय कुलदैवतया जगत्याः ।
रूपं हयाननरमानिलयादि भव्यं
बिभ्रत्स एष भगवान् मुदमत्र धत्ताम् ॥

**मीमांसासुधास्वादः सम्पूर्णः ।**

शुभमस्तु ।



